# BIBLIOTHECA INDICA:

A

COLLECTION OF ORIENTAL WORKS

PUBLISHED UNDER THE SUPERINTENDENCE OF THE

ASIATIC SOCIETY OF BENGAL.

NEW SERIES

Nos. 356, 361, 365, 366, 369, and 371.

---

# Sáma Veda Sañhitá,

WITH THE COMMENTARY OF

SA´YAṆA A´CHA´RYA.

EDITED BY

SATYAVRATA SA´MAS´RAMI´.

EDITOR OF THE HINDU COMMENTATOR.

---

VOL. IV.

---

CALCUTTA.

PRINTED BY N. K. SIRCAR, AT THE GAṆES´A PRESS.

1877.

Digitized by Google

# सामवेदसंहिता

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहिता,

श्रीलश्री

वङ्गदेशीयासियाटीक्-समाजाभ्यर्थनया

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण

वङ्गसामगेन

टीकिता यथावसरं शोधिता च।

चतुर्थो भागः।

॥ उत्तरार्च्चिकः ॥

चतुर्थादि-प्रपाठक-षष्ठात्मकः ॥

कलिकाता

गणेशयन्त्रे मुद्रितः।

अब्दाः १८९४।

Digitized by Google

# ॥ मन्त्राणामकारादिक्रमेण सूची ॥



Digitized by Google

मन्त्रप्रतीकम् पृष्ठम्



Digitized by Google

Digitized by Google

Digitized by Google

मन्त्रप्रतीकम् ... पृष्ठम्



Digitized by Google

Digitized by Google

Digitized by Google

| मन्त्रप्रतीकम् | पृष्ठम् |
| --- | --- |
| त्रिरस्मै सप्त ( ६, २, १९, १ = ज ८, १, ११ ) ... ... | ४९८ |
| त्वंयविष्ठ ( ५, १, १८, ३ = ज ५, १, ११ ) ... ... | २५० |
| त्वंवरुण उत ( ४, २, ९, ३ = ज० ) ... ... ... | २०० |
| त्वं बलस्य ( ५, १, २०, २ = ज ५, १, १३—११, २, २० ) ... | २५६ |
| त्वं विश्वस्य ( ४, १, १०, २ = ज परिस्वानो गिरिष्ठाः ) ... | ९३ |
| त्वं सुतो मदिन्तमो ( ५, २, १६, १ = ज त्वं सोमासि धारयुर् ) ... | ३४१ |
| त्वं सुष्वाणो अद्रिभिर् ( ५, २, १६, २ = ज " ) ... ... | " |
| त्वं सूर्ये न आ ( ४, १, ४, ५ = ज० ) ... ... ... | १५ |
| त्वं सोमासि धारयुर् ( ५, २, १६, १ = ज० ५, २, ११—१२—१३—१४—१५ ) | ३४१ |
| त्वं हि नः पिता ( ४, २, १३, २ = ज ४, १, १८ ) ... ... | १५८ |
| त्वं हि राधसस् ( ५, २, १५, २ = ज ५, २, १० ) ... ... | ३३९ |
| त्वं हि शश्वतीनाम् ( ५, १, १९, ३ = ज ५, १, १२ ) ... ... | २५३ |
| त्वं हि शूरः सनिता ( ६, २, २०, ३ = ज २१, १ १६ ) ... ... | ५१० |
| त्वमिन्द्राभर ( ४, २, १३, १ = ज ४, १, १८ ) ... ... | १५७ |
| त्वमग्ने यज्ञानां ( ६, २, १६, १ = ज० ) ... .. | ५४९ |
| त्वमग्ने सप्रथा ( ६, २, १०, ३ = ज० ) ... ... ... | ४७१ |
| त्वमिन्द्र यशा ( ६, २, १२, १ = ज ७, २, १८—१६, २, ७—१८, २, १४ ) | ४७६ |
| त्वमीशिषे सुतानाम् ( ६, १, ३, ३ = ज० ) ... ... | ३९५ |
| त्वां यज्ञैरवीवृधन् ( ४, १, ४, ९ = ज० ) ... ... | १६ |
| त्वां विश्वे अमत्सन ( ४, २, १, २ = ज० ) ... ... ... | १२४ |
| त्वां शुष्मिन् ( ४, २, १३, ३ = ज ४, १, १८ ) ... ... | १५८ |
| त्वे क्रतुमपि ( ६, ३, १७, १ = ज १३, २, १२ ) ... ... | ५५६ |
| त्वे विश्वे सजोषसो ( ४, १, १७, ३ = ज परिस्वानो गिरिष्ठाः ) ... | ९४ |
| दिवः पीयूषम् ( ५, १, ११, ३ = ज अध्वर्यो अद्रिभिः ) ... | २०३ |
| दिवो धर्तासि ( ५, १, १७, ३ = ज ५, १, ९ — २१, २, ८ ) ... | २४७ |
| दिवो नाभा ( ५, १, ४, ४ = ज० ) ... ... | १८६ |
| दीर्घं ह्यङ्कुशं ( ४, १, १६, २ = ज० ) ... ... | ९१ |

Digitized by Google

Digitized by Google

मन्त्रप्रतीकम् पृष्ठम्



Digitized by Google

Digitized by Google

Digitized by Google

Digitized by Google

Digitized by Google

Digitized by Google

Digitized by Google

यस्य निश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ७ ॥

## ॥ अथ सप्तमोऽध्यायः प्रारभ्यते* ॥

तत्र

प्रथमखण्डे,† प्रथम-तृचे—

प्रथमा ।

१   २   ३ १ २    ३ १ २ ३ १<br>
ज्योतिर्यज्ञस्यपवतेमधुप्रियं<br>
२   ३   २   १   २    ३ २   ३ १ २<br>
पितादेवानाञ्जनिताविभूवसुः ।<br>
१   २   ७   १   २    ३ १ २   ३क २र<br>
दधातिरत्नꣳस्वधयोरपीच्यं<br>
३   १   २    ३ १ २   ३   १र   २र<br>
मदिन्तमोमत्सरइन्द्रियोरसः ॥ १‡ ॥

"यज्ञस्य" अग्निष्टोमादेः "ज्योतिः" दीपकः सोमः "प्रियम्" इन्द्रादीनां प्रियभूतं "मधु" मधुरसं "पवते" पूयते दशापवि-

---

* 'त्रिपवत्नौमिकमिदानीं षष्ठमहः'—इति वि० ।

† 'वयस्त्रिमद्दैवताष्टम्'—इति वि० ।

‡ ऋ० वे० ७, ३, १९, ५ ।



Digitized by Google

त्वच शोध्यतइत्यर्थः। एसो विशेष्यते—"पिता" पालकः "जनिता" फलस्य उत्पादकः "विभूवसुः" प्रभूतधनः तेन सम्पादयितुं शक्यत्वात् तादृशः सोमरसः "स्वधयोः" ["स्वधे"—इति द्यावापृथिव्योर्नाम (निघ० ३, ३०, १)] "अपीच्यम्" [—इति चान्तर्हितस्य (निघ० ३, २५, ६)] द्यावापृथिव्यो-र्मध्येऽन्तर्हितं "रत्नं" रमणीयं धनं "दधाति" स्थापयति यजमानेषु। स एव पुनर्विशेष्यते—"रसः" रसयिता "मदिन्तमः" मादयितृतमः "मत्सरः" स सोमः "इन्द्रियः" इन्द्रेण जुष्टः इन्द्रिय-वर्द्धको वा* ॥ १ ॥

अथ द्वितीया।

२ १ २ ३ १ २ ३क २र ३
अभिक्रन्दन्कलशंवाज्यर्षति

१ २ ३ २ ३ १ २ ३ २
पतिर्दिवःशतधारोविचक्षणः।

१ २ ३ १ ३ १ २
हरिर्मित्रस्यसदनेषुसीदति

३ १ २ ३ १ २ ३ १ २
मर्मृजानोविभिःसिन्धुभिर्वृषा ॥ २† ॥

* 'ज्योतिर्यज्ञस्य पवते—ज्योतिरुज्ज्वलं दीप्तिकरं यज्ञस्य पवते पूयते मधु-रसं * * * पिता देवानां जनिता विविधेन प्रकारेण जनिता। कथम्? "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः"—अनेन प्रकारेण जनिता। विभुर्विश्वस्य भावयिता। दधाति धारयति रत्नं स्वधयोः अपीच्यम् अविनाशि मदिन्तमः मत्सरः भक्षणीयः इन्द्रियः इन्द्रस्य सभूतः रसः वीर्यम्'—इति वि०।

† ऋ० वे० ७, ३, १४, १।

Digitized by Google

सोमः "वाजी" वेजनवान् गमनवान् [यद्वा, अन्नसदृशः] "अभिक्रन्दन्" अभितः शब्दं कुर्वन् "कलशं" द्रोणकलशम् "अर्षति" गच्छति। कीदृशः "दिवः" द्योतमानस्य अन्तरिक्षस्य दशापवित्रलक्षणस्य "पतिः" पालकः स्वामी यद्वा द्युलोकस्य स्वामी [दिवि हि सोमउत्पन्नः "तृतीयस्या मितो दिवि सोम आसीत्"—इति श्रुतेः] "शतधारः" परिमित-धार-पेतः "विचक्षणः" विशेषेण द्रष्टा* 'हरिः" हरितवर्णः सोमरसः "मित्रस्य" मित्रवर्द्धितकरस्य यज्ञस्य "सदनेषु" "सीदति" निषण्णो भवति†। कीदृशः सन्? "सिन्धुभिः" स्यन्दन-साधनैः अविरोमभिः दशापवित्रावयवैः‡ "मर्मृजानः" शोध्यमानः "वृषा" वर्षकः फलानाम् ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३
अग्रेसिन्धूनाम्पवमानोअर्ष
१ २ ३ १ २ ३ १ २ ३ १ २
स्यग्रेवाचोअग्रियोगोषुगच्छसि।
१ २ ३ १ २ ३ १ २ ३ १ २
अग्रेवाजस्यभजसेमहद्धनꣳ
२ २ १ १ २
स्वायुधःसोतृभिःसोमसूयसे ॥ ३¶ ॥ १

* 'विश्वस्य द्रष्टा'—इति वि०।

† 'मित्र आदित्यविशेषः। अथवा मित्रस्य यजमानस्य सखा स्तुत्यर्थ-लक्षणेन सम्बन्धेन तस्य दृष्टेषु द्रोणकलशप्रभृतिषु सीदति'—इति वि०।

‡ 'अविभिः—तृतीयाबहुवचन मिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्। अवेः सम्भूतेन दशापवित्रेण सिन्धुभिः उदकैरित्यर्थः'—इति वि०।

¶ ऋ० वे० ७, ३, १४, २।

हे सोम! त्वं "सिन्धूनां" स्यन्दन-स्वभावाना मुदकानाम् "अग्रे" पुरस्तात् "पवमानः" पूयमानः सन् "अर्षसि" गच्छसि वृष्ट्योदकं जनयितु माहुतिद्वारान्तरिक्षे गच्छसीत्यर्थः। तथा "वाचः" माध्यमिकाया अपि "अग्रियः" ग्राह्यः पूज्यः सन् गच्छसि तथा "गोषु" रश्मिषु तेषामग्रे गच्छसि तथा "वाजस्य" अन्नस्य लाभायेति शेषः। तदर्थं "महाधनं" सङ्ग्रामं "भजसे"* सेवसे। कीदृशः सन्? "स्वायुधः" शोभन-प्रहरण-साधनायुधः। हे सोम! तादृशस्त्वं "सोतृभिः" अभिषुण्वद्भिः अध्वर्य्वादिभिः "सूयसे"† अभिषूयसे॥ ३॥ १

१ ५ ४ ५ र ४र५र
॥ मरुतान्धेनु॥ ज्यो२३४। तिर्यज्ञस्यपवतेमधौ।
४ ५ १ र रर र १ र१
होप्रायाम्। पितादेवानाञ्जनिता। विभूवासू२ः।
१र २ र १ २ २
दधातिरत्न२ंस्वधयोः। औगीचायार३म्। मादिन्ता२३
५ ११२ १ १ ४ १
४माः। मत्सरइन्द्रीयो३रा५सा६५६ः॥(१) आ २ ३ ४।
५ ४ ५र ४ ५र ४ ५ १
भिक्रन्दन्कलशंवाजियौ। होषाताथि। पतिर्दिवःशत
र १ १ १ २र
धारो। विचक्षाणा२ः। हरिर्मित्रस्यसदनायि। षुसी
१ २ ३ ५ ३ १ २ १ २
दाता२३यि। मार्म्मृजा२३४नाः। अविभिःसि। धूभा

*, † "भजते"—इति "पूयते"—इति च ख०-पाठः।

३यिर्वा५र्षा६५६ ॥(२) आ २ ३ ४। अ॒ सिन्धूनाम्पवमान

औ। होर्षासायि। अग्रे वाचोअग्रियोगो। षुगच्छा

सा २यि। अग्रेवाजस्यभजसायि। महद्धाना २ ३ म्। 

सूवायू २ ३ ४ धाः। सोतृभिःसो। मासू ३ या ५ साइ

५ ६ यि(३) ॥११* ॥ [१]

॥ वरुणसाम ॥ ज्योतिर्य्यं। आ ३ स्यपवतोमधुप्रि

याम्। पितादेवानाञ्जनिताविभूवमू२३र्वोयि। दधा

तिरत्नᳪस्वधयोः। अपीचियार२३म्। चोयि। मदायि

न्तार२३माः। मात्सरः। इन्द्रि। यो २ ३। रसाउवा

३ ॥(१) अभिक्र। दा३न्कलशंवा। जियर्षतायि। प

तिर्द्दिवःशतधारोविचक्षणा २ ३ चोयि। हरिम्मित्रस्यसद्

ने। षुसीदता२३यि। चोयि। मर्म्मजा२३नाः। आ

* ऊ० गा० ८प्र० १ख० ११गा०।

२ १ २ ४ ३
विभिः। सिन्धुः। भा२३यिः। वृषाउवा३॥(२) अग्रे

५ ४ २ २ ४ र ५ १ र र र
सि। धू३नाम्पवमानः। अर्षसायि। अग्रेवाचोअग्रि

र र १ र र र
योगोषुगच्छसा२३यिद्दोयि। अग्रेवाजस्यभजसे। मह

१ २ २ २ १ २ १र
हुना२३म्। हायि। सुवायू२३धाः। सोतृभिः। सो

१ २ १ १ १ २ १र
म। सू२३। यसाउवा३। ए३। इन्दुःसमुद्रमुर्विया

१र २१११
विभाती२३४५(३)॥ २*॥ [२] १

अथ द्वितीय-तृचे—

प्रथमा।

१ २ ३ १ २ १ ३ २ १र २र ३ २
असृग्रतप्रवाजिनोगव्यासोमासोअश्वया।

३ १ २ ३ १र २र
शुक्रासोवीरयाशवः॥ १*॥

"वाजिनः" बलवन्तः "शुक्रासः" दीप्ताः "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्यया"‡ यजमानस्य गवेच्छया तथा

* ऊ० गा० १३प्र० १ख० २सा०।

† छ० आ० ५, २, ५, ६ (२भा० ७६४पृ०)=ऋ० वे० ७, १, १६, ४, ५।

‡ "गव्या"—इति ऋ०-पाठः।

"अश्वया" अश्वेच्छया तथा "वीरया" वीराः पुत्र-भृत्यादयः तेषा मिच्छया "प्र असृक्षत" प्रासृज्यन्त रसान्वा विसृज्यन्ते ॥१॥

अथ द्वितीया ।

२ १ २    ३१ २१ १ २ ३ १ २
शुम्भमानाऋतायुभिर्मृज्यमानागभस्त्योः ।
१ २ ३ १ ३ २ १ २
पवन्ते वारे अव्यये ॥ २* ॥

"ऋतायुभिः" यज्ञेच्छुभिः अध्वर्यु-प्रभृतिभिः "शुम्भमानाः" अलङ्क्रियमाणाः "गभस्त्योः" हस्तयोः हस्ताभ्यां† "मृज्यमानाः" शोध्यमानाः "वारे" वाले दशापवित्रे । कीदृशे? "अव्ये" अविमये "पवन्ते" पूयन्ते ॥ २ ॥

अथ तृतीया ।

१२   १२ ३   २ ३१ ३१   २   ३ २   ३१   २
तेविश्वादाशुषेवसुसोमादिव्यानिपार्थिवा ।
१ २ ३   १२    १२
पवन्तामान्तरिक्ष्या ॥ ३‡ ॥ २

"ते" सोमाः अभिषूयमाणाः "दाशुषे" हविः-प्रदात्रे यजमानाय "विश्वा" सर्वाणि "वसु" वासकानि गवादि-धनानि "आ

---

* ऋ० वे० ७, १, ३६, ५ ।

† "गभस्त्योः—गभस्तिभ्यां बाहुभ्यां । 'गभस्ती बाहू—इति बाहुनामसु पाठात्' —इति ऋ०-व्याख्या ।

‡ ऋ० वे० ७, १, ३७, १ ।

पवन्तां सर्वतः चरन्तु। वस्वित्युक्तं कथं वसूनां विश्वत्वमिति? उच्यते—"दिव्यानि" दिवि भवानि "पार्थिवा" पृथिवी-सम्बन्धानि "अन्तरिक्षा" अन्तरिक्षाणि, अन्तरिक्षे भवानि* एवमुक्त-प्रकारेण विश्वानीत्यर्थः॥ २॥ २

पवस्वेति-दशर्चं तृतीय-सूक्तं—

प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २
पवस्वदेववीरतिपवित्रꣳसोमरꣳह्या।
१ २ ३ १र २र
इन्द्रमिन्दोवृषाविश॥ १†॥

हे सोम! "देववीः" देवकामः‡ त्वं "रंह्या" वेगेन "पवित्रं" यथा भवति "अति पवस्व" अतिक्षर किञ्च हे "इन्दो" "वृषा" सेचकस्त्वं इन्द्रम् "आविश" प्रविश॥ १॥

अथ द्वितीया।

१ २ ३ १ ३ १ २ १ २ ३ १
आवच्यस्वमहिप्सरोवृषेन्दोद्युम्नवत्तमः।
१र २र ३ २
आयोनिन्धर्णसिस्सदः॥ २¶॥

---

* 'धनानीत्यनुषज्यते'—इति वि०।

† ऋ० भा० ६, १, ९, ४ (२भा प्र० ऋ०) वे० ६, ७, १८, १।

‡ 'देवानां भजमानः'—इति वि०।

¶ ऋ० वे० ६, ७, १८, २।

Digitized by Google

हे "इन्दो" सोम ! "वृषा" सेवकाभीष्टदाता वर्षकः "द्युम्नवत्तमः" यशस्वितमः "धर्णसि" धर्त्ता त्वं "मही" महत् "स्वरः" पानीयम् "अन्धः" अन्नम् "आवच्छस्व" अस्मान् प्रति आगमय किञ्च "योनिं" स्वकीयं स्थानम्* "आसदः" आसीद च ॥ २ ॥

अथ तृतीया ।

१ २    ३ १२ ३ १ २ ३ १ २ ३ १ २
अधुक्षतप्रियम्मधुधारासुतस्यवेधसः ।
३ १ २    ३ १ २
अपोवसिष्टसुक्रतुः ॥ ३† ॥

"सुतस्य" अभिषुतस्य "वेधसः" अभिलषितस्य विधातुर्यस्य "सोमस्य" "धारा" "प्रियं" प्रीतिकरं "मधु" अमृतम् "अधुक्षत" दुग्धे स "सुक्रतुः" सुकर्मा सोमः "अपः" "वसतीवरीः" "वसिष्ट" आच्छादयति ॥ ३ ॥

अथ चतुर्थी ।

३ १ २   ३ १२   १२   ३ १ २
महान्तन्त्वामहीरन्वापोअर्षन्तिसिन्धवः ।
१२  २२   ३ १ २
यद्गोभिर्वासयिष्यसे ॥ ४‡ ॥

हे सोम ! त्वं "यद्" यदा यज्ञे "गोभिः" गोविकारैः पयोभिः "वासयिष्यसे" आच्छादयिष्यसे तदा "महान्तं" गुणैः

---

* 'योनिं द्रोणकलशम्'—इति वि० ।

† ऋ० वे० ९, ७, १८, ३ ।

‡ ऋ० वे० ९, ७, १८, ४ ।



Digitized by Google

प्रह्वं "त्वा अनु" त्वामभि "सिन्धवः" स्यन्दमानाः "मही:" महत्यः "आपः" "अर्षन्ति" गच्छन्ति ॥ ४ ॥

अथ पञ्चमी।

३ २ ३ १ २   ३ २ ३१ २ ३ २
समुद्रोअप्सुमामृजेविष्टम्भोधरुणोदिवः।
१ २ ३ १ २   ३ २
सोमःपवित्रेअस्मयुः॥ ५* ॥

"समुद्रः" समुद्रवन्ति अस्माद्रसा इति समुद्रः "विष्टम्भः" "दिवः" स्वर्गस्य "धरुणः" धर्त्ता च "अस्मयुः" अस्मत्-कामः† "सोमः" "अप्सु" उदकेषु "मामृजे" मर्मृज्यते पवित्रेऽभिषिच्यते चेत्यर्थः ॥ ५ ॥

अथ षष्ठी।

१ २  ३ २ ३ १ २ ३ २  ३ १र ३र ३ २
अचिक्रदद्वृषाहरिर्महान्मित्रोनदर्शतः।
१र  ३र
सꣳसूर्येणदिद्युते ॥ ६‡ ॥

"वृषा" कामानां वर्षकः "हरिः" हरितवर्णः "महान्" सर्वोत्तमः "मित्रः न" यथा सखा तद्वत् "दर्शतः" दर्शनीयः यः सोमः "अचिक्रदत्" शब्दं करोति सोऽयं सोमः सूर्येण सह "सन्दिद्युते" समित्येकीभावे सूर्येण सह द्योतत इत्यर्थः ॥

"रोचते"—इति बह्वृचानां पाठः ॥ ६ ॥

---

* छ० आ० ६, १, २, १ ( २ भा० ५५ पृ० )=ऋ० वे० ६, ७, १८, ५।

† 'अस्मासु भक्तिमिच्छुः'—इति वि०।

‡ ऋ० वे० ६, ७, १९, १।

अथ सप्तमी।

१ २ १ २ २ १ २ २ १ २
गिरस्तइन्द्रओजसामर्मृज्यन्तेअपस्युवः।
२ ३ १ २ ३ १ २
याभिर्मदायशुम्भसे॥ ७* ॥

हे "इन्दो!" "ते" तव "ओजसा" बलेन "अपस्युवः" कर्मेच्छा-सम्बन्धिन्यः ताः "गिरः" स्तुतयः "मर्मृज्यन्त" शोध्यन्ते। "याभिः" "गीर्भिः" त्वं मदाय "चरन्" "शुम्भसे" अलङ्क्रियसे† ॥ ७ ॥

अथ अष्टमी।

१ २ १ २ ३ १ २ ३ १ २
तन्त्वामदायघृष्वयउलोककृत्नुमीमहे।
२ ३ १ २ ३ १ २
तवप्रशस्तयेमहे॥ ८‡ ॥

"लोककृत्नु" लोकस्य कर्त्तारं "तं त्वा" सोम "घृष्वये" शत्रूणां घर्षण-शीलाय¶ "मदाय" "ईमहे" याचामहे। हे सोम! पातमिति शेषः। किमर्थम्? इति, उच्यते— "तव" "महे" महते "प्रशस्तये" प्रशंसनाय॥ ८ ॥

---

* ऋ० वे० ६, ७, १९, २।

† 'शुम्भसे शोध्यसे'—इति वि०।

‡ ऋ० वे० ६, ७, १९, ३।

¶ 'घृष्वये—धर्षणार्थम्'—इति वि०।

Digitized by Google

अथ नवमी।

२ १ २ ३१ २ ३१ २३ २ ३ १

गोषाइन्दोनृषाअस्यश्वसावाजसाउत।

३ २ ३१ २ ३१

आत्मायज्ञस्यपूर्व्यः॥ ९* ॥

हे "इन्दो" क्लिद्यमान-सोम! "यज्ञस्य" ज्योतिष्टोमादेः "पूर्व्यः" पुराणः नित्यः आत्मा स्वरूपभूतः [ सोमस्य यज्ञस्वरूपत्वं प्रसिद्धम् ]। तादृशस्त्वं "गोषा" अस्मभ्यं गवां दाता "असि" भवसि, "नृषा" नृणां पुत्र-भृत्यादीनां दातासि, "अश्वसाः" अश्वानां दाता चासि, "उत" अपि च "वाजसा" अन्नानां दाता चासि॥ ९॥

अथ दशमी।

३ १ २ ३ १र २र ३ १ २

अस्मभ्यमिन्दविन्द्रियम्मधोःपवस्वधारया।

३ १ २ ३ १ २

पर्ज्जन्योवृष्टिमाँइव॥ १०† ॥ ३

हे "इन्दो" सोम! "इन्द्रियम्" इन्द्रेण जुष्टम् इन्द्रियस्य वीर्यस्य वा वर्द्धकं रसं "मधोः मदकरस्य अमृतस्य "धारया" "पर्जन्योवृष्टिमाइव" यथा वर्षवान् पर्जन्यो मेघः तथा "अस्मभ्य" मेधातिथिभ्यः "पवस्व" क्षर॥ १०॥

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठस्याध्यायस्य प्रथमः खण्डः॥ १॥ ३

* ऋ० वे० ६, ७, १९, ५।

† ऋ० वे० ६, ७, १९, ४।

Digitized by Google

अथ द्वितीय-खण्डे—

सनाचेति-द्यृचे प्रथमे सूक्ते, प्रथमा ।

१ २ २ १ १ २ १ १ २ २ १ २ १ १ २

सनाचसोमजेषिचपवमानमहिश्रवः ।

१ २ ३ १ २

अथानोवस्यसस्कृधि ॥ १* ॥

हे "महिश्रवः" महद्यशः ! "पवमान" सोम ! "सन"† अस्मद्यागे यजनीयान् देवान् भज "जेषि च" याग-विघ्नकारिणो राक्षसांश्च जय । "अथ" देवान् प्राप्य राक्षसांश्च जित्वा अनन्तरं "नः" अस्मान् "वस्यसः" श्रेयसः‡ "कृधि" कुरु श्रेयोऽस्मभ्यं देहीत्यर्थः ॥ १ ॥

अथ द्वितीया ।

२ ३ २ ३ २३ १ १ २ ३ १ २

सनाज्योतिःसनास्वा३र्विश्वाचसोमसौभगा ।

१ २ ३ १ २

अथानोवस्यसस्कृधि ॥ २¶ ॥

हे सोम ! त्वं "ज्योतिः" तेजः "सन" अस्मभ्यं प्रयच्छ । अपिच "स्वः" स्वर्गं "सन" अस्मभ्यं देहि । "विश्वा" विश्वानि "सौभगा" सौभाग्यानि "च" सन सिद्धमन्यत् ॥ २ ॥

---

* ऋ० वे० ६, ७, २२, १ ।

† 'सना-शब्दः सदावाची । सदा जेषि च शत्रून्'—इति वि० । सायण-मते तु 'सना'—इति क्रियापदम् "द्व्यचोऽतस्तिङः (६, ३, १३५) "—इति दीर्घः । विवरणकार-मते तु सना सदार्थमव्ययमिति "निपातस्य च (६, ३, १३६)" —इति दीर्घः । मूले सर्वत्रैव दीर्घान्तः, व्याख्यानकाले त्वव्याख्येयं मूलान्त-प्रतीकमेव दृश्यते ; इयमेव मैथिलस्य व्याख्यातुः सर्वत्रेति बोध्यम् ।

‡ 'वस्यसः—वसनीयः'—इति वि० ।

¶ ऋ० वे० ६, ७, २२, २ ।

Digitized by Google

अथ तृतीया।

२ ३ १ २३ २उ ३ १२ ३१२
सनादक्षमुतक्रतुमपसोममृधोजहि।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ३† ॥

हे सोम! त्वं "दक्षं" बलं "सन" अस्मभ्यं देहि, "उत" अपिच "क्रतुं यज्ञं" सन, "मृधः" हिंसकान् शत्रून् "अप जहि" मारय। शिष्टमन्यत्॥ ३॥

अथ चतुर्थी।

१ २ ३ २ ३१२ ३ १ २ ३१ २
पवीतारःपुनीतनसोममिन्द्रायपातवे।
१ २ ३ १ २
अथानोवस्यसस्कृधि॥ ४‡ ॥

हे "पवीतारः" सोमस्य शोधयितार ऋत्विजः! "सोमं" "पुनीतन" पावयत दशापवित्रेण शोधयत किमर्थम्? "इन्द्राय पातवे" इन्द्रस्य पानाय। गतमन्यत्॥ ४॥

---

† ऋ० वे० ६, ७, ११, ३।

‡ ऋ० वे० ६, ७, ११, ४।

Digitized by Google

अथ पञ्चमी।

१२ ३१२३१ २ ३२ ३१२ ३२ १ २
त्वꣳसूर्येनआभजतवक्रत्वातवोतिभिः।
१ २ ३१ २
अथानोवस्यसस्कृधि॥ ५*॥

हे सोम! त्वं "तव क्रत्वा तव ऊतिभिः" त्वत्कर्त्तृकाभी-
रक्षाभिश्च "नः" अस्मान् "सूर्ये" "आभज" प्रापय। सिद्ध-
मन्यत्॥ ५॥

अथ षष्ठी।

२३१२ २ ३१ २ ३१२
तवक्रत्वातवोतिभिर्ज्योक्पश्येमसूर्यम्।
१ २ ३ १
अथानोवस्यसस्कृधि॥ ६†॥

हे सोम! "तव" "क्रत्वा" प्रज्ञानेन "तव ऊतिभिः" पालनैश्च
"ज्योक्" चिरं पश्येम सूर्यं पश्याम द्रक्ष्यामः। सिद्धमन्यत्॥ ६॥

अथ सप्तमी।

३क२र ३१ २३१२ ३ २
अभ्यर्षस्वायुधसोमद्विबर्हसꣳरयिम्।
१ २ ३ १ २
अथानोवस्यसस्कृधिः॥ ७॥

हे "स्वायुध" शोभनायुध सोम! त्वं "द्विबर्हसं" द्वयोर्द्यावा
पृथिव्योः स्थानयोः परिवृढं "रयिं" धनम "अभ्यर्ष" स्तोतॄन्-
अभिगमय। सिद्धमन्यत्॥ ७॥

---

* ऋ० वे० ६, ७, २२, ५।
† ऋ० वे० ६, ७, २२, १।
‡ ऋ० वे० ६, ७, २२, २।

Digitized by Google

अथाष्टमी।

१ २ १ २ ३ १ २ ३ १ २ ३ १
अभ्या३र्षानपच्युतोवाजिन्त्समत्सुसासहिः।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ८* ॥

हे सोम! "समत्सु" सङ्ग्रामेषु "अनपच्युतः शत्रुभिरनाहतः "सासहिः" शत्रूणामभिभविता† त्वम् "अभ्यर्ष" अभिगच्छ क्षर। गतमन्यत् ॥ ८ ॥

अथ नवमी।

१ ३ २ ३ १ २ ३ १ २
त्वांयज्ञैरवीवृधन्पवमानविधर्मणि।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ ९‡ ॥

हे "पवमान" शोध्यमान सोम! त्वां "विधर्मणि" विविध-फलस्य धारके यज्ञे "यज्ञैः" यज्ञ-साधनैः "स्तोत्रैः" "अवीवृधन्" यजमाना वर्द्धयन्ति। गतमन्यत् ॥ ९ ॥

अथ दशमी।

३ १ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २
रयिन्नश्चित्रमश्विनमिन्दोविश्वायुमाभर।
१ २ ३ १ २
अथानोवस्यसस्कृधि ॥ १०¶ ॥ ४

* ऋ० वे० ६, ७, २३, ३।

† 'सासहिःसाधनसमाप्तः'—इति वि०।

‡ ऋ० वे० ६, ७, २३, ४।

¶ ऋ० वे० ६, ७, २३, ५।

Digitized by Google

हे "इन्दो!" यागेषु क्रियमाण सोम! त्वं "चित्रं" नाना-विधम् "अश्विनम्" अश्ववन्तञ्च "विभ्वासु" सर्वगामिनं* "रयिं" धनं "नः" अस्मभ्यम् "आ भर" आहर। गतमन्यत् ॥ १० ॥ ४

तरत्समन्दीति चतुर्ऋचे द्वितीयसूक्ते—

प्रथमा†।

१ २ ३ १ २ १ २　३ १ २ ३ १ र　२र
तरत्समन्दीधावतिधारासुतस्यान्धसः।

२ ३ २ ३ १ २
तरत्समन्दीधावति ॥ १‡ ॥

"मन्दी" देवानां हर्षकरः स सोमः "तरत्" स्तोतृन् पाप्मनः सकाशात् तारयन् "धावति" दशापवित्रादधः क्षरति। तदेव दर्शयति—"सुतस्य" अभिषुतस्य "अन्धसः" देवानामन्नात्मकस्य सोमस्य धारा धावतीति। पुनरपि तदेवा-दात्यन्तादरार्थं "तरत्समन्दीधावति"—इति¶ ॥ [यहा ऽस्या ऋचो यास्केनोक्तोऽर्थो द्रष्टव्यः, तद्यथा—"तरति स पापं सर्वं मन्दीयं स्तौति धावति गच्छत्यूर्द्ध्वां गतिं धारासुतस्यान्धसो धाराभिषुतस्य सोमस्य मन्त्रपूतस्य वाचास्तुतस्य (निरु०१३,६)"—इति ॥ २ ॥

---

* 'विभ्वासुं—दीर्घाणुग्रीव एव आभर'—इति वि०।

† 'तरत्समन्दीधावतीति-चतुर्ऋचः छन्दविकाभावे विकारेणोक्ताः, सप्रयोजनं तथाप्यत्र एव चैषोच्यते'—इति वि०।

‡ छ० आ० ६, १, २, ४ (२भा० ५८४ पृ०)=ऋ० वे० ७, १, १५, १।

¶ 'तरत्सः—तरति स पापं यत्र मन्दी धावति सोमस्य। सोमस्य धारा अर्द्धया सुताभिषुतस्य अन्नभीऽन्नस्य सोम-लक्षणस्य'—इति वि०।



Digitized by Google

अथ द्वितीया।

२१ २३१२३१ १ २ ३१२
उस्रावेद वसूनाम्मर्त्तस्य देव्यवसः।
२३२ ३१ २
तरत्समन्दीधावति॥ २*॥

"वसूनां" धनानाम् "उस्रा" उत्सरणशीला प्रदात्री "देवी" द्योतमाना स्तूयमाना वा यस्य सोमस्य धारा "मर्त्तस्य" मनुष्यं यजमानम् "अवसः" रक्षितुं "वेद" जानाति†। सिद्धमन्यत्॥ २॥

अथ तृतीया।

३१२ ३२ ३ २३१२
ध्वस्रयोःपुरुषन्त्योरासहस्राणिदद्महे।
२३२ ३१ २
तरत्समन्दीधावति॥ ३‡॥

"ध्वस्रयोः पुरुषन्त्योः"¶ ध्वस्रः कश्चिद्राजा तथा पुरुषन्तिश्च, तयोरुभयोरन्येतरयोग-विवक्षया द्विवचनं द्रष्टव्यं "सहस्राणि" धनानां सहस्राणि "आ दद्महे" वयं प्रतिगृह्णीमः। तदस्माभिः प्रतिगृहीतं धनमुत्तममस्त्विति ऋषिः सोमं प्रार्थयत इति सोमस्य स्तुतिः। सिद्धमन्यत् अथवास्मार एतयोर्धनानि

---

* ऋ० वे० ७, १, १५, १।

† 'उषा दीपा वेद वसूनां, विद ज्ञाने, विद्लृ लाभे, विद सत्तायाम्, सर्वेषा धारा'—इति वि०।

‡ ऋ० वे० ७, १, १४, २।

¶ 'ध्वस्रयोः पुरुषन्त्योः—समान-सम्भावयोः सोम-धारयोरपि ह्रीयकर्मेण सह सम्भवयोः पापध्वंसकर्त्र्योः'—इति वि०।

प्रतिजग्राह एवं तरन्त-पुरुमीळ्हो प्रतिजगृहतुः। तथाच शाट्यायनकम्—"अथ ह वै तरन्त-पुरुमीळ्हौ वैददश्वी ध्वस्रयोः पुरुषन्त्योः बहु प्रतिगृह्य गरगिराविव मेनाते तौ ह स्माहुस्त्वा सातं प्रतिगृह्णाते तावकामयेतामसातमाविवेद सातंस्याद्दान्त मिवैव न प्रतिगृह्णीत मिति भावे तवतुक्तं चमपश्यतान्तरेण प्रत्येतां तयोर्वैतयोरसातंसातमभवदान्तमिवैव न प्रतिगृह्णीतं स यः प्रतिगृह्य कामयेत"—इत्यादि॥३॥

अथ चतुर्थी।

१र १र ३ २ ३ १ २ ३ १ २ ३ १ १

आययोस्त्रिंशतन्तनासहस्राणिचदद्महे।

३ ३ २ ३ १ २

तरत्समन्दीधावति॥४*॥५

"ययोः" ध्वस्र-पुरुषन्त्योः "त्रिंशतं" चीणि शतानि सहस्राणि च "तना" वस्त्राणि "आ दद्महे" वयं "प्रतिगृह्णीमः" तयोरस्माभिः प्रतिगृह्णीतं तत् सर्वम् अप्रतिगृह्णीतमस्त्विति सोमम् ऋषिः प्रार्थयतइति सोमस्यैव स्तुतिः। गतमन्यत्॥४॥५

एतेसोमाइति त्र्यचं तृतीयं सूक्तम्—

तत्र, प्रथमा।

३१र १र ३ १र १र ३ २

एतेसोमाअसृक्षतगृणानाःश्रवसेमहे।

३ १ २ ३ १ २

मदिन्तमस्यधारया॥१†॥

* ऋ० वे० ७, १, १४, ४।

† ऋ० वे० ७, १, १८, १।

"मदिन्तमस्य" देवानां मादयितृतमस्य रसस्य सम्बन्धिन एते सोमा अभिषुताः सरूपाः "सुवानाः" सूयमानाः "मदे" मदते "श्रवसे" अस्माकं बलाय धारया "अभ्यक्षरन्" गच्छन्ति ॥१॥

अथ द्वितीया।

२ ३र ३र ३ १२३ १ २ ३१ २
अभिगव्यानिवीतयेनृम्णापुनानोअर्षसि।
२ १२ ३ १ २
सनद्वाजःपरिस्रव ॥ २* ॥

हे सोम! "वीतये" देवानां †भक्षणाय नृम्णा" नृम्णानि धनवत् प्रियतराणि "गव्यानि" गो-सम्बन्धीनि क्षीरादीनि "पुनानः" पूयमानः सन् "अभ्यर्षसि" अभिगच्छसि। हे सोम! "सनद्वाजः" दीयमानान्नः‡ त्वं "परि" परितः "स्रव" दशापवित्रादधः क्षर॥ २ ॥

अथ तृतीया।

३१२ १ २३१२ १ २ ३१ २
उतनोगोमतीरिषोविश्वाअर्षपरिष्टुभः।
३ २ ३ १२
गृणानोजमदग्निना॥ ३¶ ॥ ६

---

* ऋ० वे० ७, १, २८, २।

† 'नृम्णा बलेन'—इति वि०।

‡ 'सनत् सदा'—इति वि०।

¶ ऋ० वे० ७, १, २८, ४।

“उत” अपि च हे सोम! “जमदग्निना” जमदग्नि-नाम्ना ऋषिणा मया “स्तवानः” स्तूयमानः त्वं “नः” अस्माकं “गोमतीः” गोभिर्युक्तानि “परिष्टुभः” परितः स्तोतव्यानि* सर्वाणि “इषः” अन्नानि देहीत्यर्थः ॥ ३ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
द्वितीयः खण्डः† ॥ २ ॥

---

इमं स्तोममिति-तृतीयखण्डे‡—

प्रथम-सूक्ते,¶ प्रथमा ।

३ २उ ३ १ २ ३ १ २ ३
इमꣳस्तोममर्हतेजातवेदसे
१ २ ३ १ २ ३ १ २
रथमिवसम्महेमामनीषया ।
३ २उ ३ १ २ ३ १र
भद्राहिनःप्रमतिरस्यसꣳस
२र ३ १र २र ३१र २र
द्यग्नेसख्येमारिषामावयन्तव ॥ १§ ॥

“अर्हते” पूज्याय “जातवेदसे” जातानामुत्पन्नानां वेदिने, जात-प्रज्ञाय जात-धनाय वा अग्नये “मनीषया” निश्चितया

---

* ‘परिष्टुभः—परि समन्तात् स्तौति’—इति वि० ।

† ‘उक्तं वक्ष्यमाणम्’—इति वि० ।

‡ ‘मर्षिं स्तोमः पञ्चमः’—इति वि० ।

¶ ‘आग्नेयमाज्यम्’—इति वि० ।

§ ऋ० आ० १, ९, २, ४ (१म १०२४०'=ऋ० वे० १, ६, १०, १ ।

बुद्धया "इमम्" एतत्स्वरूपं स्तोमं रथमिव यथा तक्षा रथं संस्क-रोति तथा "सम्महेम" सम्यक् पूजितं कुर्मः। तस्माज्ज्ञे: "संसदि" सभजने "नः" अस्माकं "प्रमतिः" प्रकृष्टा बुद्धिः "भद्रा हि" कल्याणी समर्था खलु अतस्तया बुद्ध्या स्तुम इत्यर्थः। हे "अग्ने" "तव सख्ये" अस्माकं त्वया सह सखित्वे सति वयं "मारिषाम" हिंसिता न भवामः अस्मान् रक्षेत्यर्थः। [ "अर्हते"—अर्ह पूजा-याम् (भ्वा० प०) "अर्हः प्रशंसायामिति (३,२,१३३) लटः शत्रादेशः, शपः पित्त्वादनुदात्तत्वम् (३,१,४), शतुश्चादुपदेशा-त्सार्वधातुक-स्वरेणाद्युदात्तत्वम् (६,१,१८६)। महे—मह पूजायाम् (भ्वा० प०)। रिषाम—रिष हिंसायां (भ्वा०प०) व्यत्ययेन शः(३,१,८५)। तव—"युष्मदस्मदोर्ङसि (६,१,२११)" —इत्याद्युदात्तत्वम॥१॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ २
भरामेध्मङ्कृणवामाहवीꣳषिते

३ १ २ ३ १ २ ३ १
चितयन्तःपर्वणापर्वणावयम्।

३ १ २ ३ १ २ ३ १
जीवातवेप्रतराꣳसाधयाधियो

१२ ३ १२ १२ ३ १२ १२
ग्नेसख्येमारिषामावयन्तव॥ २* ॥

हे "अग्ने!" त्वद्यागार्थम् "इध्मम्" इन्धन-साधनम् एक-विंशति-द्रव्यात्मकं समित्समूहं "भराम" सम्भराम सम्पादयाम,

* ऋ० वे० १, ६, २०, ४।

मदनु "ते" तुभ्यं "हवींषि चरुपुरोडाशादि-लक्षणान्यन्नानि वयं "कृणवाम" करवाम। किङ्कुर्वतः? "पर्वणा पर्वणा"* प्रतिपच-मावृत्ताभ्यां दर्शपूर्णमासाभ्यां "चितयन्तः" त्वां प्रज्ञापयन्तः स त्वं "जीवातवे" अस्माकं जीवनौषधाय चिरकालावस्थानाय "धियः" कर्माणि अग्निहोत्रादीनि "प्रतरां" प्रकृष्टतरं "साधय" निष्पादय। अन्यत् समानम्॥ [ चितयन्तः—चिती सञ्ज्ञाने (भ्वा० प०) सञ्ज्ञापूर्वस्य विधेरनित्यत्वात् लघूपध-गुणाभावः। पर्वणा—"नित्यवीप्सयोः (८, १, ४)"—इति वीप्सायां द्विर्भावः, "तस्य परमाम्रेडितम् (८,१,२)"—इति परस्याम्रेडित-सञ्-ज्ञायाम् अनुदात्तत्वम् (८, १ १९)। प्रतरां—तरबन्तात् प्रशब्दात् क्रिया-प्रकर्षे वर्त्तमानात् "किमेत्तिङव्ययादाम्वद्रव्ये (५, ४, ११)"—इत्यामु-प्रत्ययः ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १ २ ३ १२ ३ २
अग्नेमत्वासमिधꣳसाधयाधिय

२ ३ १ २ ३ १ २ ३ १ २
स्त्वेदेवाहविरदन्त्याहुतम्।

१ २ ३ १ २ ३२ ३ २ १२
त्वमादित्याꣳआवहतान्ह्यू३ऽश्म

३१२ ३ १२ १२ ३ १२ ३१
स्यग्नेसख्येमारिषामावयन्तव ॥ ३† ॥ ७

---

* 'पर्वणा—तृतीयैकवचनमिदं सप्तम्येकवचनस्य स्थाने द्रष्टव्यम्, पर्वणि भूयान् समर्थः'—इति वि०।

† ऋ० वे० १, ६, २०, ३।

हे अग्ने! "त्वा" त्वां "समिधं" सम्यगिद्धं कर्त्तुं "शकेम" शक्ता भूयास्म। त्वञ्च "धियः"* अस्मदीयानि दर्शपूर्णमासादीनि कर्माणि "साधय" निष्पादय तथा हि सर्वं निष्पद्यन्ते यस्मात् "त्वे" त्वयि अस्माभिराहुतम् ऋत्विग्भिः प्रक्षिप्तं चरुपुरोडाशादिकं हविः देवा "अदन्ति" भक्षयन्ति, तस्मात्त्वं साधयेत्यर्थः। अपि च त्वम् "आदित्यान्" अदितेः पुत्रान् सर्वान् देवान् "आवह" अस्मद् यज्ञार्थमानय। तान् हि इदानीं वयम् "उश्मसि" कामयामहे। अन्यत् पूर्ववत्॥ [शकेम—शक्लृ शक्तौ (भ्वा० प०), "लिङ्याशिष्यङ्" (३,१,८६), अनुपदेशात्सार्वधातुकानुदात्तत्वे (६, १, १८६) अङ एव स्वरः शिष्यते। समिधम्—ञि इन्धी दीप्तौ (रु० आ०) अस्मात् सम्पदादिलक्षण कर्मणि क्विप्। त्वे—सुपांसुलुगिति (७, १, ३९) सप्तम्येकवचनस्य शे-आदेशः। उश्मसि—वश कान्तौ (अदा० प०), "इदन्तोमसि (७, १, ४६,), अदादित्वाच्छपोलुक् (२, ४, ७२), ग्रहिज्येत्यादिना सम्प्रसारणम् (६, १, १६)॥ २॥ ७

३१ २३१ २३२ ३२३१ २
॥ सप्तमम्॥ इमᳪ᳭स्तोममर्हतेजातवेदसायि। रथ

२३ २ २ ३ १ २
मिवसम्महेमामनीषया। भद्राहाः२३यिनाः। प्रामतिर

१ २ ३२३१ ३ १२ ३२ ३२ ३१
स्यसᳪ᳭स। अग्नायि॥(१) भरामेध्मङ्कृणवामाहवीᳪ᳭षिता

---

* "धीः"—इति कर्मनामसु एकविंशतितमं नैघण्टुकम् (२, १)।

र र र १
यि। चितयन्तःपर्वणापर्वणावयाम्। जीवातार२३वायि।
१ १र र र १ ११र १र १
प्रातरा२ᳲसाधयाधि। योग्नायि॥(२) अकेमत्वासमिधᳲ
१र १ र ३ १ १र र र र
साधयाधियाः। त्वेदेवाहविरदन्त्याहुताम्। तुवमार२
२ १ र २ र १ १ १र
दी। त्याᳲआवहतान्ह्युम। स्यग्नायिसाख्यो। यौ
१ १र २ १र १ १ १ १
होइ४वाहायि। मा। रायिषार२३मा३। होवा३हायि।
१ १ १
वयन्तार२३वा३४३। ओ२३४५ई। डा(३)॥ १५*॥ ७

अथ द्वितीय-तृचे—

प्रथमा।

१ १ १ ३२१ २ ३१.२ ३ १ १
प्रतिवाᳲसूर उदिते मित्रङ्गृणीषे वरुणाम्।
३ १ २ ३ १ २
अर्यमणᳲरिशादसम्॥ १†॥

हे मित्रावरुणौ! "मित्रं" त्वां "वरुणं" च "वां" युवां "रिशा-
दसं" शत्रूणामत्तारम् "अर्यमणं" च "प्रति" प्रत्येकं "गृणीषे"

---

* ऊ० गा० १७ प्र० १ खं० १५ सा०।

† ऋ० वे० ५, ५, ९, १।

स्तुवे। कदा? इति, उच्यते—"सूरे" सूर्ये देवे "उदिते" सति प्रातरित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ १ १ २ २ २ २ ३ १ २ ३ २ ३ १ २
रायाहिरण्ययामतिरियमवृकायशवसे।

३ १ १ २र ३ १ २
इयंविप्रामेधसातये ॥ २ * ॥

"हिरण्यया" हित-रमणीयेन "राया" धनेन सहितया "अवृकाय" अहिंस्याय "शवसे" अस्माकं बलाय "इयम्" इदानीं क्रियमाणा "मतिः" स्तुतिर्भवत्विति शेषः ॥ [ हिरण्यया—इत्यत्र सुपां सुलुगिति (७,१,३९) तृतीयैकवचनस्य याजादेशः ] किञ्च हे "विप्राः" प्राज्ञाः! "इयम्" एव स्तुतिः "मेधसातये" यज्ञ-लाभाय† च भवतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ २ १ २ ३ २
तेस्यामदेववरुणतेमित्रसूरिभिःसह।

२ ३क २र
इषᳫंस्वश्चधीमहि ॥ ३ ‡ ॥ ८

हे "देव वरुण!" "ते" वयं तव स्तोतारः "स्याम" समृद्धा भवेम। न केवलं वयमेव यजमानाः किन्तु "सूरिभिः"

* ऋ० वे० ५, ५, ९, ३।

† 'विप्राः—ऋत्विजः, मेधसातये—मेधालाभार्थम्'—इति वि०।

‡ ऋ० वे० ५, ५, ९, ४।

Digitized by Google

स्तोतृभिः ऋत्विग्भिः सह ; तथा हे "मित्र" देव ! "ते" वयं "सूरिभिः" सह "स्याम" भवेम । किञ्च "इषम्" अन्नं "स्वः" स्वर्गञ्च "धीमहि" धारयामहे* ॥ ३ ॥ ८

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा ।

३ २उ ३ १२ २ १२ ३१ २ ३१ ३२र
भिन्धिविश्वाअपद्विषःपरिबाधोजहीमृधः ।
१२ ३ १२र ३२र
वसुस्पार्हन्तदाभर ॥ १ † ॥

हे इन्द्र ! त्वं "विश्वाः" सर्वाः "द्विषः" द्वेष्ट्रीः प्रजाः सेनाः "अप भिन्धि" विदारय । तथा "बाधः" हिंसकान् "मृधः" सङ्ग्रामान् त्वं "परि जहि" परिभावय । हे सोम वासकेन्द्र ! "स्पार्हं" स्पृहणीयं द्वेष्ट्रीणां "वसु" धनं यदस्ति "तत्" "आभर" ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३१र ३२ ३ २ ३ १ २
यस्यतेविश्वमानुषग्भूरेर्दत्तस्यवेदति ।
१२ ३ १२र ३२र
वसुस्पार्हन्तदाभर ॥ २ ‡ ॥

हे इन्द्र ! "ते" त्वां [ विभक्ति-व्यत्ययः (३,१,८५) ] "दत्तस्य" दत्तं "भूरेः" बहु "यस्य" यत् धनम् [ सर्वत्र कर्म्मणि षष्ठी वेदि-

---

* 'स्वः—स्वर्गलोकम्, धीमहि—चिन्तयामः'—इति वि० ।

† ऋ० सा० २, १, ४, १० ( १भा० ३३२ पृ० )=ऋ० वे० ६, ३, ४९, ४ ।

‡ ऋ० वे० ६, ३, ४९, ५ ।

तव्या ] "विश्व" सर्वं तद्धनम् "आनुषक्"—इति आनुपूर्व्या* सततं सर्वो मनुष्यो "वेदति" जानाति तत् "स्पार्हं" स्पृहणीयं "वसु" "आभर" ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ २ ३१२ २२ ३१२
यद्वीडाविन्द्रयत्स्थिरेयत्पर्शानेपराभृतम्।
१ १ २ १२ २२
वसुस्पार्हन्तदाभर ॥ ३ † ॥ ९

हे "इन्द्र!" त्वया च "वीडौ" दृढे परैः कम्पयितुमशक्ये "यत्"धनं "पराभृतं" विन्यस्तं, "यत्" च "स्थिरे" स्वयमचले पराभृतं, "यत्" च "विपर्शाने" विमर्शन-क्षमे पराभृतं, तत् "स्पार्हं" स्पृहणीयं "वसु" "आ भर" आहर ॥ ३ ॥ ९

अथ तृचात्मकं चतुर्थं सूक्तम्—

तत्र, प्रथमा।

३ १ २ ३उ ३ २ ३ २ ३ १ २३१ २
यज्ञस्यहिस्थऋत्विजासस्नीवाजेषुकर्मसु।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम् ॥ १ ‡ ॥

* "आनुषगिति नामानुपूर्वस्यानुषक्तं भवति, आनुषक्ति बर्हिरानुषगित्यपि निगमो भवति"—इति निरु० नै० ६, १४।

† उ० आ० ३, १, २, ४ ( १भा० ४४० पृ० )=ऋ० वे० ६, ३, ४९, ६।

‡ ऋ० वे० ६, ३, १०, १।

Digitized by Google

हे "इन्द्राग्नी!" युवां "यज्ञस्य" ज्योतिष्टोमादेः "ऋत्विजा स्थः" ऋत्विजौ ऋतौ काले काले यष्टव्यौ भवथः। अतो "वाजेषु" सङ्ग्रामेषु कर्मसु यज्ञात्मकेषु च "सस्नी" संभातौ शुद्धौ सन्तौ* "तस्य" तं मां हे इन्द्राग्नी! बोधतम् अथवा तस्य मम† स्तुतिं जानीतम्॥ १॥

अथ द्वितीया।

३ १ २ ३१ २ ३१ २१
तोशासारथयावानावृत्रहणापराजिता।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम्॥ २ ‡॥

हे "इन्द्राग्नी!" "तोशासा"¶ शत्रून् हिंसन्तौ, "रथयावाना" रथेन गच्छन्तौ, "वृत्रहणा" वृत्रस्य हन्तारौ "अपराजिता" केनाप्यपराजितौ "तस्य" तं मां "बोधतम्"॥ २॥

अथ तृतीया।

१ १ २ ३१२ २२३ १ २ ३१ २
इदंवाम्मदिरम्मध्वधुक्षन्नद्रिभिर्नरः।
१ २ ३ १ २
इन्द्राग्नीतस्यबोधतम्॥ ३ §॥ १०

* 'सस्नी—शोधन-स्वभावः'—इति वि०।

† 'तस्य—यजमानस्य'—इति वि०।

‡ ऋ० वे० ६, ३, २०, २।

¶ 'तोशासा— दीप्ति-सम्पन्नौ'—इति वि०।

§ ऋ० वे० ६, ३, १०, ३।

हे "इन्द्राग्नी!" "वां" युवाम् उद्दिश्य "नरः" यज्ञस्य नेतारः "अद्रिभिः" ग्रावभिः "मदिरं" मदकरं "मधु" सोमात्मकम् अमृतम् "अधन्" अपूरयन्। सिद्धमन्यत्॥ ३॥ १०

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य तृतीयः खण्डः॥* ॥ ३॥

---

अथेन्द्रायेन्दोमरुत्वतइति-चतुर्थखण्डे†—

तृचात्मके प्रथम-सूक्ते‡ प्रथमा।

१ २    ३ १ २ ३ १ २ ३   २
इन्द्रायेन्दोमरुत्वतेपवस्वमधुमत्तमः।
३ २ ३ १   २ ३ १ २
अर्कस्ययोनिमासदम्॥ १ ¶॥

हे "इन्दो" सोम! "मधुमत्तमः" अतिशयेन मधुमान् त्वम् "अर्कस्य" अर्चनीयस्य यज्ञस्य "योनिम्" स्थानम् "आसदम्" उपवेष्टुम् "मरुत्वते इन्द्राय" इन्द्रार्थम् "पवस्व" क्षर॥ १॥

अथ द्वितीया।

१ २   १ २   ३   २३ १ २      ३ २
तन्त्वाविप्रावचोविदःपरिष्कृण्वन्तिधर्णसिम्।
१ २   ३ १२
सन्त्वामृजन्त्यायवः॥ २ §॥

---

* 'उक्तं प्रातःसवनम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनमुच्यते'—इति वि०।

‡ 'रक्षोहणीय-प्रभृतीनि सामानि, तेषां प्रकृतावार्षेयमुक्तम्'—इति वि०।

¶ छ० आ० ५, २, ४, ६ (२भा० १८ पृ०)=ऋ० वे० ७, १, ४०, १।

§ ऋ० वे० ७, १, ४०, २।

हे सोम! "तं" पवमानं "त्वा" त्वाम् "धर्णसिं" धर्त्तारं "विप्राः" प्राज्ञाः "वचोविदः" स्तोतारः* "परिष्कृण्वन्ति" अलङ्कुर्वन्ति† । अपि च "त्वा" त्वाम" "आयवः" मनुष्याः‡ "सम्मृजन्ति" सम्यक् शोधयन्ति ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ ३ २ १   ३ २ ३ १ २ २
रसन्तेमित्रोअर्यमापिबन्तुवरुणःकवे ।
१ २   ३ १ २
पवमानस्यमरुतः ॥ ३ ¶ ॥ ११

हे "कवे" क्रान्तकर्मन् सोम ! "पवमानस्य" क्षरतः "ते" तव रसं§ "मित्रः" "अर्यमा" च "वरुणः" च "मरुतः" च एते सर्वे देवाः "पिबन्तु" ॥ ३ ॥ ११

१ २ २   १
॥ दृषोवृधीयम् ॥ इन्द्रायेन्दाउ । मरुत्वतायि ।
१ १   १   २ १   १ २
पवस्वामा२ । धुमत्तमाः । अर्कस्यायो२ । निमा ।
१ ३ ५२ २   ३ २   २ १
स्थार२दा२३४औहोवा ॥(१) तन्त्वाविप्राः । वचोविदाः ।

---

* विप्रा वचोविदः—मेधाविनः ऋत्विजः'—इति वि० ।

† 'परिष्कृण्वन्ति—परिचरन्ति'—इति वि० ।

‡ "आयवः"—इति मनुष्य-नामासु पञ्चदशं नैघण्टुकम् ( २, ३ ) ।

¶ ऋ० वे० ७, १, ४०, ४ ।

§ 'रसं वीर्यम्'—इति वि० ।

Digitized by Google

१ १ १ १२ १ १
परिष्कार्णवा२। निधर्णसायिम्। सन्त्वामार्जा२। नि

२ ३ ५र २ १२ २
त्र्या। या२वार ३ ४ औहोवा ॥(२) रसन्तेमायि। त्रो

१ १ १ १ १ १
अर्य्यमा। पिबन्तुवा२। रुणःक्रवायि। पवमाना२।

१ ३ ५र र १ र २
स्यम। रु२ता२३४औहोवा। इषोवृधे१(३) ॥ १८ * ॥ [१]

॥ गायत्रीक्रौञ्चम् ॥ इन्द्रायेन्दा१औहो। मा ३ रु

३ ५ १ २१ २ ऽ २ ३ ५
त्वा२३४तायि। पावस्वामा। धू३म। ता २ ३ ४माः।

१ ऽ २ ५ १ र
माः। पवस्वमधुमा३२। ता२३४माः। अर्कस्ययोना२

४ ५ १ ५र
३यिम। अ। वाहायि। सा२३४दाम्। एहियाई

५ १ र २ ऽ २ ३ ५
हा ॥(१) तन्त्वाविप्रा १ औहो। वा३। चो। वी२३४दाः।

१ २ १ २ २ ३ ५ १
पारिष्कार्णवा। ता३यिधा। णा२३४सायिम्। परिष्क

ऽ ३ ५ १ र
र्णवन्तिधा३२। णा२३४सायिम्। सन्त्वामृजन्ता२३यि।

४ ५ १ ५र ५ २
अ। वाहायि। या२३४वाः। एहियाई हा ॥(२) रस

* ऊ० गा० १ प्र० २ अ० १९ सा०।

Digitized by Google

त्नेमा१औहो । त्रो३अर्या२३४मा । पायिवन्तुवा । रू३णः ।
का२३४वायि । पिवन्तुवरुणा३२ः । का२३४वायि । पव
मानस्या२३ । म । बाहायि । रू२३४ताः । एहियाई
हा । होपुईई । डा(३) ॥ २० * ॥ [२]

॥ वाजदावद्दावयम् ॥ इन्द्रायेन्दाउ । मरुरत्वा२३
४तायि । पवा२स्वा२३४मा । धुमत्ता२माः । आ२३र्का ।
स्या२यो । निमो२३४वा । सा५दो६हायि ॥(१) तन्त्वा
विप्राः । वचो२वी२३४दाः । परा२यिष्का २ ३ ४ एर्वा ।
तिधर्णा२सायिम् । सा२३न्त्वा । मा२र्जा । तियो२३४
वा । या५वो६हायि ॥(२) रसन्तेमायि । त्रोआ२र्या
२३४मा । पिवा२न्तू२३४वा । रुणःका२वायि । पा२३वा ।
मा२ना । स्यमो२३४वा । रू५तो६हायि(३) ॥ २१ † ॥ [३]

* क० गा० ३प्र० १ख० १०गा० ।

† क० गा० ३प्र० १ख० ११गा० ।



Digitized by Google

॥ आश्वसूक्तम् ॥ आंऔहोवाहायि । इन्द्रायेन्दा
उ । मरु । त्वते । ऐहीयेहौ१ । पावस्वमधुमात्तमः ।
ऐहीयैहौ१ । आ२यि । आर्का२स्यायो२ । निमा ।
सा२दा२३४औहोवा ॥(१) आंऔहोवाहायि । तन्त्वा
विप्राः । वचो । विदः । ऐहीयैहौ१ । पारिष्कृण्वन्ति
धार्णसिम् । ऐहीयैहौ१ । आ२यि । सान्त्वा२मार्जा
२ । तिया । या२वा२३४औहोवा ॥(२) आंऔहोवा
हायि । रसन्तेमायि । त्रोमा । यमा । ऐहीयहौ१ ।
पायिबन्तुवरुणाःकवे । ऐहीयैहौ१ । आ२यि । पावा
२माना२ । स्यम । रु२ता२३४औहोवा । प्रक्षाऊ
ता२३४५ः(३) ॥ ४ * ॥ [४]

॥ आमहीयवम् ॥ इन्द्राया३यिन्दोमरुत्वतायि । पवा

---

* ऊ० गा० ८प्र० १ख० ४सा० ।

Digitized by Google

स्वा१मा२। धुमा२३त्तमाः। मर्कस्ययो। निमार२३स
दाउ। वा३। स्तौषे३४५(१)॥ ४ *॥ [५]

॥ दार्ढ्यच्युतम्॥ इन्द्रा। इहा। येन्द्रोमरु२त्वमा
यि। इहा। पवा। इहा। स्वमधुमा२त्तमाः। इ
हा। मर्का। इहा। स्ययोनिमा२सदाम्। इहा१॥(१)
तन्त्वा। इहा। विप्रावचो२विदाः। इहा। परायि।
इहा। स्तावन्तिधा२र्णासायिम्। इहा। सन्त्वा। इ
हा। म्हजन्तिमा२यवाः। इहा१॥(२) रसाम्। इ
हा। तेमित्रोवा२र्य्यमा। इहा। पिवा। इहा। तु
वरुणा२ःकवायि। इहा। पवा। इहा। मानसयमा
२रुताः। इहा१(३)॥ १२ †॥ [६]

---

* क० मा० १०प्र० १ख० ४सा०।

† क० मा० १६प्र० १ख० १३सा०।

Digitized by Google

१ र र र र १ ०
॥ वारवन्तीयोत्तरम् ॥ इन्द्रायेन्दाऔहोहायि । मा
२ ५ ११ ५ ११ २
रुत्वा२३४तायि । पवास्वा२३४हायि । मधुमत्ता ३ ४ ।
३र ४र ५ १२ ५ २ २ ५ २ १ २
आहोवा । इहा२३४हायि । उहुवा२३४मा: । अर्कस्य ।
१ ७र २ ३र ४र ५ १२ ५ ३र २
योनिमासा३४ । औहोवा । इहा२३४हायि । औहो
५र ५ २ र र र १
३१२३४ । दाम् । एहियाइहा ॥(१) तन्त्वाविप्राऔहो
२ २ ५ ११ ५ १
हायि । वाचोवी२३४दा: । परायिष्का२३४हा । णवन्ति
२ ३र ४र ५ १२ ५ २ २ ५
धर्णा३४ । औहोवा । इहा२३४हायि । उहुवा२३४सोम् ।
२ १ २ १ ७ र २ ३र ४र ५ १२
सन्त्वामृ । जान्तिआया३४ । औहोवा । इहा २ ३ ४
५ ३र २ ५र ५ २
हायि । औहो३१२३४ । वा: । एहियाइहा ॥(२) रस
र र र १ २ २ ५ २१
न्तोमा । औहोहायि । त्रोमर्त्या२३४मा । पिबात२३
५ १ २ ३र ४र ५ १२ ५
४हायि । वरुणा:का३४ । औहोवा । इहा२३४हायि ।
२ २ ५ ११र १ ७ २ ३र ४र ५
उहुवा२३४वायि । पवमा । नास्यमरु ३४ । औहोवा ।

१ २　　५　　　२र १　　　　५र　　५
इहा२३४हायि । औहो३१२३४ । नाः । एहियाइहा ।
४
होंपूइ । डा(३) ॥ १६ * ॥ [७]

१ १र　१ र २ र १ २　　१
॥ इहवद्वामदेव्यम् ॥ तन्त्वा विप्रा वचोविदः । इहा ।
१ २　　१ र
परिष्कृण्वन्ति धर्णसा२ग्निम् । इहा । सन्त्वामृजन्ता२
१ २　　१　　५　५
यि । इहा३ । या२३४वो६हायि(२) ॥ १९ † ॥ [८]

२ र १ २　　१　　　३र
॥ मार्गीयवाद्यम् ॥ रसौहोवा । तेमा२यि । चो
२ ३　　५　　१ २　　१ २　　　१ र
अर्या२३४मा । पिबन्तुव । रुणाःका१वा२यि । पव ।
२ २　　२　　५　　१ ३　　५र र　　२
औ३होंयि । मा२३४ना । स्या२मा२३४औहोवा । ए३ ।
१　१ १ १ १
रुता२३४५ः(३) ॥ २० ‡ ॥ [९] ११

---

* ऊ० गा० २१प्र० २ख० १६सा० ।

† ऊ० गा० २१प्र० १ख० १९सा० ।

‡ ऊ० गा० २१प्र० १ख० २०सा० ।

Digitized by Google

मृज्यमानेति-प्रगाथात्मकं द्वितीयं सूक्तम्*—

तत्र प्रथमा ।

२ ३ १ २ ३ १२ ३२
मृज्यमानःसुहस्त्यासमुद्रे वाचमिन्वसि ।
३ २ ३ १ २ ३ १ २२ ३ १ २ १ २ ३क २२
रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्पवमानाभ्यर्षसि ॥१†॥

हे "सुहस्त्या" [हस्ते भवा हस्त्या अङ्गुलयः] शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानः त्वं "समुद्रे" अन्तरिक्षे कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि। किञ्च हे "पवमान" पूयमान सोम! "पिशङ्गं" हिरण्यैः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिं" धनम् "अभ्यर्षसि" स्तोतॄणामभि चरसि प्रयच्छसि ॥ १ ॥

अथ द्वितीया ।

२ ३उ ३ १ २ ३ २ ३ १ २ ३ १ २
पुनानोवारेपवमानोअव्ययेवृषोअचिक्रदद्वने ।
३ १ २ ३ १२ ३२ ३ १
देवानाᳬसोमपवमाननिष्कृतङ्गोभिरञ्जानो
२
अर्षसि ॥ २ ‡ ॥ १२

* 'बृहती, औदलोरम्य-प्रमतीनि ब्राह्मणोक्तानि'—इति वि० ।

† ऋ० आ० ६, १, २, ७ ( २भा० ३९७पृ० )=ऋ० वे० ७, ५, १६, १ ।

‡ ऋ० वे० ७, ५, १६, २ ।

"अयं" सोमः "वृषः" वृषभसदृशः* सन् "पुनानः" अभिषूयमाणः सर्वं शोधयतु "अव्यये" अविमये "वारे" वाले पवित्रे "पवमानः" पूयमानः सन् "वने" वननीये "उदके" काष्ठे कलशे वा† "अचिक्रदत्" शब्दमकरोत्। [अथ प्रत्यक्षवादः] हे "सोम! पवमान!" त्वं "गोभिः" गव्यैः क्षीरादिभिः‡ "अञ्जानः" अज्यमानः¶ सन् "निष्कृतं" संस्कृतं§ देवानां स्थानम् "अर्षसि" गच्छसि॥ २॥ १२

॥ औक्ष्णोरन्ध्रम्॥ मृज्यमानाः। सुहस्तियाऽ३। सा मूऽ३द्रायिवा। चमिन्वसाऽ३यि। रायोऽ३म्पायिशा। गव्व कुलाऽ३म्। पूरूऽ२स्पृऽ२३४हाम्। पवमा। ना। औऽ३ हो। भियोऽ२३४वा। षा५सोऽ६हायि॥ (१) पवमाना। भियर्षसाऽ३यि। पावाऽ३माना। भियर्षसाऽ३यि। पूनाऽ३

---

* 'इवा उ इति पदपूरणः'—इति वि० सम्मतश्चैव छेदः पदकारस्य तथाहि—"इवा। उ"—इति।

† 'वने—काष्ठमये द्रोणकलशे अथवा वने उदके मध्यीभूते'—इति।

‡ 'गोभिः—उदकैः अथवा गो-सम्भूतैः क्षीरैः'—इति वि०।

¶ 'अञ्जानः—मिश्रीयमाणः'—इति वि०।

§ 'निष्कृतं स्थानम'—इति वि०।

४ ५ १र १र ४ २ ५ १ र २
नोवा । रेपवमा३ । नोआ२व्या२३४यायि । वृषोअ ।
१ २ २ ५ ४ ५
चा । औ३हो । कदो२३४वा । वा५नो६हायि ॥(२)
१र १ २ ४ ५ २
वृषोअचायि । कदद्वना३यि । वार्षो३आचायि । कद
१ २ ४ ५ २ १
द्वना३यि । दायिवा३ना१ँसो । मपवमा३ । नना२यि
२ ५ १र २ १ २ २ १
ष्का२३४र्त्ताम् । गोभिर । जा । औ३हो । नओर३
५ ४ ५
४वा । षा५सो६हायि(३) ॥ १ * ॥ [१]

२ १ र र र र
॥ स्वारैडमौक्ष्णोरन्ध्रम् ॥ मृज्यमानःसुहस्त्या । समु
१.२ १ २ १ ७ २ २ २
द्रेवोवा । चामिन्वसि । रायिम्पिशा ३ । हा ३ हा ।
१ २र २ १ २ १ २ २ २ १
गम्बहुलम्पुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
१ २र र १ २ र १ २ १ २
२३यि ॥(१) पवमानाभियर्षसि । पवमानोवा । भाय
१ र र २ २ २र र २ र र १ २र
र्षसि । पूनानोवा ३ । हा ३ हा । रेपवमानोअव्यये ।
१र २ २ २ १ २
वार्षोअचा३यि । हा३हायि । कदहा२३ना३४३यि ॥(२)

° ऊ० गा० ३प्र० १अ० १सा० ।

१ र २ १ र २र १ २ १ १र १
वृषोअचिक्रदद्वने । वृषोअचोवा । क्रादद्वने । दायि
र र २ २ २ १ १र १ र
वानाᳫसो३ । चा३चा । मपवमाननिष्कृतम् । गोभा
२ २ २ र ५ २ २
यिरञ्जा३ । चा३चा । नोऽर्षा२३सा३४३यि । यो२३
४५ई । डा(३) ॥ २ * ॥ [२]

२ १ र २ १ १
॥ वाजजित् † ॥ मृज्यमानःसुहा । स्तिया२ । समू
१ र १ २र १ १
२हो । द्रेवा२हो । चामिन्वसायि । रया२यिᳫहो
१ २ १ २र १
यि । पिशा२हो । गम्बऊणाम् । पूरुस्पृहाम् । पवा
१ र १ २र १ २ १ २र
२हो । माना२हो । भीयर्षसा३१उवा२३ ॥(१) पवमा
र १ १ १ र २र
नामिया । षसा२यि । पवा२हो । माना२हो । भी
१ १ र १ २र १ २र
यर्षसायि । पुना२हो । नोवा२हो । २पवमा । नो
१ १ १ २र १
अव्ययायि । वृषो२होयि । अचा२यिहोयि । क्राद
२ १ र २ १
द्वना३१उवा२३ ॥(२) वृषोअचिक्रदात् । वना२यि ।

* ऊ० गा० ३प्र० १ख० २सा० ।

† "वार्हद्वाजजिदौक्ष्णोरन्ध्रम्"—इति ख० पु० पाठः ।

१ १ १ २र१ २ र
वृषो२होयि। अचा२यिहोयि। क्रादद्दनायि। देवा
१ र १ २१ २र १ र
२हो। नाऽ९सो२हो। मपवमा। नानिष्कृताम्। गो
१ १ २र१ २
भा२यिर्होयि। अब्ज्ञा२हो। नोश्वर्षसा३१उवा२३।
२र१र २ २
वाजौजिगी३वा९१(३) ॥ ३ * ॥ [३]

१ र १ २ १ २ १
॥ वरुणसाम ॥ मृज्यमानःसुहस्त्योवा। ओवा। सा
२ र र १ २ १ २ १
मुद्रेवा। चमायिन्वा१सो२। रा२३यीम्। पा२३यि
२ १ २ १ २ १ ५ २ १
श्रा। गम्बक्तुलम्। पुरू२३हायि। स्पृहा३मा। पव
२र र १ २ १ २ १ र २ ५ २
मानाभियर्षसि। पा२३वा। मानाभियौ३। हो३हो२३
५ ४ ५ २ र र १ २
४। वा। षा५सो६हायि ॥(१) पवमानाभियर्षसोवा।
१ २ १ २र र १ २ १ २
ओवा। पावमाना। भियार्षा१सा२यि। पू२३ना।
१ २ १र २ र १र २ १ ४ २
नो२३वा। रेपवमा। नोभा२३हायि। व्यया३श्रा।
१र २ १ २ र १ २ १ २ ५ २
वृषोअचिक्रदद्दने। वा२३र्षो। आचिक्रदौ३। हो३१२३

* ऊ० गा० ३प्र० १अ० ३सा०।

५ ४ ५ १र १ २
४। वा। वा५नोई्हायि ॥(२) वृषोअचिक्रदद्वनोवा।
१ २ १र २ १ २ १ २
ओवा। वार्षोअचि। क्रदादा१ना२यि। दा२३यिवा।
१ २ १ २र १ २ १ऽ २
ना२३४सो। मपवमा। नजा२३हायि। क्तता ३ मा।
र २ र १र २ १ २ १ र २ ऽ
गोभिरञ्जानोअर्षसि। गो२३भायिः। आञ्जानऔ३।
२ १ ५ ४ ५
होइहो२३४। वा। षा५सोई्हायि(३) ॥ ४ * ॥ [४]
२ऽ ऽ ऽ १ र
॥ अङ्गिरसाङ्गोष्ठम्॥ हाउहाउहाउवा। मृज्यमा
२ १र १ १ १ १ १ १ १ र र
नःसुहस्त्या। इहा। उपा२३४५। समुद्रे वाचमिन्व
१ ३ १ १ १ १ १ १ २ १ २ १ २ १
सि। इहा। उपा२३४५। रयिम्पिशङ्गम्बहुलंपुरुस्पृ
२ १ २ १ १ १ १ १ १र र १ २ १
हम्। इहा। उपा २ ३ ४ ५। पवमानाभियर्षसि। इ
३ १ १ १ १ १ १र र १ २ १
हा। उपा२३४५ ॥(१) पवमानाभियर्षसि। इहा। उ
३ १ १ १ १ १ १र २ १ २ १ ३ १ १ १ १
पा२३४५। पवमानाभियर्षसि। इहा। उपा२३४५।
१र १र र र १र र १ १र १ ३ १ १ १ १ १र
पुनानोवारेपवमानोअव्यये। इहा। उपा२३४५। वृषो

* ऊ० गा० ३प्र० १ख० ४गा०।

२ १२र १ ३ १ १ १ १ १र २ १
अचिक्रदद्वने । इहा । उपा२३४५ ॥(२) वृषोअचिक्रद
२र १ २ १ १ १ १ १र २ १२र १
द्वने । इहा । उपा२३४५ । वृषोअचिक्रदद्वने । इहा ।
२ १ १ १ १ २र१र र २र र १
उपा२३४५ । देवाजा७सोमपवमाननिष्कृतम् । इहा ।
२ १ १ १ १ २उ ऽ ऽ १र १ र २र २
उपा२३४५ । हाउहाउहाउवा । गोभिरञ्जानोअर्षसि ।
१ २ १ १ १ १
इहा । उपा२३४५(३) ॥ ५ * ॥ [५]

२ १ र २ १ २ १ र २
॥ सम्मतम् ॥ मृज्यमानःसुहस्तिया । समुद्रेवाऽच
१ २ १ २ २ १
मिन्वसायि । रयिम्पा२३यिशा । गाम्बहुलम् । पुरुस्पृ
२ २ २ १ २र १ १ २ १
हाम । औहो३४वाहायि । प । वामार३ना ३ । हो
२ २ १ २ १ १ २र र १ २ १
वा३हा । भियर्षा२३सा३४३यि ॥(१) पवमानाभियर्षसा
र २ १ २ र र १ २ २र
यि । पुनानो२३वा । रेपवमा । नोआव्यायां । औ
२ ४ २र १ १ २ १ १ २
हो३वाहायि । वृ । षोआ२३चा३यि । होवा३हायि ।
१ २ र १ १ २ १ र
क्रदद्दा२३ना३४३यि ॥(२) वृषोअचिक्रदद्वनायि । वृषो

* ऊ० गा० ९प्र० १ख० ५सा० ।

२ १  २ र  २  १  २ र
अचायिक्रदद्दनायि । ढेवाना२३९सो । मापवमा । न

१  ३  ३र २  २र १  १र
नायिष्कार्त्तीम् । औहो३४वाह्वायि । गो । भायिरा

२  १ २  २  र १  २  १
२३ङ्ग्रा३ । होवा३हा । नोअषा२३सा३४३यि । श्रो

२३४५ई । डा(३) ॥ ५ * ॥ [६]

२  र  र र  १ २
॥ त्रिणिधनमायास्यम् ॥ मृज्यमानःसुहाहाउहोवा ।

१ २ २  ५  १र  २ २  २
स्तायासा२३४मू । द्र वा॰ । चमा३४५यि । न्वा२ ३ ४

१ २  ३र ४र ५  १  २
सी । रया३४ । औहोवा । पिग्रङ्गम्बङ्कला२म् । पुरु

२  ५  १ २  ३र ४र ५  १
३४५ । स्पृ२३४हाम् । पवा३४ । औहोवा । माना२ ।

२ २  ५  ५  २ र र  र र  १ २
भिया३४५ । षा२३४सी ॥(१) पवमानाभियाहाउहोवा ।

१ २  २  ५  १र  २  २  ५
षासायिपा२३४वा । माना२ । भिया३४५ । षा२३४सी ।

१ २  ३र ४र ५  १र र र  ३र २
पुना३४ । औहोवा । नोवा२पवमा२ । नोआ३४५ ।

२  ५  १ २  ३र ४ ५  १  ३ २
व्या२३४ये । वृषो३४ । औहोवा । आचा३यि । क्रदा

* ऊ० गा० ८प्र० १ख० ५सा०।

Digitized by Google

३ ५ २र र १२ १
३४५त्। वा२३४ने ॥(२) वृषोअचिक्रदद्धाउवोवा। वा।
२ ३ ५ १ २१ ३
वानायिवा२३र्षा। अचा२यि। क्रदा३४५त्। वा२३४
५ ४ २ ३र ४र ५ १र र २१
ने। देवा३४। औहोवा। ना९सोमपवमा२। नना
३ ५ १र २ ३र ४र ५ १
३४५यिः। का२३४र्त्ताम्। गोभा३४। औहोवा। भा
३ २ ३ ५
ञ्जा२। नञा३४५। धा३४५। धा२३४सौ(३) ॥ ६* ॥[७]
५ ४ २ ४ ५ ४ ५ १ १र
॥ अभीवर्त्तम् ॥ पवा३मा३ना ऽभियर्षसोवा। पावमा
र १ २ १ र र १ २र ४ ५र
ना। भियार्षा१सा२यि। पूनानोवा३१२३४। रेपवमा।
२र १ २ १ २ २ २ १
नोआव्या१या२यि। वृषोआ१चा२यि। क्रदा३त्। वा
२ १ १ १ १
२३४५। ना२३४५यि(२) ॥ ८ † ॥ [८]
५ र २ ४ ५ ४ ५ २ १ २ १
॥ कालेयम्‡ ॥ वृषोआ३चिक्रददनायि। वृषोअचा
२ ३ २ १ २र ३र र २ १ ३
यि। क्रददना२३यि। देवाना९सो३। मा२३४। पव

* ऊ० गा० ८प्र० १ख० ६सा०।

† ऊ० गा० ८प्र० १ख० ८सा०।

‡ "महाकालेयम्"—इति ख० पु० पाठः।

Digitized by Google

४र १ २ १ १र २ १ १
माननिः । क्रा३र्त्ताम् । गोभायिरजौ । वा३४३ । ओ
५ ४र ४
३४वा । नोआपूर्षसायि । हो५ई । डा(३) ॥ ९ ॥ [९]

५ ४ ५र २र २ २र ४र ५ १
॥ पौरुमीढम् ॥ पवमा । नाभा३४औहोवा । आ
२ १ २र र १ २ १र र र
र्षसि । पवमाना । भियर्षा२३सायि । पुनानोवा । रे
२ र १ र २ १
पवा२३मा । नोअव्ययायि । वृषोआ२३चायि । क्रद
१ २ १ १ १ १ १
दा२३४५नाद्६५६यि । दद्या२या२३४५(२) ॥ १२ † ॥ [१०]

२ऽ ऽ ऽ र
॥ आङ्गिरसाङ्गोष्ठम् * ॥ हाउहाउहाउवा । पुना
१र र २र १ २र र १ २र १ १ १ १ १ १ र १
नोवारेपवमानोअव्यये । इद्दा । उपा२३४५ । वृषोअ
१ २र १ २ १ १ १ १ २र १र र २र
चिक्रदद्वने । इद्दा । उपा२३४५ । देवानाꣳसोमपव
र १ २ १ १ १ १ २ऽ ऽ ऽ
माननिष्कृतम् । इद्दा । उपा२३४५ । हाउहाउहाउ

---

* ऊ० गा० ८प्र० २ख० ९सा० ।

† ऊ० गा० ६प्र० २ख० १२सा० ।

‡ 'प्रतोदगोष्ठम्'—इति ख० पु० पाठः ।

Digitized by Google

१र २र १र २ १ ३ १ १ १
वा । गोभिरञ्जानोअर्षसि । इहा । उपा २ ३ ४
१
५(२) ॥ ५* ॥ [११]

१र १र २र १ २ १ २ १ र
॥ कण्वरथन्तरम् ॥ पावमानाभियर्षसायि । पवमा
२ १ २ २ र र र र र र २
ना । भा३यार्षा३सायि । पुनानोवारेपवमानोअव्यया
५र २ १र ५ २ २
२३४ऐहो । वृषोआ२३४चायि । क्रदा३१उवा२३ । ए३ ।
२ १ २
वनआ(२) ॥ १४ † ॥ [१२]

१र १र २ १ २ १ २ १ र
॥ कण्वरथन्तरम् ॥ मार्ज्यमानःसुहस्तिया । समुद्रे
२ १ २ २
वा । चा३मायिन्वा३सायि । रयिम्पिशङ्गम्बहुलम्पुरुस्पृ
३ ५ र २ १ ५ २ २
हा२३४मैहो । पवमा२३४ना । भिया३१उवा२३ । ए३ ।
२ १ २
षसआ(१) ॥ ७ ‡ ॥ [१३]

२ १ र १ १र
॥ अर्कपुष्पोत्तरम् ॥ मृज्यमानःसुहस्त्या । ऊवायि ।

---

* ऊ० गा० १९प्र० १अ० ५सा० ।

† ऊ० गा० १९प्र० २अ० १४सा० ।

‡ ऊ०गा० २०प्र० १अ० ७सा० ।

Digitized by Google

औहोवा२। समुद्रंवाचमिन्वसि। ऊवायि। औहो
वा२। रयिम्पिशङ्गम्बहुलम्पुरुस्पृहम्। ऊवायि। औ
होवा२। पवमानाभियर्षसि। ऊवायि। औ। हो२।
वा२३४। औहोवा॥(१) पवमानाभियर्षसि। ऊवायि।
औहोवा२। पुनानोवारेपवमानोअव्यये। ऊवायि।
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औ। हो२।
वा२३४। औहोवा॥(२) वृषोअचिक्रदद्वने। ऊवायि।
औहोवा२। वृषोअचिक्रदद्वने। ऊवायि। औहोवा
२। देवानाꣳसोमपवमाननिष्कृतम्। ऊवायि। औ
होवा२। गोभिरञ्जानोअर्षसि। ऊवायि। औ। हो२।
वा२३४ औहोवा। अर्कंस्यदेवाःपरमेवियो२मा२३
४५न्३)॥ ८ *॥ [१४] १२

* ऊ० गा० ८प्र० १ख० ८गा०।



Digitized by Google

एतमु त्यमिति तृचात्मकं तृतीयं सूक्तम्—

तत्र, प्रथमा ।

३ २ ३ १ २ उ   ३ १ २   ३ १ २   ३   १ २
एतमुत्यन्दशक्षिपोमृजन्तिसिन्धुमातरम् ।
१ २ ३ १ २
समादित्येभिरख्यत ॥ १ * ॥

"सिन्धुमातरं" यस्य सोमस्य सिन्धवो† नद्यः‡ मातरो भवन्ति । "त्यं" तम् "एतम्" इमम् सोमं "दश क्षिपः" दश-सङ्ख्याका अङ्गुलयो¶ "मृजन्ति" शोधयन्ति । अपि च सोऽयम् "आदित्येभिः"§ आदित्यैः "समख्यत" सङ्गच्छते ॥ १ ॥

अथ द्वितीया ।

१   १ २ २   २ ३ १ २   ३ १ २   ३ २ ३ २
समिन्द्रेणोतवायुनासुतएतिपवित्रआ ।
१   २ र   ३ १ २
सꣳसूर्य्यस्यरश्मिभिः ॥ २ ‖ ॥

---

* ऋ० वे० ७, १, १९, १ ।

† "सिन्धवः"—इति निघण्टु-प्रथम-त्रयोदशे नदीनामसु पठितम् ।

‡ —तास नव "इमम्मे गङ्गे (१, ६, ७, ५)"—इति ऋक्श्रुता ज्ञेयाः । तथाहि—गङ्गा, यमुना, सरस्वती, शुतुद्री, परुष्णी (इरावती), असिक्नी, मरुद्वृधा, वितस्ता, आर्जीकीया (विपाट्);—इत्येता नव ।

¶ "क्षिपः"—इति निघण्टावङ्गुलिनामसु तृतीयम् (२, ५) ।

§ "बहुलं छन्दसि (७, १, १०)"—इति भिस ऐसभावः ।

‖ ऋ० वे० ७, १, १९, २ ।

Digitized by Google

"सुतः" अभिषुतः सोमः "पवित्रे" "इन्द्रेण" "सम् एति" सङ्गच्छते। "उत" अपि च "वायुना" समेति "सूर्य्यस्य" "रश्मिभिः" किरणैरपि समेति ॥ २ ॥

अथ तृतीया।

२　३　१　२　　३　१२　३१　२　३　१　२
सनोभगायवायवेपूष्णेपवस्वमधुमान्।

१　२　३　१　　२र
चारुर्मित्रेवरुणेच ॥ ३ * ॥ १३

हे सोम! "मधुमान्" मधुररसः "चारुः" कल्याण-रूपश्च सोऽभिषुतः त्वं "नः" अस्माकम् यज्ञे "भगाय" भगाख्याय देवाय "वायवे" "पूष्णे" च "मित्रे" मित्राय देवाय "वरुणाय" च "पवस्व" चर ॥ ३ ॥ १३

२र१११　　२　१२　　१　　२
॥ इहवद्वामदेव्यम् ॥ एतमुत्यन्दशक्षिपः। इहा। म्टजन्तिसिन्धुमातरा२म्। इहा। समादित्येभिरा२। इहा३। स्या२३४ताेइहायि ॥(१) समिन्द्रेणोतवायुना। इहा। सुतएतिपवित्रआ२। इहा। सᳪसूर्य्यस्यरा२। इहा३। भा२३४यिभोइहायि ॥(२) सनोभगायवायवे।

(Svara marks over the last lines as printed:)
१　र　१२　१र　र　१२
१　५　५　१　र　र　२र　१२र१२र　१
२१र　१२　१　र
१२　१　५　५　१२र१र　२र१२र

* ऋ० वं० ७, १, १९, ४।

१ २१ १२ १ २ १२ २
इडा। पूष्णे पवस्वमधुमा २न्। इडा। चारुर्म्मिर्न्नेव
१ २ १ ५ ५
ह्र २। इडा३। णा२३४यिचो६हायि(३) ॥ ६ * ॥ [१]
५र ४ २ ४ ५ २ १
॥ अयासोमीयम ॥ एता३मू३त्यन्द२ःचिपाः। मृज
० ५ १ २र १
न्तिसायि। धुमा२ता२३४राम्। सामादित्या२३यि।
२ ४ ५ ४ २ ४र ५र २
भिरा३ख्या५ना६५६ ॥(१) समा३यिन्द्रे३णोतवायुना। सु
१र ० ३ ५ १ २र १
तएतायि। पवा२यित्रा२ ३ ४ आ। सा९सूरिया २ ३।
२ ४ ५ ४ २ ४र ५र
स्यरा३श्मा५यिभा६५६यिः ॥(१) सनो३भा३गायवायवायि।
२र १र ० ३ ५ १ २ १
पूष्णेपवा। स्वमा२धू२३४मान्। चारुर्म्मि त्रा २ ३ यि।
२ ४
वह्र३णा५यिचा६५६(३) ॥ १४ † ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
चतुर्थः खण्डः ‡ ॥ ४ ॥

---

* ऊ० गा० ३प्र० २अ० ७सा०।

† ऊ० गा० २१प्र० २अ० १४सा०।

‡ "उक्तो माध्यन्दिनः पवमानः"—इति वि०।

अथ पञ्चमे खण्डे*—

रेवतीर्न-इति तृचात्मकं† प्रथमं सूक्तम्—

तत्र, प्रथमा।

१र २ ३ २ ३ १ २ ३ १ २
रेवतीर्नःसधमादइन्द्रे सन्तुतुविवाजाः।
३ १ ३ २ ३ १ २
क्षुमन्तोयाभिर्मदेम॥ १‡ ॥

"क्षुमन्तः" अन्नवन्तः "याभिः" गोभिः सह "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः" क्षीराज्यादि-धनवत्यः "तुविवाजाः" प्रभूत-बलाश्च "सन्तु"॥ [रेवतीः—रयि-शब्दात् मतुपि "रयेर्मतौ बहुलम् ( ६, १, ३४ वा० )" —इति सम्प्रसारणम, परपूर्वत्वे, "छन्दसीरः (८, २, १५ )"—इति मतुपो वत्वम्, "वाच्छन्दसि (६, १, १०६ )"—इति पूर्वसवर्णदीर्घः, "रे-शब्दाच्च मतुप उदात्तत्वं वक्तव्यम ( ६, १. १७६ वा० )"—इति रे-शब्दादुत्तरस्यापि भवतीति पूर्वमेवोक्तम्। सधमादे—मद तृप्ति योगे चौरादिकः, सह मादयतीति सधमादः "सधमादस्थयोश्छन्दसि (६, ३, ९६ )"—इति सह-शब्दस्य सध आदेशः, थाथादिना (६, २, १४४ )—उत्तर-पदान्तोदात्तत्वे प्राप्ते "परादिश्छन्दसि

---

* 'इदानीं इष्टानि'—इति वि०।

† 'रेवतीषु वारवन्तीयं इष्टं भवति'—इति वि०।

‡ ऋ० आ० ३, २, १, ९ ( १मा० ३५३पृ० )=ऋ० वे० १,२,३०,३।

बहुलम् (६, २, १९९)"—इति उत्तरपदाद्युदात्तत्वम्। तुविवाजाः—बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् (८, २, १)। द्युमन्तः—द्यु द्युत कु शब्दे (अदा० प०), अस्मात् क्विपि तुगभावश्छान्दसः, "ह्रस्वनुड्भ्यां मतुप् (६, १, १७६)"—इति मतुप उदात्तत्वम्। मदेम—मदी हर्षे (दि० प०), व्यत्ययेन शप्, अदुपदेशाल्लसार्वधातुकानुदात्तत्वे शपः पित्त्वादनुदात्तत्वम्, ततो धातुस्वरः शिष्यते ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १

आ घ त्वावान् त्मना युक्तः स्तोतृभ्यो धृष्णवीयानः ।

३ १उ ३ २३१ २३ १२

ऋणोरक्षन्न चक्र्योः ॥ २ * ॥

हे "धृष्णो !" धार्ष्ययुक्तेन्द्र !† "त्वावान्" त्वत्सदृशो देवताविशेषः, "त्मना" आत्मना अस्मदनुग्रह-बुद्ध्या युक्तः "ईयानः" अस्माभिर्याच्यमानः "स्तोतृभ्यः" स्तोतॄणामनुग्रहाय तदभीष्टमर्थं "घ" अवश्यम्‡ "आ ऋणोः" आनीय प्रक्षिपतु। तत्र दृष्टान्तः—"चक्र्योः" रथस्य चक्रयोः "अक्षं न" यथा अक्षं प्रक्षिपति तद्वत् ॥ त्वावान् वतुप्प्रकरणे "युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्या

* ऋ० वे० १,२,३०,४।

† 'धृष्णो—धारण-स्वभावः'—इति वि०।

‡ 'घ—इति पद-पूरणः'—इति वि०।

Digitized by Google

नम् ( ५, २, ९४ वा० )"—इति वतुप् "प्रत्ययोत्तर-पदयोश्च (७, २, ९८ )"—इति मपर्यन्तस्य त्वादेशः, "आ सर्वनाम्नः (६, ३, ९१ )"—इति दकारस्यात्वं, वतुपः पित्त्वादनुदात्तत्वे (३, १, ४ ) प्रातिपदिक-स्वरः शिष्यते। त्मना—"मन्त्रे-ष्वाङ्यादेरात्मनः (६, ४, १४१ )"—इत्याकार-लोपः। घृष्णो—ञि धृषा प्रागल्भ्ये, "त्रसिगृधि-धृषि-क्षिपेः क्नुः, आम-न्त्रितानुदात्तत्वम्। ईयानः-ईङ् गतौ, ( दि० आ० )छन्दसि लिट् ( ३, २, १०५ ), तस्य "लिटः कानज्वा ( ३, २, १०७ )" —इति कानजादेशः, "अचिश्नु धातु ( ६, ४, ७७ )"—इत्या-दिना इयङादेशः,"चितः ( ६, १, १६३ )"—इत्यन्तोदात्तत्वम्। ऋणोः—ऋण गतौ ( तना० उ० ) लङि व्यत्ययेन तिपः सिपि (३, १, ८५ ), "इतश्च ( ३, ४, ९७ )"—इतीकारलोपः, "तनादि-कृञ्भ्य उः ( ३, १, ७९ )",—सार्वधातुकगुणः (७, ३, ८४ ), "बहुलञ्छन्दस्यमाङ्योगेऽपि"--इत्यड़ागमा-भावः, विकरण-स्वरेणान्तोदात्तत्वम्। अत्तम्—"अत्तस्यादेवनस्य (फि० २, १२ )"—इत्याद्युदात्तत्वम्। चक्रोः—अकारस्येका-रश्छान्दसः ( ३, १, ८५ )" ॥ २ ॥

अथ तृतीया।

१र २र ३ १र ७र ३ १
आयद्द वःशतक्रतवाकामञ्जरितॄणाम्।
३ २उ ३ १र २र
ऋणोरक्षन्नशचीभिः ॥ ३ * ॥ १४

हे "शतक्रतो" इन्द्र! "यत्" "दुवः" धनं† कामितार्थ-

---

* ऋ० वे० १,१,२,५।

रूपम् स्तोतृभिः आसव्यमस्ति तं कामं "जरितॄणां" स्तोतॄणा-मनुग्रहाय "आ कृणोः" आनीय प्रक्षिपसि। तत्र दृष्टान्तः— "शचीभिः" कर्मभिः शकटोचित-व्यापार-विशेषैः "अक्षं न" यथा अक्ष प्रक्षिपति तद्वत् ॥ [शचीभिः—शची-शब्दः शार्ङ्गरवादित्वात् (४, १, ७३) ङीबन्तत्वादाद्युदात्तः (३, १, ४ ).॥ ३ ॥ १४

॥ वारवन्तीयोत्तरम्॥ रेवतीर्नाऔहोहायि। सधामा२३४हायि। इन्द्रायिसा२३४हा। तुतुविवा३४। औहोवा। इहा२३४हायि। उऊवा२३४जाः। त्तुमन्तः। याभिर्मदा३४। औहोवा। इहा२३४हायि। औहो३१२३४। मा। एहियाइहा ॥ (१) आघत्वावा ऽऔहाहायि। त्मानाय्२३४क्ताः। स्तोतृभ्यो२३४हायि। धृष्णुवीया३४। औहोवा। इहा२३४हायि। उऊवा२३४नाः। कृणोर। त्तानचक्रा३४। औहोवा। इहा२३४हायि। औहो३१२३४। योः। एहियाइहा ॥(२)

१र २ २ १ २ २ ५ २र १
आयद्ववाऔहोहायि। आतक्षा२३४ताउ। आकामा२३
५ १ १ २र ३र ५ १ २ ५
४उहायि। जरितृ३४। औहोवा। इहा२३४हायि।
१ २ ५ २ १र १ १ ७ २ २र २र ५
उक्थवा२३४णाम्। ऋणोर। वान्नशवा३४। औहोवा।
१ २ ५ २र २ ५र ५
इहा२३४हायि। औहो३१२३४। भीः। एहियाईया।
५
होपइ। डा(३)॥ ७ *॥ [१] १४

सुरूपकृत्नुमिति तृचात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २
सुरूपकृत्नुमूतये सुदुघामिवगोदुहे।
३ २ ३ २ ३
जुहूमसिद्यविद्यवि॥ १ †॥

"सुरूपकृत्नुं" शोभन-रूपोपेतस्य कर्मणः कर्त्तारमिन्द्रं "ऊतये" अस्मद्रक्षणार्थम् "द्यवि द्यवि" प्रतिदिनं "जुहूमसि" आह्वयामः॥ [द्यो-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः(फि० १,१), "नित्य वीप्सयोः(८,१,४)"—इति द्विर्भावः, 'तस्यपरमाम्रेडितम्

* ऊ० गा० १प्र० १ख० ७सा०।

† छ० आ० २,१,२,६ (१भा० २१६पृ०)=ऋ० वे० १,४,७,१।



Digitized by Google

(८, १, २) "अनुदात्तञ्च (८, १, २)"—इति द्वितीयस्यानुदात्तत्वम् । जुहूमसि—इत्यत्र "इदन्तोमसि (७, १, ४६)"—इति इकार आगमः, प्रत्यय-स्वरेण (३, १, ३) इकारउदात्तः] आह्वाने दृष्टान्तः—"गोदुहे" गोधुगर्थं [ गां दोग्धीति गोधुक्; सत्सूद्विषेत्यादिना (३, २, ६१) क्विप्, कृदुत्तरप्रकृतिस्वरत्वम् (६,२, १३९)] "सुदुघाम् इव" सुष्ठु दोग्ध्री गामिव यथा लोके यो दोग्धा तदर्थं तस्य आभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत् [सुष्ठु दुग्धे इति सुदुघा, "दुहः कब्घश्च (३,२,७०)"—इति कप् प्रत्ययः हकारस्य च घकारः, कित्वाद् गुणाभावः (१, १, ५), कपः पित्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः(६,१,१६२)॥१॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १ २
उपनःसवनागहिसोमस्यसोमपाःपिब ।

३ २उ ३ १ २ ३ १ २
गोदाइद्रेवतोमदः ॥ २ * ॥

हे "सोमपाः" सोमस्य पातरिन्द्र ! सोमं पातुं "नः" अस्मदीयानि "सवना" सवनानि त्रीणि "उप" समीपे "आ गहि" आगच्छ [ सवना—सूयते सोम एष्विति सवनानि सुपो डादेशः(७,१,३९) टिलोपश्च(६,४,१४३),"लिति(६,१,१९३)-इति प्रत्ययात् पूर्वस्या-"

* ऋ० वे० १,४,७,१ ।

कारस्य उदात्तत्वम् । गहि—इत्यत्र गमेः "बहुलञ्छन्दसि (२,४,७३)—इति शपो लुक्, हेर्ङिन्वादनुदात्तोपदेशेत्यादिना (६,४,३७) मकार-लोपः, "अतोहेः (६,४,१०५)"—इत्याभीय-शास्त्रीये लुकि कर्त्तव्ये "असिद्धवदत्राभात् (६,४,२२)"—इति आभाच्छास्त्रीयो मकार-लोपोऽसिद्धवद् भवति]। आगत्य च "सोमस्य" सोमं "पिब", "रेवतः" धनवतः तव "मदः" हर्षः "गोदा इत्" गोप्रद एव, त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः ॥२॥

अथ तृतीया ।

१ २　३ १ २　　　२ ३ १　　२ ३
अथाते अन्तमानांविद्यामसुमतीनाम् ।
२ ३　१ २　३ १ २
मानोअतिख्यआगहि ॥ ३ * ॥ १५

"अथ" सोमपानानन्तरं हे इन्द्र! "ते" तव "अन्तमानाम्" अन्तिकतमानामतिशयेन तव समीपवर्त्तिनां "सुमतीनां" शोभन-मति-युक्तानां शोभन-प्रज्ञानां पुरुषाणां मध्ये स्थित्वा "विद्याम" वयं त्वां जानीयाम [यद्वा, सुमतीनां शोभन-बुद्धीनां कर्मानुष्ठान-विषयाणां लाभार्थमित्यध्याहारः बहुव्रीहि-पक्षे पूर्वपद-प्रकृति-स्वरापवादो "नञ्-सुभ्याम् (६,२,१७२)"—इत्युत्तर-पदान्तोदात्तः । कर्मधारय-पक्षेऽपि अव्यय-पूर्वपद-प्रकृति-स्वरापवाद-कृत्स्वरेणान्तोदात्ततैव (६,२,१३९)। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमति-शब्दात् परस्य नामो "नाम-

* ऋ० वे० १, ४, ७, ३ ।

Digitized by Google

न्यतरस्याम् (६,१,१७७)"—इत्युदात्तत्वम् ]। त्वमपि "नः" अस्मान् "अति" अतिक्रम्य "माख्यः" अन्येषां त्वत्स्वरूपं मा प्रकथय: [ख्या प्रकथने (अदा० प०)—इत्यस्य लुङि "अस्यतिवक्तिख्यातिभ्योऽङ् (३,१,५२)"। आगहि——गमेः अपो लुकि ङित्त्वादनुदात्तोपदेशेति (६,४,३७) मकार-लोपस्यासिद्धवदत्राभादिति (६,४,२२) असिद्धवद्भावात् "अतो हेः (६,४,१०५)" —इति लुक् न भवति ॥ २ ॥ १५

उभेयदिन्द्ररोदसीति-ऋचात्मकं तृतीयं सूक्तं;

तत्र, प्रथमा।

१ २र २र ३ १ २ ३ २ ३ १ २
उभेयदिन्द्ररोदसीआपप्राथोषाइव।

३ १ २ ३ १ २ ३ १ २ ३ २
महान्तन्त्वामहीनाᳫँसम्राजञ्चर्षणीनाम्॥

३ १र २र ३ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ १ * ॥

हे "इन्द्र!" "उभे" "रोदसी" द्यावापृथिव्यौ "यत्" यः त्वम् "आ पप्राथ" स्वतेजसा आपूरयसि [प्रा पूरणे, आदादिकः (५०). छान्दसो लिट् (३,२,१०५)] "उषा इव" यथा उषाः स्व-भासा सर्वं जगदापूरयति तद्वत् त्वं "महीनां" महतां देवानामपि "महान्तम्" अधिकं "चर्षणीनां" मनुष्याणामपि

* ऋ० सा० ४,१,४,१० (१भा० ७७पृ०)=ऋ० वे० ८,७,११,१।

Digitized by Google

"सम्राजम्" ईश्वरम् इन्द्रं "त्वा" त्वाम् "देवी" देवनशीला "जनित्री" साधु-जनयित्री अदितिः "अजीजनत्" अतः कारणात् सा "भद्रा" कल्याणी प्रशस्ता "जाता" [जनेर्ण्यन्तात् साधुकारिणि तृन् (३,२,१३४), "जनिता मन्त्रे (६,४,५३)"—इति इडादौ णि-लोपो निपात्यते, ऋन्नेभ्यइति ङीप् (४,१,५)] ॥१॥

अथ द्वितीया।

२ १ १ २ १ १ २ ३ १ २ १ १
दीर्घं ह्यङ्कुशंयथाशक्तिम्बिभर्षिमन्तुमः।
१ १ १ २ ३ १ २ १ र २ र
पूर्वेणमघवन्पदावयामजोयथायमः।
३ १ र २ र ३ १ र २ र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ २ * ॥

"दीर्घम्" आयतम् "अङ्कुशं" सृणिं "यथा बिभर्षि" एवमायतां "शक्तिं" हे "मन्तुमः" मन्तु ज्ञाने, तद्वन्! ["मतुवसो रुः (८, ३, १)"—इति सम्बुद्धौ नकारस्य रुत्वम्] ईदृशीमिन्द्र! बिभर्षि धारयसि [डु भृञ् धारण-पोषणयोः जौहोत्यादिकः, श्लौ "भृञामित् (७, ४, ७६)"—इत्यभ्यासस्येत्वम्] हे "मघवन्" धनवन्निन्द्र! यथा "पूर्वेण" देहस्य पूर्वभागे वर्त्तमानेन "पदा"

---

* ऋ० वे० ८, ७, ११, ५।

पादेन "अजः" छागः "वयां" शाखां आकर्षति तथा पूर्वोक्तया अनया आक्रयामः अतः न् [नियच्छसि--यमेर्लेटाड़ागमः, "बहुलं छन्दसि (२, ४, ७३)"—इति शपो लुक्]। गतमन्यत् ॥ २ ॥

अथ तृतीया।

१ १ २ १र २र २ २
अवक्षद्दुर्हणायतोमर्त्तस्यतनुहिस्थिरम्।
२ १र २र २ २ २ १ २ २ १ २
अधस्पदन्तमीङ्कृधियोअस्माꣳअभिदासति॥
२ १र २र २ १र २र
देवीजनित्र्यजीजनद्भद्राजनित्र्यजीजनत्॥ ३* ॥१६

"दुर्हणायतः" दुःखप्रद-हरणमाचरतः "मर्त्तस्य" मनुष्यस्य शत्रोः "स्थिरं" दृढं बलम् "अव तनुहि" अवततं नीचीनं कुरु। "स्म"—इति पूरकः। "तम्" शत्रुम् "ईम्" एनम् अधस्पदं पादयोरधस्ताद्वर्त्तमानं "कृधि" कुरु। "यः" शत्रुः "अस्मान्" "अभिदासति" उपक्षिपति†। समानमन्यत् ॥३॥१६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० ८, ७, २१, ३।

† 'अभिदासति—हिंसां करोति'—इति वि०।

अथ षष्ठे खण्डे*—

परिस्वानइति-द्व्यचात्मके प्रथमं सूक्तम्,

तत्र, प्रथमा ।

१ २ २ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रेसोमोअचरत् ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ १ † ॥

अयं "सोमः" "पवित्रे" दशापवित्रे "पर्यचरत्" परितः चरति । कीदृशः सन्? "स्वानः" शब्दायमानः ["सुवानः"-इति बहूनां पाठः] सूयमानः "गिरिष्ठाः" गिरिस्थायी ग्रावसु वर्त्तमान इत्यर्थः । हे सोम ! स त्वं "मदेषु" मादकेषु सोमेषु "सर्वधा असि" सर्वस्य धाता दाता च भवसि ॥ १ ॥

अथ द्वितीया ।

२उ ३ २ ३ २उ ३ २ ३ १र २र
त्वंविप्रस्त्वङ्कविर्मधुप्रजातमन्धसः ।
१ २ ३ १ २
मदेषुसर्वधाअसि ॥ २ ‡ ॥

---

* "इदानीमामेयो वक्तव्यः । तत्र च वेदव्रत-प्रभृतीनि सामानि, आग्नेयो-क्तानीति"—इति वि० ।

† छ० आ० ५,२.४,९ ( २भा० २६पृ० )=ऋ० वे० ६, ८, ८, १ ।

‡ ऋ० वे० ६. ८, ८, २ ।

Digitized by Google

हे सोम! "त्वं" "विप्रः" विविधं प्रीणयिता विप्रसदृशो वा त्वञ्च "कविः" मेधावी, अतस्त्वम् "अन्धसः" अन्नात् जातं "मधु" मधुरसं प्रयच्छसीति शेषः॥ २॥

अथ तृतीया।

१२ १२३ १ २ ३ १२ ३ १ २
त्वेविश्वेसजोषसोदेवासःपीतिमाशत।

१ २ ३१ २
मदेषुसर्वधाअसि॥ ३ *॥ १७

हे सोम! "त्वे" त्वयि "पीतिं" पानं "विश्वेदेवासः" सर्वे देवाः "सजोषसः" समान-प्रीतयः सन्त "आशत" प्राप्नुवन्॥ ३॥ १७

३ २ ४ २ ४
॥ तृतीयंवैदन्वतम्॥ पाऽ५रि। स्वानो३गा३यिरि

५ २ १ १२ १२ १२ ३ २१ २ १ २२ १
ष्ठाः। पवित्रेसो। मोअक्षरात्। पवित्रे। सोमो२३।

४ ५ ३ ४ २ ४ ५ २ १
धारात्॥(१) तूऽ५वम्। विप्रा३स्तू३वङ्कवायिः। मधु

२ १ १ २ २ १ २ १ २ ४ ५
प्रजा। तमन्धसाः। मधुप्रजा। तमा२३। धासाः॥(१)

१ २ ४ २ ४२ ५ २२ १२ २ १ २ ३२
तूऽ५वे। विश्वे३सा३जोषसाः। देवासःपायि। तिमा

---

* ऋ० वे० ६, ८, ८, ३।

११ १२२ २ १ ४ ५ १
शता। देवेसःपो। तिमा२३। शाता। ओयि।

२ १ ५ ११ २ १२
मट्टौ। वा३४३ओ२३४वा। वुवा। सर्वधाः। यसायि।

१ ५२ २ १ १ १२ ३११११
मा२दा२३४औहोवा। ए३। युसर्वधाच्चसौ२३४५॥८*॥[१]

१ २ २ २ २ १
॥ वैदन्वताद्यम्॥ पारौ। स्तानोगिरिष्ठाः। पवा

२ ५ १२ १ १२
२यिन्वे२३४सो। मोच्चत्तारा२त्॥(१) तूवाम्। विप्र

१ २ ५ २ १
स्त्वङ्कविः। मधू२प्रा२३४जा। तमन्धामासा२ः॥(२)

१२ २ २ १२ ३ ५ २२ १
तूवे। विश्वेसजोषसः। देवा२सा२३५ःपो। तिमाशा

१ २ ५ २ ११ ५ ४
ता२। मट्टायिषूसा३। ई३या३। वंधो२३४वा। पा

५
५सोह्हायि॥ ९ † ॥ [२]

५ २ १ ३२ १ १
॥ चतुर्थवैदन्वतम्॥ औ३होयि। इट्टहाइहायि।

३ ५ २ २ ५ २३ ५
औ२चो२३४वा। परायिस्ता२३४नो। गिरा२३४यिष्ठाः।

---

* ऊ० गा० ३प्र० १ख० ८सा०।

† ऊ० गा० ३प्र० १ख० ९सा०।



Digitized by Google

पाविन्त्रे२३४सो । सोअस्मा२३४रात् ॥(१) तुवंवा२३४यि
प्रः । तुवङ्का२३४वीः । मधुप्रा२३४जा । तमन्वा२३४
साः ॥(२) तुवंवा२३४यिश्वे । सजोषा२३४साः । देवासा
२३४:पो । तिमांमा२३४ता । मदायिषू२३४सा । वंधा
आ२३४सो । औ३होयि । इहाइहायि । औ२होर
३४५वा६५६ । ए३ । उपा२३४५(३) ॥ १० *॥ [३]

॥ ऐध्मवाहाद्यम् ॥ परिस्रुवाइहा । नोगायि । रा
यिष्ठाओ२३४वा । ई२३४हा । पवित्रेसोमो३मा । धा
रादो२३४वा । ई२३४हा ॥(१) तुवंविप्रइहा । तुवाम् ।
कावांओ२३४वा । ई२३४हा । मधुप्रजाता३मा । धा
सांओ२३४वा । ई२३४हा ॥(२) तुवेविश्वइहा । सजो ।
षासांओ२३४वा । ई२३४हा । देवासःपीती३मा । आ

* ऊ० गा० १प्र० १अ० १०खा०

तान्वोर२३४वा । ई२३४हा । मन्दायि । पूसान्वोर२३४

वा । ई२३४हा । वंधाः । वंधार२धा२३४५सा६५६यि ।

ई२३४हा(३) ॥ ८ * ॥ [४]

॥ सन्विहितम् ॥ परिस्तुवानः । गा२यिरिष्ठाः । पवा

२यि । चे२३सो । मोऽन्ना२ न्नारात् । तुवंविप्रस्तु ।

वा२ २कवायिः । मध२ । प्रा२३जा । तमा२न्धासाः ।

तुवेविश्वे स । जो२षसाः । देवा२ । सा२३:पी । ति

मा२ग्राता । मा२३दायि । पू२सा । वंधा२३ः । हा

उवा३ । वा२३४सौ(३) ॥ ६ * ॥ [५]

॥ जराबोधीयम् ॥ परिस्तुवोवा । नोगिरिष्ठाः । पवा

यिचे२३सो । मोऽन्नारात् ॥(१) तुवंविप्रोवा । तूवक्क

वायिः । मधूप्रा२३जा । तमन्धासाः ॥(१) तुवेविश्वो

* ऊ० गा० ८प्र० १ख० ८गा० ।

† ऊ० गा० ८प्र० १ख० ६गा० ।

Digitized by Google

२ १ र २ १ १र१ १ र १
वा। साजोषसाः। देवासा२३:पो। तिमाश्वाता। म

१ ४ ५र १ १
दायिषू१सा२३र्वा। धाः। असो३४५ई। डा(३)॥१८*॥[६]

२ १ १ २र
॥ सुरूपोत्तरम्॥ परिसुवौहो२। इया। गोगिरा

१ १र १ २र १
यिष्ठा२ः। पवित्रे सौहो२। इया। सोमश्चारा२त्॥(१)

२ १ २ १ १
तुवंविप्रौहो२। इया। तुवङ्कवा२यिः। मधुप्रजौहो२।

१ २ १ १र १ १ २
इया। तमन्धासा२ः॥(२) तुवेविश्वौहो२। इया। स

र १ र र १ १ २र १
जोषासा२ः। देवासःपौहो२। इया। तिमाश्वाता२।

र१ १ २१र २ १
मदेषुसौहो२। इया। वंधाश्रा२३सा३४३यि। श्रो२३

४५ई। डा(३)॥२†॥[७]

२र र र र
॥ हाविष्मतम्॥ हाउपरिस्वानोगिरिष्ठाहाउ। प

१र २ १ १ २ ५ २र
वित्रेसो३। सोमश्चा२३४रात्॥(१) हाउतुवंविप्रस्तुव

१ १ १ २ ३ ५ २र
ङ्कविर्हाउ। मधुप्रजा३। तामन्धा२३४सा:॥(२) हाउ

* ऊ० गा० १२प्र०१ ख० १८सा० ।

† ऊ० गा० १४प्र० १ख० १२सा० ।

२ २ २ २ १२ १२ १ १ २ ३
तुवेविश्वे सजोषसोघाउ । देवासःपी३ । तायिमाश्वा२

५ १ १ १ १ १ १२
३४ता । ऐ२हो१आ२३यिहो । मदायिषू३सा । वधाः ।

१ ५२ २ १ १ २ १ १ १ १ १
आ२सा२३४औहोवा । इषिष्मते२३४५(३) ॥ ८ * ॥ [८]

२ ३ ४ ५ २ २ १ ३ ५
॥ आम्महम् ॥ परिसुवानऐ । हौऐहो२ ३ ४ या ।

१ १ ३ २ १ २ २ २ १
गिरिष्ठाऐ२हौऐ२हो३या । पवित्रे सोमो अक्षरदै२हौऐ

३ २ ३ ४ ५ २ २ ३ ५ १
२हो३या ॥(१) तुवंविप्रस्तुऐ । हौऐहो२३४या । वङ्क

१ ३ २ १ २ १ २
विरै२हौऐ२हो३या । मधुप्रजातमन्धसऐ२हो३या ॥(२)

१३२ ५ २ २ १ ३ ५ १२ ३ २
तुवेविश्वे सऐ । हौऐहो२३४या । जोषसऐ२हो३या ।

१२२ २ २ १ ३ १ १ २
देवासःपीतिमाशतऐ२हौऐ२हो३या । मादायिषुसा३१

२ १ ५ ४
२३ । वधो२३४वा । आपुसो६हायि(३) ॥ ९ † ॥ [९]

---

* ऊ० गा० १४प्र० १ख० ८गा० ।

† ऊ० गा० १५प्र० १ख० ९गा० ।

१ १ ४र र ५
॥ द्रावस्तुनिधनम् ॥ परिस्तुवार२३नोगिरिष्ठाश्हाउ ।
१ १र र र १ २ १ २ २
प।वित्रेसो । मोवाश्वा१रा२३त् । होवा३हायि ॥(१)
१ ४ ५ १ १र १ २
तुवंवार३यिप्रस्तुवङ्कविर्हाउ । माधुप्रजा । तमान्धा१
१ २ २ २१र ४र र
सा२३ः । होवा३हायि ॥(२) तुवेवार३यिश्वेसजोहाउ ।
१ र १ र १ र १ २ १ १
द्रायिवासःपी । तिमाश्वा१ता२३ । होवा३हायि । म
२ १ २ २ १र २
द्रायिषू१सा२३ । होवा३हा । वंधाः । भा२सा२३४
५र र २ २र १ २ १ १ १ १
भौहोवा । ए३ । द्रावसू२३४५(३) ॥ १० * ॥[१०]

१ २र
॥ प्रतीचीनेडङ्काशीतम् ॥ परिस्तुवानः । गा२यिरि
१ २र र र १ ७ २र २
ष्ठाः । पावित्रेसो । मोभाचरा२३४त् । हाहोयि ॥(१)
१ २ १ २र १ ७
तुवविप्रस्तु । वा२ङ्कवायिः । माधुप्रजा । तमान्धसा
५र २ १ र २ र १
२३४ः । हाहोयि ॥(२) तुवेविश्व स । जो२षसाः । द्रा

* ऊ० गा० १५प्र० १ख० १०गा० ।

२ १ २ १ ० ३२ २ १ २ १
यिवासःपो। निमाग्रता२३४। हाहोयि। मदेषुसार्वा
२ १ १ ४ ५ ४ ५
३धाः। असा। औ३होवा। ईडा(३)॥ ११ * ॥[११]

१ २ र २ २ १ १
॥ हाविष्कृतम्॥ परिसुवानोगाहाउरायिष्ठाः। प
१ २ २ १ २
विजेसो। मोआहार३रात्॥(१) तुवंविप्रस्तुवएहाउ
१ १ १ १ १ २
कावायिः। मधुप्रजा। नमन्धा२३साः॥(२) तुवेवि
२ २ २ १ १ २ १२ २ २
श्वेसजोहाउषासाः। देवासःपायि। तिमाग्ना२३ता।
१ १ १२ २ ५२
मदा२होश्यि। षू२३सा। वंधाः। षा२सा२३४ औ
२ १ १ ३ १ १ १ २
होवा। हविष्कृते२३४५(३)॥ १२ † ॥ [१२]

१ १२ १२२ २ १
॥ गौषूक्तम्॥ परिसुवानोगौ। हौहोवाहायि। रि
१ २ २ १ १ १
ष्ठाः। पवित्रेसोमऔ२। ऊवायि। ऊवा२यि। हा
१ १ १२ २ १ १
रा२त्॥(१) तुवंविप्रस्तुवौ। हौहोवाहायि। कवायिः।

---

* ऋ० गा० १५प्र० १ख० ११सा०।

† ऋ० गा० १५प्र० १ख० १२सा०।

२ १ १ १
मधुप्रजातमौ२। ऊवायि। ऊवा२यि। धासा२ः॥(२)
१ २ १ २ १ २ २ १ १ २ २ २
तुवेविश्वेसजौ। षौहोवाहायि। षसाः। देवासःपी
१ १ १ १ २
तिमौ२। ऊवायि। ऊवा२यि। म्राता२। मदेषुस
१ १ १ १ २
र्वधौ२। ऊवायि। ऊवा२यि। म्राता२। मदेषुस
२ १ १ १
र्वधौ२। ऊवायि। ऊवा२यि। धासा२३यि। हो
२ ५२ २ २ १२ २ २ १११ १
२वा२३४औहोवा। अग्निराऊता२३४५ः(३)॥ ७* ॥[१३]१७

ससुन्वे—इति-प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र, प्रथमा।

१ २ ३ १२ २२ ३ २ ३ १ २ १ १२ २२
ससुन्वेयोवसूनांयोरायामानेतायइडानाम्।
२ ३ १ २ ३ २
सोमोयस्सुक्षितीनाम्॥ १ † ॥

"सः" सोमः "सुन्वे" अभिषुवे ऋत्विग्भिः, यः सोमः वसूनां धनानाम् "आनेता", यश्च "रायां" रान्ति प्रयच्छन्ति क्षीरादिकमिति रायो गावः तेषा मानेता, यश्च "इडानाम्" अन्नानाञ्च, यश्च सोमः "सुक्षितीनां" सुनिवासानां शोभन-मनुष्य-युक्तानां गृहाणाम् आनेता विद्यते, सोऽभिषुतोऽभूदिति॥ १ ॥

* ऊ० गा० १-प्र० २खा० ७ग्ना०।

† ऋ० भा० ६, २, ४, ५ (२भा० २३२पृ०)=ऋ० वे० ७, ५, १९, २।

Digitized by Google

अथ द्वितीया ।

१ २ ३ १ २ ३   २ ३   १ १ ३ १ ३ १ २   ३ १ २   १ १
यस्यतइन्द्रःपिबाद्यस्यमरुतोयस्यवार्यमणाभगः ।

१   ३१ ३ १२   ३१ ३ १ २   ३ २ ३ १ १ १ ३ २
आयेनमित्रावरुणाकरामहएन्द्रमवसेमहे ॥ २ ॥ १८

हे सोम ! "यस्य" प्रसिद्धस्य "ते" तव रसम् "इन्द्रः" "पिबात्" पिबति [ पा पाने ( भ्वा० प० ), लेटयड़ागमः ] "यस्य" यस्य सोमं "मरुतः" पिबन्ति, "वा" अपिच "अर्यमणा"† एतन्नामकेन देवेन सह "भगः"‡ देवः "यस्य" यं सोमं पिबति, "येन" सोमेन "मित्रावरुणा"¶ मित्रावरुणौ वयम् "आ करामहे" अभिमुखीकुर्म्महे । तथा "महे" महते "अवसे" रक्षणाय येन च सोमेन "इन्द्रम्" अभिमुखीकुर्महे, तं त्वामभिषुणोमीत्यर्थः ॥ २ ॥ १८

१ १   १२२   १   १
॥ दीर्घम् ॥ सासू । न्वेयोवसू२३ नाम् । योरा२

१   २२ १ २ १ २ १ १
यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसुचि

* ऋ० वे० ७, ५, १९, ४ ।

† सुपांसुलुगित्याकारे ( ७, १, ३९ ) रूपम् ।

‡ "भगो व्याख्यातः ( १, १६ )। तस्य कालः प्रागुत्सर्पणात् तस्यैषा भवति— * * * । अन्धो भग इत्याहुरनुत्सृप्तो न दृश्यते। प्राशित्रमस्याक्षिणी निर्जघानेति च ब्राह्मणं जनं गच्छतीति वा जनं गच्छत्यादित्य उदयेन"—इति निरु० द० ६, १३-१४ ।



Digitized by Google

१ ५ ५ १ १ १
तार३४यिनो६हायि ॥(१) सोमाः । यःसुहितार ३ यि

२ १ १ २ १ २ १
नाम् । यास्या२तार्इ२ । द्रःपिबाद्यस्यमरु२३ताः । या

१ २ १ ० १ १
स्या२तार्इ२ । द्रःपिबाद्यस्यमरु२३ताः । यार ३ स्या ।

१र २ १र ५ ५ १ १ १र २
वार्य्यमणाभा २ ३ ४गो६हायि ॥(२) यास्या । वार्यमणा

२ १ १ १र र १ १र १
भार३गाः । आये२नामी२ । तृावरुणाकरामार३हा

१ १ र र १र २ १
यि । आये२नामी२ । तृावरुणाकरामार३हायि । आ

२ १ २र १ ५ ५
२३यिन्द्राम् । अवसेमार३४वो६हायि(३) ॥ ११* ॥ [१]

२ १ १ ० २ २ ५ २र १
॥ सप्तम् ॥ ससुन्वे३यः । वासू२३४नाम् । योरा

र १ १ २ २ ५ २र
या२म् । आनायिता३या३ः । इडा३२३ ४ नाम् । सो

१ २ ४ २ ५
नाः । याःसूर३भी३ । ता३४५यिनो६हायि(१) ॥१४†॥[२]१८

---

* ऋ० मा० ३प्र० २अ० ११सा० ।

† ऋ० गा० ११प्र० १अ० १४सा० ।

तंवइति-तृचात्मकं तृतीयं सूक्तम् ;

तत्र, प्रथमा ।

१ २    ३ १ २    ३ १ ३ १ २
तंवःसखायोमदायपुनानमभिगायत ।
३ ३ १२ ३ १ २    ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः ॥ १ * ॥

हे “सखायः” ऋत्विजः ! “वः” यूयं “मदाय” देवानां मदार्थं “पुनानं” पूयमानं तं सोमम् “अभि गायत” अभिष्टुत । “तम्” इमं सोमं “शिशुं न” शिशुमिव अलङ्कारैः चौरादिभिश्च स्वादूकुर्वन्ति, तद्वत् “हव्यैः” हविर्भिः मिश्रणैः “गूर्त्तिभिः” स्तुतिभिश्च “स्वदयन्त” स्वादूकुर्वन्ति ॥ १ ॥

अथ द्वितीया ।

१ ३ १ २   ३ २   ३ १ २    ३ १ २
संवत्सइवमातृभिरिन्दुर्हिन्वानोअज्यते ।
३   १२   १२३ २   ३ १ २
देवावीर्मदोमतिभिःपरिष्कृतः ॥ २ † ॥

“हिन्वानः” प्रेर्यमाणः “इन्दुः” सोमः वसतीवरीभिः “समज्यते” सम्यक् सिक्तो भवति ‡ । तत्र दृष्टान्तः—“वत्स-

---

* छ० आ० ६, २, ५, ४ ( १मा० १०८पृ० ) = ऋ० वे० ७, ५, ८, १ ।

† ऋ० वे० ७, ५. ८, २ ।

‡ ‘इन्दुः हिन्वानः साध्यमानः, अज्यते चक्र संपदे मनीषिभिः’—इति ॰ ।

इव" वक्तो यथा "मातृभिः"* गोभिः समक्तो भवति, तद्वत्। कीदृशः? "देवावीः" देवानां रक्षकः, "मदः" मदकरः "मतिभिः" स्तुतिभिः "परिष्कृतः" अलङ्कृतः [ भूषणार्थे "सम्प-युपेभ्यः (६, १, १३७)"—इति सुडागमः, "परिनिनिभ्यः (८, ३, ७०)"—इति सुटः षत्वम् ॥ २ ॥

अथ तृतीया।

१ १२ १२ ३ १ २ ३ १२ १२ ३ १ १
अयन्दक्षायसाधनोयꣳशर्धायवीतये।

३ २ ३ २ ३ १ २ ३ २
अयन्देवेभ्योमधुमत्तरःसुतः॥ ३ † ॥ १९

"अयं" सोमः "दक्षाय" बलाय वर्द्धनाय वा "साधनः" साधयिता भवति, तथा "अयं" सोमः "शर्द्धाय" बलाय "वीतये" देवानां भक्षणार्थं च भवति, "सुतः" अभिषुतः, "अयं" सोमः "देवेभ्यः" इन्द्रादिभ्यः "मधुमत्तरः" अतिशयेन माधुर्य-युक्तो भवति अत्यन्तं मदकरो भवतीति वा। ३ ॥ १९

२ १ ५ २
॥ कार्णश्रवसम् ॥ तां२३४वः। सा२३४खा। सा२

५ १२ १ १ १२ १ ८ २
३४खा। योमदा२३या। पूनानम। भिगाया२३ता।

---

* 'मातृभिः—तृतीया-बहुवचनमिदं' चतुर्थी-बहुवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।

† ऋ० वे० ७, ५, ८, २।

१ २ १ २   १२ २ १   १२२ २
शायिशुन्नह । व्यःखदया२३ । तगूर्त्तिभा३४३यिः ॥(१)

२ ५ २ ५   २१२ २ १
सा२३४व । त्सा२३४ई । वमातृ२३भायिः । आयिन्दु

१ २ २ १ २ १ १२१२ १२ १ २
र्हिन्वा । नोअज्या२३तायि । दायिवावीर्मा । दोमति

१ २ १ १ २ ५ २
भा२३यिः । परिष्कृता३४३ः ॥(२) आ२३४यम् । दा२३

५ ११२ २ १ २ २ १२ २
४क्षा । यसाधा२३नाः । आयछुभ्रहां । यवीता२३या

१ २२१२ २२ २ २ १ १२ २ १
यि । आयन्देवे । ओमधुमाधतरःसुता३४३ः । ओ२३

४५ई । डा(३) ॥ १२ * ॥ [१]

२ २ १२ २२ १
॥ सुज्ञानम् ॥ तंवःसखा । योमदाया । पुनाना]

२ १ २ १ २ १
मा२ । भिगायता । शिशुन्नाहाहा२ । व्यैःस्व । दा

५२ २ १२ २ १ १११
२या२३४औहोवा । तगूर्त्तिभिरे३उपा२३४५(१) ॥१०†॥[२

* ऊ० गा० ३प्र० २ख० ११गा० ।

† ऊ० गा० ८प्र० १ख० १०गा० ।

Digitized by Google

१ २ १ २
॥ काशीतम् ॥ तंवःसखा। योमदा२३या३४। पु

२ १२ २ २ २
नानमा। भिगाया२३ता३४। ग्निह्व्यैः। व्यैःसूदयन्त

१२ ३ ५२ २ ३
गू। तां २ थि। भा२३४। औहोवा। ऊ२३४

५
पा(१) ॥ ११ * ॥ [३] १९

सोमाःपवन्तइति-ऋचात्मकं चतुर्थं सूक्तम् ;

तत्र, प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २
सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः।

३ १ २ ३ १ २ ३ १ २ ३१२ ३१२ ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ १ † ॥

"गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः "इन्दवः" दीप्ताः "सोमाः" "पवन्ते अस्मभ्यम्" अस्मदर्थं चरन्ति आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः, "स्वानाः" सुवानाः अभिषूयमाणाः "अरेपसः" पाप-रहिताः, अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः स्वर्ग-प्रापका वा ॥ १ ॥

---

* ऊ० गा० ८प्र० १अ० ११गा०।

† उ० आ० ६, २, १, ४=( २भा० १५९ पृ० )—ऋ० वे० ७, ५, २, ५।

अथ द्वितीया।

१ २ १ २ १ २ १ १ १ १ २ १ २
तेपूतासोविपश्चितःसोमासोदध्याशिरः।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १
सूरासोनादर्शतासोजिगत्नवोध्रुवाघृते॥ २ *॥

"पूताः" पवित्रेण परिपूताः, "विपश्चितः" मेधाविनः, "दध्याशिरः" दध्नामिश्रणाः, "घृते" वसतीवर्याख्ये उदके "जिगत्नवः" गमन-शीलाः "ध्रुवाः" तत्र स्थैर्येण वर्त्तमानाः "ते" "सोमासः" सोमाः "सूरासः न" सूर्य्या इव "दर्शतासः" पात्रेषु सर्वैर्दर्शनीया भवन्ति† ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
सुषाणासोव्यद्रिभिश्चितानागोरधित्वचि।
१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इषमस्मभ्यमभितःसमस्वरन्वसुविदः॥ ३ ‡ ॥ २०

"गोः" अनडुहः "अधित्वचि" अधिषवण-चर्म्मणि "चिताना" ज्ञायमाना "अद्रिभिः" ग्रावभिः विविधैः "सुष्वाणासः" स्तूयमानाः "वसुविदः" वसुनो लम्भकाः "एते" सोमाः अस्मभ्यम्

* ऋ० वे० ७, ५, २, १।

† 'दर्शतासः—सर्वस्य द्रष्टारः'—इति वि०।

‡ ऋ० वे० ७, ५, ९, १।

Digitized by Google

"वृषम्" अवम् अभितः "समस्वरन्" सम्यक् शब्दयन्ति प्रयच्छन्तीति यावत्* ॥ ३ ॥ २०

५र र ३ १ ४ ५
॥ गौरीवितम् † ॥ सोमाः । पवा३ । तइन्दवाः ।

१ र १ १ र र १ ४
अस्मभ्यङ्गातुवित्तमा२३: । मायिता‌स्वाना३१२३: । अ

१ र २ ४ ५
रे५पसाः । सूवाधिया३१२३: । सुवोवा । वा५यिदोई

५ ५र र ३र २ ४ ५ १र र र
हायि ॥(१) तेपू । तासो३ । विपश्चिताः । सोमासो

र १ र र १ ४ र १
दध्याशिरा२३: । सूरासोना३१२३ । दशा५तासाः । जा

२ ४ ५ ४ ५
यिगत्नवा ३ १ २ ३: । ध्रुवोवा । वा५र्त्तोइहायि ॥(२)

४ र ३र २ ४ ५ १ र र र
सुषा । णासो३ । वियद्रिभायिः । चितानागोरधित्व

१ २ ४ १
चा२३यि । आयिषमस्मा३१२३ । अमा५भिताः । सा

४ ४
मस्वरा३१२३न् । वसोवा । वा५यिदोईहायि(३) ॥१२‡॥[१]

---

* 'समस्वरन्— उन्मादयन्'—इति वि० ।

† "महागौरीवितम्"—इति ख० पु० पाठः ।

‡ ऊ० गा० ३प्र० २ख० ११गा० ।

॥ मधुश्चुन्निधनम् ॥ सोमाःपवन्तइन्दवा३ए। अस्म
भ्यङ्गा३तुवित्तमा३ः। हा३हा। औ३हो३वा। आयिही
२। मित्राःस्वाना३अरेपसा३ः। हा३हा। औ३हो
३वा। आयिही२। स्वाधिया३ः। हा३हायि। औ
३हो३वा। आयिही२। सुवः। वा२यिहा२३४औहो
वा॥(१) तेपूतासोविपश्चिता३ए। सोमासोदा३धाआ
शिरा३ः। हा३हा। औ३हो३वा। आयिही२। सू
रासोना३दार्शतासा३ः। हा३हा। औ३हो३वा। आ
यिही२। जायिगत्नवा३ः। हा३हायि। औ३हो३वा।
आयिही२। ध्रुवाः। धा२र्त्ता२३४औहोवा॥(२) सु
ष्वाणासोव्यद्रिभा३यिरे। चितानागोश्राधित्वचा३।
हा३हा। औ३हो३वा। आयिही२। इषमस्मा३भ्या

१ १ १ ५ २ २ १
मभिता३ः । हा ३ हा । औ३हो ३ वा । आयिही२ ।
१ २ १ १ ५ १ १ १
सामस्वरा३न् । हा३हायि । औ३हो३वा । आयिही
१ २ ५र र १ १ २१११
२ । वस्तु । वा२यिदा२३४औहोवा । मधुश्चु तार२३४
१
पुः(३) ॥ १४ * ॥ [२]

२र १ २ ५
॥ वाङ्निधनक्रौञ्चम् ॥ सोमाःपावा३१२३४ । तइ ।
३१ २ १ १ २ ५ ३१ २ १
दवा३ । अस्मभ्यङ्गा३१२३४ । तुवि । तमा३ः । मित्रा
२ ५ र ३२ ११ २
सखाना३१२३४ः । चरे । पसा३ः । सुवाधीया३१२३ः ।
४ २र १ १ ५ ३ २
सुवा५विदा३ ॥(१) तेपूतासो३१२३४ । विपः । चिता
२र १र र १ ५र ३ २ २र १
३ः । सोमासोदा३१२३४ । धिया । श्रिरा३ः । सूरासो
२ ५ ३र २ २ १ २
ना३१२३४ । दर्श । तासा३ः । जिगाताना३ १ २ ३ः ।
४ २१ २ ५ ३ २
ध्रु वा५घृता३ ॥(२) सुषाणासो३१२३४ । विय । द्रिभा
२१र र २ ५ ३ २ २ १
३यिः । चितानागो३१२३४ः । अधि । त्वचा३यि । वृषा

* ऊ० गा० १प्र० २ख० १४गा० ।

Digitized by Google

१ ५ ३ २ २ १ १
मास्ना३१२३४। भ्यम। भिता३ः। समास्वारा३१२३
४
न्। वसूपुविदा३उ(३)॥ १५ *॥ [३]

५र २ ३ १ २ ४ ५ १ १ २ १
॥ ऐडक्रौञ्चम्॥ सोमाःपवन्तइन्दवाः। यस्माभ्यङ्गा।
१ २ २ १ २ २ ५ १र १र १र१ २ १ १
तुवित्तमाः। मायित्राश्रो२३४वा। स्वानाअरेपसा २ ३
१ १ २ र २ १ २ १ २ ५र र १र २र
४ ५ः। सुवाधियाः। सुववा२३यिदा३४३ः ॥(१)तेपूतासो
३ ४ ५ १र १ १र १ २ १र २ १ २ २
विपश्चिताः। सोमासोदा। धियागिराः। स्वराञ्चो२३
५ १र १ २ १र २ १ १ १ १ २ २ १ २ १र
४वा। सोनदर्श्रतासा२३४५ः। जिगत्नवाः। ध्रुवाघा
२ ५ र १र १र ३ ४ ५ २ १
२३त्ता३४३यि ॥(२) सुष्वाणासोवियद्रिभायिः। चिता
१र १ २ २ २ १ २ ३ ५ २ १
नागोः। अधित्वषायि। आयिषाओ२३४वा। अस्म
१ १ २ १ १ १ १ २ २ १ २ १ २
भ्यमभिता२३४५ः। समस्वरान्। वसुवा२३यिदा३४३ः।
१
घो२३४५ई। ई। डा(३)॥ १६ †॥ ४]

१र २ २ ४ ५ ५ २
॥ ध्यावाश्वम्॥ सोमा३१ः। पा३व। तइ। दा३

● ऊ० गा० ३प्र० १खा० १५सा०।
† ऊ० गा० ३प्र० १ख० १६सा०।

५ १ २ १ १
षः। एहिया। घा। वाभ्यज्ञातू। वि। तमा२ः।
१२ २ १२ २ ४ ५ १२
एहिया२। मित्रास्सनानाआ३रे३। पा२३४सा:। ऐ
१२ २ १ १ ४ २
हा२यि। एहिया२। सुवाधियाःमू३वा३ः। वा३४५यि
५ १२१ २ ४ ५ २
दो६हायि॥(१) तपू३१। ता३सो। विपः। घा३
४ ५ १ २ २ २
यितः। एहिया। सो। मासीदधावि। आ।
१ १२ २ २ १२ १ ४ ५
गिरा२ः। एहिया२। सूरासीनाद्दा२ओ३। ता२३४सा:।
१२ १२ १ १ ४ २
ऐहा२यि। एहि या२। जिगत्नवोभ्रू३वा३ः। घा३
५ १ १ २ ४ ५ ५
४५ सौ६हायि ॥(२) सुषा३१। णा३सो। विय।
२ ४ ५ १ २ २ २ २ १
द्रा३यिभिः। एहिया। चायि। तानागोरा। धि। त्वचा
१२ १ २ ४ ५
२यि। एहिया२। इषमस्मा३भ्या३मा३। भा२३४यिता:।
१२ १२ १ १ २
ऐहा२यि। एहिया२। समस्वरान्वा३ च३। वा३
५
४५ यिदो६हा यि(३)॥ १६ *॥ [५]

* ऊ० गा० १५प्र० १अ० १६सा०।

२१ र १ १
॥ आन्धीगवम्॥ सोमाःपवन्तआ१यिन्दावाः। अ
र २ १ १ र २ १र २र
स्मभ्यम्। गातूर३वा। ऊम्मा२१ऽ२। तमामित्रास्सा
१र २र१ २ १ १ १ १ १ २ २ १ १
माअरेपसा२३४५ः। सूवा३उवा। धी२याः। स्व२४वाः।
१ २ ४ ५ २र र र र २ १र
विदा। औ३होवा॥(१) तेपूतासोविपा१श्चायिताः। सो
र २ १ १ र र २र १
मासः। दधार३वा। ऊम्मा२१ऽ२। श्रिरःसूरासोन
१ १र २ १ १ १ १ १ २ २ १
दर्शतासा२३४५ः। जायिगा३उवा। त्वा२बो। ध्रू२३
१ १ २ ४ ५ १ र र र
वाः। घृता। औ३होवा॥(२) मुष्वाणासोवियाश्द्रा
१ १ र र र २ १
यिभाविः। चितानाः। गोरार३धा। ऊम्मा२१ऽ२।
१र २१ २ १ २ १ १ १ १ १ २ २ १
तचोषमस्थाभ्यमभिता२३४५ः। सामा३उवा। स्वा२रा
२ १ २ ४ ५
व्। वा २ ३ स्व। विदा। औ ३ होवा। हो ५ ई।
डा(३) ॥ १७ * ॥ [६]

२र र २ १ २
॥ निषेधम्॥ सोमाःपवन्ता ३ इन्दवाः। अस्माभ्य

* ऊ० गा० १५प्र० २ख० १७ वा०।

क्रा । तुविक्तमा२ः । इहा३ । मायिवा३सखानाः । हा
वो२३४हा । अरेपा२३साः । इहा३ । सूवा३धीयाः ।
हाहो२३४हा । सुवा३र्वा५यिदा६५६ः ॥(१) तेपूतासो
वा३यिपश्चिताः । सोमासोदा । धियाशिरा२ः । इहा
३ । वरा३सोना । हाहो२३४हा । दर्शता २ ३ साः ।
इहा३ । जायिगा३त्नावाः । हाहो२३४हा । ध्रुवा३
धा५र्त्ती६५६यि ॥(२) सुष्वाणासोवा३यद्रिभायिः । चिता
नागोः । अधित्वचा२यि । इहा३ । आयिषा३मास्मा ।
हाहो२३४हा । अमभा२३यिताः । इहा३ । सामा३स्व
रान् । हाहो२३४हा । वसू३वा५यिदा६५६ः । हे२३४
५(३) ॥ १८ * ॥ [७]

॥ क्रौञ्चाद्यम् ॥ सोमाःपवौहो । ताइन्दवाः । अस्म

* ऊ० गा० १५प्र० १अ० १८गा० ।

१ १  ४  १र १र र
भ्यज्ञा३ । तूवा३यिता५मा६५६ः । मित्रास्त्वानीचो ।
२र १र  २र  १ १  ४
आरेपसाः । सुवाधिया३ः । सूवा३यिर्वा५यिदा६५६ः ॥(१)
२रर१र र  २र १  २र र र  १ १
तेपूतासौचो । वीपश्चिताः । सोमासोदा३ । धाआ३
४  २रर१र र  २ १र  २
आ५यिरा६५६ः । सूरासोनौचो । दर्शतासाः । जिग
१ १ ४  २ र १र र
त्नवो३ । अ्रूवा३घा५र्त्ता६५६यि ॥(२) सुषाणासौचो ।
२र१  १ र र  १ २  ४
वीयद्रिभायिः । चितानागो३ः । आधा३यित्वा५चा६५
२ १ र  २र १  २  १
यि । इषमसौचो । भ्यामभिताः । समस्वरा३न् । वा
१ ४
सू३वा५यिदा६५६ः(३) ॥ १ * ॥ [८]

४र २  ४ २ ४
॥ यज्ञायज्ञीयम् ॥ सोमाऽ५ःप । वा ३ न्ता ३ इन्दा
५ १  २१ २ २ १ १र
वाः । आसभ्यज्ञा । तूवायित्ता३माः । मित्रा २स्वा ।
र २ १  २ २ १र
नाआ२३रे । ऊम्मायि । पा३साः । सूवाधियःसुवा२
३ २ १ २ १रर र र र १
विंदाउ ॥(१) दास्तायि । पूतासोविपश्चितःसोमासोदा ।

---

* ऊ० गा० १६प्र० १ख० १वा० ।

Digitized by Google

२ १ २ २ १८ १ २ १
धा३आआ३यिराः। सूरा२सः। नदा२३र्शा। ऊम्मा
२ २ १ २ २ १ १
यि। ता३साः। जायिगव्यवोधवा२घुनाउ॥(२) तायि
२ १२ २ २ २ २ १ १ २ २
सू। षाणासोव्यद्रिभिस्सुतानागोः। आ३भायित्वा३चा
१ १ १ १ २ २
यि। दूषा२म। आभ्या२३मा। ऊम्मायि। भा३यिताः।
१ २ २ १११
सामस्वरन्वसू२विदाउ। वा३४५(३)॥ १४ *॥ [९] २०

अथायापवेति-ऋचात्मकं पञ्चमं सूक्तम्,

तत्र, प्रथमा।

३ १ ३ १ २ १२ ३२
अयापवापवस्वैनावसूनि
३ १ २ ३ १ २ ३ १ २
माᳪश्चत्वइन्दोसरसिप्रधन्व।
३१ ३ १ ३ २ ३ २ ३ १
अधूश्चिद्यस्यवातोनजूतिं
२ ३ १ २ ३ १ २ ३ १ २
पुरुमेधाश्चित्तकवेनरन्धात्॥ १ †॥

हे सोम! "अया" अनया "पवा" पवमानया "धारया" "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—

* ऊ० गा० ११प्र० १ख० १४गा०।

† छ० आ० ६, १, ५, ९ (१भा० ९४१ पृ०)=ऋ० वे० ७, ४, २६, १।

पूञ् पवने ( क्र्या० प० ) "अन्येभ्योऽपि दृश्यन्ते ( ३,२,१७८ )" —इति विच् प्रत्ययः, आर्द्धधातुक-लक्षणो गुणः, "सावेकाच ( ६, १, १६८ )"—इति तृतीयाया उदात्तत्वम् ]। तथा हे "इन्दो!" त्वं "मांसत्वे" मन्यमानानां चातके "सरसि" उदके वसतीवर्याख्ये "प्रधन्व" प्रगच्छ। "यस्य" सोमस्य शोधने सति "अप्नस्वित्" सर्वेषां प्रज्ञापको मूलभूतो वा आदित्योऽपि "वातः न" वायुरिव "जूतिं" वेगं प्राप्तः सन् किञ्च "पुरुमेधस्वित्" बहुविध-यज्ञ इन्द्रोऽपि "तकवे" [ तकतिर्गति-कर्मसु पठितः ( निघ० २, १४, ६९ ), अस्मादौणादिक उन् प्रत्ययः ] सोमं गच्छत ; मह्यं "नरं" कर्मनेतारं पुत्रं "धात्" ददातु प्रयच्छतु। स त्वं प्रधन्वेति पूर्वेण सम्बन्धः॥

"यस्य"-"अत्र"—इति पाठौ, "जूतिं"-"जूतः"—इति, "धात्"-"दात्"—इति च॥ १॥

अथ द्वितीया।

२ १ ९ २ १ २ २ १ २ १
उतनएनापवयापव

१ १ २ २ २ १ २ २ १
स्वाधिश्रुतेश्रवाय्यस्यतीर्थे।

२ १ २ १ २ २ १ २ २ २
षष्टिᳬसहस्रानैगुतोवसूनि

१ २ ७ २ १ १ २ १ २
वृत्तनपक्वम्धूनवद्रणाय॥ २ *॥

* ऋ० वे० ७, ४, २१, २।



Digitized by Google

हे सोम! "उत" अपिच "अवाय्यस्य" सर्वैः अवणीयस्य तव "श्रुते" प्रसिद्धे [ यद्वा, षष्ठ्यर्थे चतुर्थी श्रुत-शब्दस्य ] "तीर्थे" स्थाने "नः" अस्माकं स्वभूते यज्ञे "एना" अनया "पवया" पूयमानया "धारया" अधिकं "पवस्व" क्षर। "नैगुतः" नीचीनं गन्तवे* [ न-शब्दायन्त इति निगुतः शत्रवः, तेषां हन्तृत्वेन सम्बन्धी ] सोऽयं सोमः "षष्टिं" षष्टि-सङ्ख्याकानि "सहस्रा" सहस्राणि "वसूनि" धनानि "रणाय" शत्रूणां जयार्थं धनवत् अस्मानकम्पयत् प्रायच्छदिति यावत्। कथमिव? "वृक्षं न पक्वं" पक्व-फलं वृक्षं यथा कम्पयति फलार्थी, तद्वत् ॥२॥

अथ तृतीया।

२ ३ १ २ ३ २ ३ १ २ ३१र
महीमे अस्य वृषनाम शूषे

२र ३ १२ ३ १ २
माꣳश्चत्वे वा पृशने वा वधत्रे।

१ २ ३ १ २ ३ १ २ ३ २ ३
अस्वापयन्निगुतः स्नेहयच्चापा

२ ३ ३१ १ २ ३ २
मित्राꣳअपाचितो अचेतः ॥ ३ † ॥ २१

"मही" महती प्रभूते "वृषनाम" [सुपां सुलुगिति ( ७, १. ३९) सुपो लुक्] वृषनामनी वर्षण-नमने, शराणां वर्षणं, शत्रूणां नम-

---

* 'नैगुतः—निगुतानां नितरां गोपितानाम्'—इति वि०।

† ऋ० वे० ७, ४, २१, ४।

नन्, "इमे" एते द्वे कर्म्मणी "अस्य" सोमस्य "भूषे" सुखकरे*
भवतः; ये च कर्म्मणी "मांश्चत्वे" [अश्वनामैतत्(निघ०१,१४,१८)]
अश्वैः क्रियमाणे युद्धे† तत्साध्यत्वाद् युद्धमिह गृह्यते ] "वा"
अपिवा "पृश्नने" स्पर्शन-साध्ये बाहु-युद्धे "वधत्रे" शत्रूणां
हिंसन-शीले भवतः। सः ऽयं "निगुतः" नीचैः शब्दायमानान्
शत्रून् "अस्वापयत्" असूषुपत् अवधीदित्यर्थः। किञ्च
"म्लेहयत्" प्राद्रवयत् सङ्ग्रामाच्छत्रून्। अथ प्रत्यक्षः। हे
सोम! स त्वम् "अमित्रान्" शत्रून् "अपाचित" अपगमय।
तथाच "अपाचितः" अग्नि-चयन मकुर्वतः नास्तिकांश्च‡ "इतः"
अस्मच्छाखायात् अपाचेत अपगमय [अञ्चतिर्गतिकर्मा(भ्वा० प०)]
॥३॥२१

॥ औष्ट्राद्यम् ॥ औहोवाायि। अयोवाायि। पवा
वस्वैनावस्व२३नी। औ३वोयि। इहा। ई३या। मा
श्चत्वइन्द्रोसरसिप्रधार२३न्वा। औ३वायि। इहा। ई३
या। माश्चत्वइन्द्रोसरसिप्रधार२३न्वा। औ३हायि।

---

* 'भूषे—स्वापयामः. अथवा भूषे शोभनाय'—इति वि०।

† 'मांश्चत्वे—मंहनीयत्वाय'—इति वि०।

‡ 'अपाचितः—पतिता चेतसा भवन्ति'—इति वि०।

Digitized by Google

२ १ ५ १ १ २ २ २ १ १ १ ५
हुवा । ई३या । अग्निर्वृत्राणि जङ्घनत् । औ३

२ १ ५ १ १ २ २ २ १ १ २
होयि । हुवा । ई३या । पुरुमेधाश्चित्तकवेनराः२३धा

५ १ २ १ १ १ ५२ २
त् । औ३होयि । हुवा । ई२ । या२३४ । औहोवा ॥(१)

१२ १ १ १ १ १ २ २ २ २ १ २ ५
औहोहायि । उतोहायि । नएनापवयापवा२३स्वा । औ

२ २ २ ५ १ १ २ २ २ १
३होयि । हुवा । ई३या । अधिश्रुतेश्रवायियस्यतार२प

१ ५ १ २ १ ५ १ १
यिर्थायि । औ३होयि । हुवा । ई३या । षष्ठिꣳसह

२ २ २ २ १ १ ५ १ २ १ ५ १
स्रानैगुतोवस्र२३नी । औ३होयि । हुवा । ई३या । वृ

१ २ १ १ १ ५ १२ २ १ १
त्रन्नपत्कन्धूनवद्रणा२३या । औ३होयि । हुवा । ई२ ।

२ ५२ २ १२ १ १ १ १ २
या२३४औहोवा ॥(२) औहोहायि । मघोहायि । मे

२ ५ २ २ १ ५ १
अस्यवृषनामघृ२३षायि । औ३हायि । हुवा । ई३या ३

१२ २ २ २ २ १ १ १ ५ २ २ १
माꣳस्त्वेवापृग्नेवावधा२३नायि । औ३हायि । हुवा ।

५ १ १ २ २ १ १ १ ५ २
ई३या । अस्थापयन्निगुतस्तेदया२३स्वा । औ ३ होयि ।

११ ५ २ १र २र र र २ १ २
इहा । इ३या । अपामित्रा॑अपाचितोअचा२३यिना: ।
५ २ २२ १ २ ५र र
औ३होयि । इहा । इ२ । या २ ३ ४ । औहोवा ।
१ १र २ २
ए३ । दीदिहो१(३) ॥ १७ * ॥ [१]

१र २र ३र २ १ २ २
॥ इहवद्वासिष्ठम् ॥ औहोवाहा३ होयि । इहा ।
१र २ १र १ २ ३ ४ ५ १र १ २
अयापवा । पवस्वै । नावसूना । मा॑अस्वत्वआयि । दो
१ २ ३ ४ ५ २१ २ १ र २ ३ ४
३सर । सिप्रधन्वा । अभ्रस्विद्या । म्या३वा । तोनजू
५ २ १र २ १ २ २ ४
तोम् । पुरुमेधा: । चित्रक । वा३४३यि । ना३रा५
२ १ २ १ २ ३ ४ ५ २
म्या६५ई त् ॥(१) उतनए । ना३पव । यापवस्वा । म
१ २ १र २ ३ ४ ५ २ १
धिश्रुतायि । अवायि । यश्नतायिर्थायि । षष्ठि॑सहा ।
२ १ र २ ३ ४ ५ २ ३ १र २
षा३नैगु । तोवेसूनी । भूत्तन्नपा । कधून । वा३४३त् ।
१ ४ २ १रर २ १ २ ३
रा३णा५या६५ई ॥(२) मद्दोमेआ । म्या३त्रूष । नाम
४ ५ १र १ र २ १ र २ ३ ४ ५ २
अ्षायि । मा॑अस्वत्वेवा । पुप्रने । वावधत्रायि । म

* ऋ० मा० ३प्र० १ष० १७खा० ।

१र २ १ २ ३ ४ ५ १र २र ३र २ १
स्वापयात्। निगुतः। स्नेहयच्चा। औहोवाहाइचोयि।
२ १ १र २ १र २ २ ४
हुत्वा। अपामित्राऽ३। अपाचि। तो३४३। आ३चा
५यिता६५६ः(३) ॥ १० * ॥ [२]

२ र १ १ १र र १
॥ वार्त्रतुरम् ॥ अयापवोवा पावस्वैना। वसूर३
२ १र र २ १ २ १ २ १
नी। माऽ३स्वत्वइन्दोसरसि। प्रधा२३न्वा। अधस्विद्य
२ १ २ ३ ५ १ २ १
स्य। वा। तोनाजू२३४तोम्। पुरु। मायि। धास्वि
१ ४ २ ५ २
त्ताका२३। वा२३यिना३। रा३४५धोइहायि ॥(१) उत
१ २ १ १र १ २ १ र र
नओवा। नापवया। पवा२३स्वा। अधिश्रुतेश्रवायि
२ १ २ १ २ १ २र १र २
य। स्यता२३यिर्थायि। षष्टिऽ३महस्रानै। गू। तोवा
२ ५ १ २ १ १ ४
सू२३४नी। वृत्वाम्। ना। पाक्रन्धूना२३। वा२३द्रा
२ ५ २र १ २ १ १र
३। णा३४५योइहायि ॥(२) महीमओवा। स्यात्रूषना।
१ २ १र र र र र १ २
मघ्रू२३षायि। माऽ३स्वत्वेवापृ३नेवा। वधा२३त्वायि।

---

* ऋ० गा० ८प्र० २ अ० १०गा०।

Digitized by Google

१ र २ १ २ १ २ ३ ५ १
अस्वापयन्निगुतः । स्ने । हायार२३४वा । अपा । मा

२ १ १ ४ २
यि । वा॒ऽअपावा२३यि । तो२३आ३ । वा३४५यितो

५
६हायि(३) ॥ १* ॥ [३] २१

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य

षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तम-खण्डे—

प्रथमहचे†, प्रथमा ।

२ ३ १ २ १ २ ३ १ ३ २ ३ १ २ ३क २र
अग्ने त्वन्नोअन्तमउतत्राताशिवोभुवोवरूथ्यः ॥ १ ॥ ‡

हे "अग्ने !" "वरूथ्यः" वरणीयः सम्भजनीयः । यद्वा, वरूथैः परिभिर्वृतः त्वं "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भुवः" भव । "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव ॥

"भुवः"-"भव"—इति पाठो ॥ १ ॥

---

* ऊ० गा० २३प्र० २ख० १गा० ।

† 'यज्ञायज्ञियमग्निष्टोमसाम'—इति वि० ।

‡ छ० आ० ३, २, १, २ ( १भा० ८९८ पृ० )=ऋ० वे० ४, १, १६, १ ।

Digitized by Google

अथ द्वितीया।

१ २ ३ १२ ३२ ३ १ २ ३ १ २ ३ १ २
वसुरग्निर्वसुश्रवा अच्छा नक्षि द्युमत्तमो रयिं दाः ॥ २* ॥

"वसुः" वासकः "अग्निः" सर्वेषामग्रणीः "वसुश्रवाः" व्याप्तान्नस्त्वं† "अच्छ" आभिमुख्येन "नक्षि" अस्मान् व्याप्नुहि। "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "रयिं" पश्वादि-लक्षणं धनं "दाः" अस्मभ्यं देहि‡ ॥

"द्युमत्तमः"-"द्युमत्तमम्"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वा शोचिष्ठ दीदिवः सुम्नाय नूनमीमहे सखिभ्यः ॥३¶॥ २२

हे "शोचिष्ठ" अतिशयेन शोचिष्मन्! "दीदिव" स्वतेजोभि-र्दीप्ताग्ने! "तं" "त्वा" त्वां "सुम्नाय" सुखाय [सुम्नमिति सुखनामैतत् (निघ० ३, ६, १७)] तदर्थं "सखिभ्यः" समान-ख्यातिभ्यः पुत्रेभ्यः§ सुखार्थञ्च "नूनम्" "ईमहे" याचामहे ॥ ३ ॥ २२

---

* ऋ० वे० ४, १, १६, २।

† 'वसुश्रवाः—अन्नेन धनेन च सम्पन्नः'—इति वि०।

‡ 'रयिन्दाः,—रयिं धनं ददातीति रयिन्दाः,—इति वि०।

¶ ऋ० वे० ४, १, १६, ४।

§ 'सखिभ्यः-ऋत्विग्भ्यः'—इति वि०।

Digitized by Google

१ २ १ २ १
॥गूहम्॥ ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३।
५ १ १ २ र १ र २ १ र २ ३ १ १ १ १ २ १ र
तार३४माः। उतत्रातासिवोभुवा२३४५ः। शिवोभुवार
३ ५ ४ ५ १ २ १
३ः। वरोवा। था५योऽहायि॥(१) वाद्यः। अ। ग्नि
२ १ ५ १ र २ १
र्विवा२३सू। ऊम्मार३। आ२३४वाः। अच्छानक्षिद्युम
१३ १ १ १ १ २ १ ४ ५ ४
त्तमार३४५ः। द्युमत्तमार३ः। रयौवा। आ५यिन्दो
५ १ २ १र २ १
ऽहायि॥(२) तान्वा। शो। चायिष्ठा२३री। ऊम्मा
५ २ १र २र १ र २ २ १ १ १ १ २
२३यि। दी२३४वाः। सुम्नायनूनमीमहा२३४५यि। न
१र ४ ५ ४ ५
मीमहा२३यि। सखोवा। भा५योऽहायि(३)॥१८*॥[१]

२ २ र ५
सत्रासाहीयम्॥ अग्ना३४यि। त्वन्नोअन्तमः। ओो
५ २ १ १ १ २ १ ५
ईवा। उतत्रा२ता। शा२यिवो। भुर३वाः। वरौ
१र २र २ १ ५ ५ २ २
३हो। वाहा३४३यि। था२३४योऽहायि॥(१) वद्ध३४ः।
र ५ ५ २ १र १ १
अग्निर्वसुश्रवाः। ओईवा। अच्छाना२क्षायि। द्यू२मा।

* छ० आ० ३प्र० २ख० १८खा०।

२ १ ५ १र २र १ १ ५
तार२३माः। रयौ३र्वो। याहा३४३यि। या२३४यिन्दो

५ १ १ र र ५ र
इहायि॥(२) तन्त्वा३४। शोचिष्टदीदिवः। ओ६वा।

२ १र १ १ २ १ ५ २र
सुम्नाया२नू। मा२माायि। मा२३हायि। सखौ३र्वो।

२र १
याहा३४३यिइहावि(३)॥ १५ *॥ [२] २१

अथ द्वितीय-ऋचः†—

प्रथमा।

१ १उ २ १ १ २ १ २ १ १२ २ १
इमानुकम्भुवनासीषधेमेन्द्रश्चविश्वेचदेवाः॥ १‡ ॥

"इमा" इमानि परिदृश्यमामानि भुवनानि "नु" क्षिप्रं "सीषधेम" साधयेम वशीकरवाम। "कम्"—इति पूरकः [यद्वा, इमानि सर्वाणि भूतजातानि अस्मभ्यं कं सुखं सीषधेम साधयन्तु; पुरुषव्यत्ययः (३,१,८५)]। "इन्द्रश्च" "विश्वे" सर्वे अन्ये "देवाः च" स्तुत्या प्रीत्या "इमम्" अर्थम् साधयन्तु॥

"सीषधेम"-"सीमधाम"—इति पाठो॥ १ ॥

---

* ऊ० गा० ११प्र० १ख० १५सा०।

† 'सीसमस्य भद्रम्'—इति वि०। सामैतद्रूपमानस्य।

‡ ऋ० आ० ५, १, १, ६ (१भा० ९०२पृ०)=ऋ० षि० ८, ८, १५, १।

Digitized by Google

अथ द्वितीया।

१ २ ३ ३क २र ३ १ २ ३ १र २र ३ १ २
यज्ञश्चनस्तन्वञ्चप्रजाञ्चादित्यैरिन्द्रःसहसीषधातु॥२*॥

"नः" अस्माकं "यज्ञं" ज्योतिष्टोमादिकञ्च यागं "तन्व" शरीरञ्च "प्रजां" पुत्रादिकाञ्च "आदित्यैः" अदिति-पुत्रैः अन्यै-र्देवैः सह वर्त्तमानः "इन्द्रः" "सीषधातु" साधयतु॥

"सहसीषधातु"-"सहचीकृपाति"—इति पाठौ॥२॥

अथ तृतीया।

१ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
आदित्यैरिन्द्रःसगणोमरुद्भिरस्मभ्यंभेषजाकरत्॥३†॥२३

"आदित्यैः" अदिति-पुत्रैः मित्रादिभिः "मरुद्भिः" च "सगणः" गण-सहितः "इन्द्रः" "अस्माकम्" अस्मभ्यम् "भेष-जानि" औषधानि "करत्" करोतु॥

"भेषजाकरत्"-"भूत्वितातनूनाम्"—इति पाठौ॥३॥२३

---

* ऋ० वे० ८, ८, १४, २।

† ऋ० वे० ८, ८, १४, ३।

Digitized by Google

अथैकर्गात्मकं सूक्तं प्रवोर्चोपेति, चतुरक्षरात्मिका*
काचिदियमृग्रूपा ; यथा बह्वृचानां
"भद्रन्नोअपिवातयमनः"—इत्येक
एव पाद ऋगात्मकस्य
तद्वत् † ॥

१ २र
प्रवोर्चोप ॥ १ ॥ २४

हे ऋत्विग्यजमानाः ! "वः" यूयम् "उप" समीपे "प्रार्च" प्रकर्षेणेन्द्रं पूजयत ॥ १ ॥ २४

२१ र ५
॥ उद्वंशपुत्रम् ॥ प्रवाः । आयिन्द्रायवृहान्तमा
२ १ र र २ २ २ १ २
२३या । वायिप्रायगाःथङ्गा१या२ता । याञ्जुजोवा३ ।
२ १ १ १
उप् । षा२तो२३५पुहायि ॥(१) अर्चा । ताअर्कम्मरु

---

* वस्तुतस्तु "प्रवोर्चोप"—इति नैषा चतुरक्षरात्मिका ऋक् प्रत्युत छन्दआर्चिक-श्रुतायाः "प्रवइन्द्रायबृहतेमाय (५, २, १० । १भा० ८९५पृ० )"—इत्यस्याः प्रतीकं "प्रवः"—इति, किञ्च "अर्चन्त्यर्कम्मरुतःस्वर्का (५,२,१,९ । १भा० ८९४पृ०)"—इत्यस्याः प्रतीकम् "अर्च"—इति, तथैव "उपप्रक्षे मधुमतिक्षियन्तः (५, २, १, ८ । १भा० ८९३पृ० )"—इत्यस्याः प्रतीकम् "उप"—इति, एवमेव सम्पन्नं "प्रवोर्चोप"—इति, ऊहगान-तृतीयप्रपाठकान्तिममुद्वंश पुत्रनाम (१००पृ०) सामैवास बद्धमान मन्यथा तस्य मूलीभूत-ऋचस्त्वाभाव एव सर्वथा स्यात् । अन्यत्राप्यदर्शनात् ।

† 'उद्वंशपुत्रोऽष्टावाकसाम । "प्रवइन्द्राय"—"अर्चन्त्यर्कम्"—"उपप्रक्षे"—एवन्तृचस्छन्दसिका-भाष्ये उक्तार्थः'—इति वि० ।

० २ १ २ २ २ १ १ ऽ
ताःसुवार२३र्क्काः । आस्तोभतिश्रुतो१यू३वा । स आ३उ
२ २ १ २ १
वा३ । उप् । आ॑ऽ२यिन्द्रो३५ह्वायि ॥(२) उपा । प्रा
२ ७ २ १२ ११ २
स्वेमधुमतायिच्चिया २ ३ न्ताः । पूर्व्यं मरयिन्धा१इम्मा३ह्वा
१ ऽ २ २ १
यि । तआ ३ उवा ३ । उप् । आ॑ऽ २ यिन्द्रो ३ ५
२
ह्वायि(३) ॥ १९ * ॥ [१] २४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य सप्तमस्याध्यायस्य
सप्तमः खण्डः † ॥ ७ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ७ ॥

॥ इति चतुर्थस्यार्द्धः प्रपाठकः ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे सप्तमोऽध्यायः ‡ ॥ ७ ॥

---

* ऊ० गा० ३प्र० २ख० १९सा० ।

† 'षष्ठमखण्डः समाप्तः । इन्द्रावरुणः समाप्तः'—इति वि० ।

‡ 'इति चतुर्थप्रपाठकस्य प्रथमार्द्धः'—इति वि० पदकारादिसम्प्रदायसम्मतश्च ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम्॥ ८॥

## ॥ अथाष्टमाध्याय आरभ्यते* ॥

तत्र,

प्रकाव्यमिति प्रथमे खण्डे—

द्वादशर्चे† प्रथमे सूक्ते—

प्रथमा।

१ २र ३ १ २ ३ २
प्रकाव्यमुशनेवब्रुवानो
३ १ २ ३ २ १ २
देवोदेवानाञ्जनिमाविवक्ति।
१ २ ३ १ २ ३ २
महिव्रतःशुचिबन्धुःपावकः
३ १ २ ३ २ ३र २र ३ १ २
पदावराहोअभ्येतिरेभन्॥ १ ‡॥

"उशनेव" एतन्नामक ऋषिरिव "काव्यं" कवि-कर्म स्तोत्रं "ब्रुवाणः" उच्चारयन् "देवः" स्तोता "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि "प्र विवक्ति" प्रकर्षेण ब्रवीति [ वच परि-

---

* 'इदानीं छन्दोमा वक्तव्याः। ते च त्रयः कृतच्छन्दस्कास्त्र्यहमः प्रतिपदो भवन्ति त्रिष्टुभां द्योतकत्वात् जगतीनां गायत्राः। प्राधान्येन द्वयेच उक्ताः'—इति वि०।

† 'प्रकाव्यमुशनेव ब्रुवाण इति द्वादशर्चं भवति। चतुर्विंशस्तोमिकं छन्दसः'—इति वि०। द्वादशार्चः खण्ड इति यावत्।

‡ ऋ० भा० ६, १, ४, २ ( १ आ० १०६७० )=ऋ० वे० ७, ४, ११, २।

भाषणे ( अदा० प० ) व्यत्ययेन विकरणस्य श्लुः ( ३, १, ३९ ), "बहुलञ्छन्दसि ( ७, ४, ७८ )"—इत्यभ्यासस्येत्वम् ], "महि-व्रतः" प्रभूतकर्म्मा, "शुचिबन्धुः" [ बध्नन्ति शत्रूनिति बन्धूनि तेजांसि बलानि वा ] दीप्ततेजस्कः, "पावकः" पापानां शोधकः, "वराहः" वरस्य तदहश्च वराहः [ "राजाहःसखिभ्यष्टच् ( ५, ४, ९१ )"—इति टच् समासान्तः ; तस्मिन्नहनि अभिभूय-मानत्वेन महान् ; अर्श आदित्वान्मत्वर्थीयोऽच् ( ५, २, १२७ ) ] तादृशः सोमः "रेभन्" रेभनं शब्दं कुर्वन्, "पदा" पदानि स्थानानि "अभ्येति" अभिगच्छति ; यद्वा, यथा कश्चन वराहः पदा पादेन भूमिं विक्रममाणः शब्दं करोति तद्वत् ॥ १ ॥

अथ द्वितीया।

२ ३    २ ३ १ २ ३ १उ ३
प्रहꣳसासस्तृपला*वग्नुमच्छा†

२उ ३ १ २
मादस्तंवृषगणाअयासुः।

२   २ ३   १ २   ३ १ २
अङ्गोषिण‡म्पवमानꣳसखायो

२ १ ? ३ १र २र    ३ २
दुर्मर्षंवाणम्प्रवदन्तिसाकम् ¶ ॥ २ § ॥

---

* "तृपलं"—इति
† "मन्युम्"—इति
‡ "आङ्गूष"—इति
¶ "साकं प्रवदन्ति वाणम्"—इति च
(ऋ०-पाठाः।)

§ ऋ० वे० ७, ४, ११, २।

"हंसासः" शत्रुभिर्हन्यमाना हंसाइव आचरन्तो वा* "वृषगणाः" एतन्नामका ऋषयः† "अमात्" शत्रूणां बलात् त्रासिताः सन्तः "तृपला" तृपलं [ सुपां सुलुगिति सोराकारादेशः (७, १, ३९)। तृपल-शब्दः क्षिप्र-वाची, तदुक्तं यास्केन —"तृप्रप्रहारी क्षिप्रप्रहारी (निरु० नै० ५, १२)"—इति ] क्षिप्रं प्रहारिणं‡ "वग्नुम्" अभिषव-शब्दम्¶ "अच्छ" अभिलक्ष्य§ "अस्तं" यज्ञगृहं "प्रायासुः" प्रायासिषुः प्रगच्छन्ति। ततः "सखायः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन सखिभूताः स्तोतारः "अङ्गोषिणं" सर्वैरभिगन्तव्यं‖ [ यद्वा, अङ्गोषिणं स्तोत्रार्हं ], "दुर्मर्षं" शत्रुभिः दुर्धरं दुःसहम्; एवंविधं "पवमानं" सोमम् उद्दिश्य "वाणं" वाद्यविशेषं** "साकं" सहैव "प्र वदन्ति" प्रवादयन्ति तदुपलक्षितं गानं कुर्वन्तीत्यर्थः॥ २॥

---

* 'हंसासः—आदित्य-रश्मयः'—इति वि०।

† 'वृषगणाः—सेक्तारः सङ्घाताः'—इति वि०।

‡ तृपला—लोक-वधस्य पालकाः'—इति वि०। "सोमो वेन्द्री वा"—इति निरु० नै० ५, १२।

¶ 'वग्नुं—वचनम्'—इति वि०।

§ 'अच्छ—आप्नुम्'—इति वि०।

‖ 'अङ्गोषिणम्—उष दाहे दीप्तौ च * * * दीप्तं सोमं'—इति वि०।

** 'वाणं—वादित्र-विशेषम्, यथा वाणस्य शततन्त्रीकस्य जायते शब्दः तद्वत् सोमस्य जायमानस्य महान् शब्दः'—इति वि०।

Digitized by Google

अथ तृतीया।

१ २　　　　३ १ २ ३ २उ
सयोजत*उरुगायस्यजूतिं
२ १ २　　　३ १र २र
वृथाक्रीडन्तम्मिमतेनगावः।
२ १ २　　३ १ २ ३
परीणसङ्कृणुतेतिग्मशृङ्गो
१ २ १ २ १ २ ३ १ २ १ २ १
दिवाहरिर्ददृशेनक्तमृज्रः ॥ ३ † ॥

"सः" सोमः "उरुगायस्य" बहुभिः स्तुत्यस्य आत्मनः‡ "जूतिं" गतिं¶ "योजते" युनक्ति अन्तरिक्षे प्रेरयति। "वृथा क्रीडन्तम्" अनायासेन विहरन्तं गच्छन्तं सोमं "गावः" अन्यो गन्तारः "न मिमते" न परिच्छिन्दन्ति मातुं न शक्नुवन्तीत्यर्थः। किञ्च "तिग्मशृङ्गः" [शृणन्ति हिंसन्ति तमांसीति शृङ्गाणि तेजांसि] तीक्ष्ण-तेजस्कः "परीणसं" [बहुनामैतत् (निघ० ३, १, ७) बहुविधं तेजः§ "कृणुते" करोतु अन्तरिक्षे वर्त्तमानो यः सोमः "दिवा" अहनि "हरिः" हरितवर्णः "ददृशे" दृश्यते

---

* "अरंसत"—इति ऋ० पाठः।

† ऋ० वे० ७, ४, ११, ३।

‡ 'उरुगायस्य—बहुविधस्य गानस्य'—इति वि०।

¶ 'जूतिं—प्रतिशब्दम्'—इति वि०।

§ 'परीणसं—परि समन्तात् णायो नीयन्ते परीणसः, तम्'—इति वि०।



Digitized by Google

न प्रकाशत इत्यर्थः, "नक्त" रात्रौ तु "कृष्णः" कृष्णगामी* विस्पष्टः प्रकाशयुक्तो दृश्यते† ॥ [दद्दशे—दृशेः कर्मणि लिटि रूपम् ॥ ३ ॥

अथ चतुर्थी ।

२ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रस्वानासोरथाइवार्वन्तोनश्रवस्यवः ।
१ २ ३ १ २
सोमासोरायेअक्रमुः ॥ ४‡ ॥

"स्वानासः" अभिषव-वेलाया मुपरवेषु¶ शब्दं कुर्वन्तः "सोमासः" सोमाः "रथा इव" यथा शब्दं कुर्वन्तो रथाः तथा, "अर्वन्तो न" यथा शब्दं कुर्वन्तो अश्वाः तथा, "श्रवस्यवः" अश्वभ्यः सकाशादन्नमिच्छन्तो "राये" यजमानानां धनाय "प्राक्रमुः" प्रगच्छन्ति ॥ ४ ॥

अथ पञ्चमी ।

३ २ ३ १ २ ३ १र २र
हिन्वानासोरथाइवदधन्विरेगभस्त्योः ।
१ २ ३ १ २
भरासःकारिणामिव ॥ ५ § ॥

---

* 'कृष्णः—कृष्णं गतो गच्छन् भवति'—इति वि० ।

† 'एतदुक्तं भवति—दिवाभिषिक्तः सोमो रात्रिपर्यायेषु पुनर्निषिच्यते, सोऽभिषवं करोति तस्मात्रायं दोषः सम्पद्यते'—इति वि० ।

‡ ऋ० वे० ९, ७, २४ ।

¶ यूपस्य गर्त्ता उपरवा उच्यन्ते । तद्विधायकञ्चैतत् कात्यायन-सूत्रम्—"हविर्धानस्याग्रतोऽधः प्रथमं खनत्युपरवानध्यादि करोत्यवटवदिति ( ८, ४, २५ )" । यथा यूपस्यावटः क्रियते तथामाप्युपरवानामकांश्चतुरो गर्त्तानभिस्त्रीकार मारभ्य परिलेखन पूर्वकं कुर्यादिति च तदर्थः । § ऋ० वे० ९, ७, २४ ।

"रथाइव" युद्धदेशं प्रति यथा रथाः तथा* "हिन्वानासः" यागदेशं प्रति गच्छन्तः† सोमाः ऋत्विजां "गभस्त्योः" बाह्वोः "दधन्विरे" धीयन्ते। तत्र दृष्टान्तः—"भरासः" भराः "कारिणामिव"‡ यथा भारवाहानां बाह्वोर्धीयन्ते तद्वत् ॥ ५ ॥

अथ षष्ठी।

१ २ ३ १२ ३२ ३ १ २ ३ १ २
राजानोनप्रशस्तिभिःसोमासोगोभिरञ्जते।
३ २उ ३ २ ३ १ २
यज्ञोनसप्तधातृभिः ॥ ६ ¶ ॥

"सोमासः" सोमाः "प्रशस्तिभिः" प्रशस्ताभिः स्तुतिरूपाभिः वाग्भिः "राजानो न" यथा राजानः§ "सप्तधातृभिः"‖ सप्त-होत्राभिः "यज्ञो न" यथा च यज्ञः तथा "गोभिः" गोर्विकारैः पयोभिः "अञ्जते" अज्यते संस्क्रियत इति ॥ ६ ॥

---

* 'रथाइव—अमन-स्वभावाः'—इति वि०।

† 'हिन्वानासः—पूयमानाः'—इति वि०।

‡ 'कारिणाम् इव—कारिणः रथ-वाहकाः अथवा भराः सङ्ग्रामाः सङ्ग्राम-कारिणः—इति वि०।

¶ ऋ० वे० ६, ७, ३४।

§ 'राजानो न—न शब्द उपमार्थीयः राजान इव, राजानो यथा प्रशस्तिभिः अज्यन्ते सेव्यन्ते तद्वत् सोमासः गोभिरज्यते; उदकैः क्षीरैर्वा'—इति वि०।

‖ 'सप्तधातृभिः—सप्त वषट्कारिणो सप्त धातारः अथवा सप्त छन्दांसि सप्त धातारः'—इति वि०।

अथ सप्तमी ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १
परिस्वानास इन्दवो मदाय बर्हणा गिरा ।
१ २ ३ १ २
मधो अर्षन्ति धारया ॥ ७ * ॥

"स्वानासः" सुवानाः अभिषूयमाणाः "इन्दवः" सोमाः "बर्हणा" महत्या "गिरा" स्तुति-रूपया वाचा युक्ताः सन्तः "मदाय" मदार्थं "मधोः" मधुर-रसस्य "धारया" "परि अर्षन्ति" परितो गच्छन्ति ॥

"परिस्वानासः"-"परिसुवानासः"—इति पाठौ, "मधोः" -"सुताः"—इति च ॥ ७ ॥

अथ अष्टमी ।

२ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
आपानासो विवस्वतो जिन्वन्त उषसो भगम् ।
१ २ १ ३ १ २
सूरा अण्वं वितन्वते ॥ ८ † ॥

"विवस्वतः" दीप्तिमतः इन्द्रस्य "आपानासः" आपानभूताः "उषसः" "भगं" शोभां "जिन्वन्तः" प्रेरयन्तः "सूराः" सरन्तः‡

* ऋ० वे० ९, ७, २४ ।

† ऋ० वे० ९, ७, ३५ ।

‡ 'सूराः—सूर्या इव दीप्तिमन्तः'—इति वि० ।

Digitized by Google

सोमाः "अध्वरं वि तन्वते"* अभिषव-वेलाया मुपरवेषु शब्दं कुर्वन्ति ॥

"जिन्वन्तः"-"जनम्"—इति पाठौ ॥ ८ ॥

अथ नवमी ।

१ ३ १ २ ३ २ ३ १ २ ३ १ २
अपद्वारामतीनाम्प्रत्नाऋण्वन्तिकारवः ।
२ ३ १ २ ३ १ २
वृष्णोहरसआयवः ॥ ९ † ॥

"मतीनां कारवः" स्तुतीनां कर्त्तारः "प्रत्नाः" पुराणाः "वृष्णः" सेचकस्य सोमस्य "हरसः"‡ आहर्त्तारः "आयवः" मनुष्याः ऋत्विजः "द्वारा" यज्ञस्य द्वाराणि "अप ऋण्वन्ति" विवृण्वन्ति ॥ ९ ॥

अथ दशमी ।

२ १ २ ३ १ २ ३ १ २
समीचीनासआशतहोतारःसप्तजानयः ।
३ १र २र ३ १ २
पदमेकस्यपिप्रतः ॥ १० ¶ ॥

---

* 'अध्वरं वितन्वते—सूक्ष्मं वितानं कुर्वन्ति'—इति वि० ।

† ऋ० वे० ६, ७, २५ ।

‡ "हरसः"—इति तु ऋग्वेदीयपाठः, सामवेदीयस्तु "हरसे"—इति, पद-पाठेऽप्येवं दर्शनात्, व्याख्यातञ्चैवमेव विवरणकृतापि—'हरसे होमाय'—इति ।

¶ ऋ० वे० ६, ७, २५ ।

"समीचीनासः" समीचीनाः* "जामयः" जाति-सहशाः "एकस्य" सोमस्य "पदं" स्थानं "पिप्रतः" पूरयन्तः; "सप्त होतारः"† यज्ञे "आयत" व्याप्नुवन्ति ॥

"आयत'-"आसत"—इति पाठौ, 'जानयः"-"जामयः" —इति च ॥ १० ॥

अथैकादशी।

१ २ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
नाभानाभिन्न आददे चक्षुषा सूर्य्यन्दृशे।
३ १र २ ३ १ २
कवेरपत्यमादुहे ॥ ११ ‡ ॥

"नाभिं" यज्ञस्य नाभिभूतं सोमं "नः" अस्माकं "नाभा" नाभौ अहम् "आददे" सोमं पीत्वा नाभि-स्थाने करोमीत्यर्थः। किमर्थम्? "चक्षुषा" "सूर्यं" "दृशे" द्रष्टुम्। किञ्च, "कवेः" क्रान्त-कर्म्मणः सोमस्य "अपत्यम्" अंशम् "आ दुहे" आ पूरयामि¶ ॥

"चक्षुषासूर्यन्दृशे"—"चक्षुश्चित्सूर्यंसचा"—इति पाठौ ॥ ११ ॥

---

* 'समीचीनासः—समीचीन-गुणाः सोमाः'—इति वि०।

† 'होतारः—देवानामाह्वातारः। सप्त जामयः—सप्त जनाः, वषट्कारिणः—होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, पोता, नेष्टा, अच्छावाकः, आग्नीध्र इति' —इति वि०।

‡ ऋ० वे० ९, ७, २५।

¶ 'कवेः अपत्यम् आदुहे—कविर्मेधावी ब्राह्मणः तस्यापत्यम् गच्छति सोमः, तेन निष्पादितत्वात्। आदुहे दुहते दशापवित्रात् सोमम्'—इति वि०।

अथ द्वादशी।

२ ३ १२ १ ३ २ ३ १ २ ३ १ ३ १ २ ३ १ ३ १
अभिप्रियन्दिवस्पदमध्वर्युभिर्गुहाहितम्।
१ २ ३ १ २
सूरःपश्यतिचक्षसा॥ १२ *॥१

"सूरः" सुवीर्यः इन्द्रः "चक्षसा" चक्षुषा "दिवः" द्योतस्य धाम्नः "प्रियं पदम्" अध्वर्युभिः "गुहा" गुहायां हृदये "हितं" निहितं पीतं सोमम्† "अभि पश्यति"॥

"प्रियम्"-"प्रिया"—इति पाठौ‡॥ १२॥

२ २ २ २ १ २ ऽ
॥पार्थम्॥ ओ३हो३होयि। प्रकावियाम्। उश

२ १२४ ५ १२ २ १२ २ १ २ ३४
ने। बभ्रुवाणाः। देवोदेवा। ना३ञ्जनि। माविव

५ ० १ २ १ १२३४५ २२ १
क्ती। मद्धिव्रताः। शुचिव। धूःपवाकाः। पदावरा।

१ १ २ २ ४
हो३अभि। आ३४३यि। तौ३रा५यिभा६५६न्॥(१)

१ १२ ११ २ १३४५ २२ १
प्रदध्सासाः। तृपला। वग्नुमच्छा। अमादस्ताम्।

११ १ ३ ४ ५ १ २ १ २१२
वृषग। णाअयासूः। अङ्गोषिणाम्। पवमा। न९

---

* ऋ० वे० ९, ७, ३५।

† 'गुहायां द्योतमाने हितं सोमाख्यं पदम्'—इति वि०।

‡ "चक्षसा"—"चक्षुषा"—इति च बोध्यम्।

२४ ५ २१ १ १ १ ४
सखायाः। दुर्मर्षंवा। णा३म्प्रव। दा३४३। तो३सा

१२ १ २१२ १२४ ५
पुकाई५६म् ॥(२) सयोजनायि। उरुगा। यस्यजूतीम्।

२ १ १२ १ १ ११४ ५ १२ १
वृथाक्रीडा। जा ३ म्निम। तेनगावाः। परीणसाम्।

२१२ १२ ४५ २ २ २ २ १
कृणुते। तिग्मभृष्टङ्गाः। ओ३हो३वोयि। दिवाद्वरा

११२ २ १ ४
यिः। दहश्रे। ना३४३। क्ता३मा५र्श्रोई५ई:(३) ॥५*॥ [१]

१२ २ १ ११२
॥ वाराहम ॥ हाउहाउ। ऊप। प्रकावियाम।

११२ १२४ ५ १२१२२ १ १ २
उग्रने। वग्नुवाणाः। देवोदेवा। ना३ञ्जनि। मां

२ ४५ १ १ २ २ १२४ ५ ११२
विवक्तो। मच्छिव्रताः। भुरुचिवा३। धूःपवाकाः। पदा

१ १ २ २४
वरा। वो ३ अभि। या ३ ४ ३ यि। तो३रा५यिभाइ

११ २ ११२ ११४ ५ २
४ ६न ॥(१) प्रचद्युसासाः। तृपला। वग्नुमच्छा। अ

१२ २१ २ १४५ ११२
मादस्ताम्। वृषग। णाश्रयामूः। अङ्गोषिणाम्।

२ १ २४ ५ २१ २०१ २
पवमा। नव्सखायाः। दुर्मर्षंवा। णा३ंप्रव। दा

* ऊ० गा० ६प्र० २ख० ५गा०।

२ ४ २ १र २ १
३४३। तोइसा५का६५ईम् ॥(२) सयोजतायि। उहु
र २ ३ ४ ५ २ १र र २ १ २ २
गा। यस्स्रजूतीम्। वृथाक्रीडा। ताइम्मिम। तेन
४ ५ २१र ११र २ ३ ४ ५ १र
गादाः। परीखसाम्। ह्रणुते। तिग्मश्टङ्गाः। हाउ
र १ २१र २१ र २ २
हाउ। ऊप्। दिवाहरायिः। दहमोना६४३। क्ता
४
३मा५र्ज्वा६५६ः(३) ॥ १९* ॥ [२]

२र १ २ १र
॥ प्रवङ्गार्गवम् ॥ प्रकाबियाम्। उशनेवा। ब्रू
१र २र र १र २र १ १
२वाणाः। देवोदेवा। नाम्नानिमा। वा२यिवक्तायि।
२ १ २ १ १र २ र १
महिव्रताः। शुचिबन्धुः। पा२वाकाः। पदावरा।
१र १ १र १ २ १र
होषभियायि। तो२रेभा३नाउ ॥(१) प्रहंऽसासाः।
२१र १ २ र १ २ १
तृपलावा। म्र२मच्छा। अमादस्ताम्। वृषगणाः।
१र २ र १ २१ र १र
आ२यासूः। आङ्गोषिणाम्। पवमानाम्। सा२खा
२ १ २ १ १र २ १
याः। दुर्मर्षेवा। पांप्रवदाः। तो२साका३माउ ॥(२)

* ऊ० गा० १६प्र० २ख० १९गा० ।



Digitized by Google

१ २ १    ३ १ २    १२    ३२ १२
सद्योजतायि। उरुगाया। स्वार्२जूतोम्। वृथाक्रीडा।
२ १    १२    ३२ १    २ १२
तम्मिमते। गार्२गावाः। परीणसाम्। छ्युतेतायि।
१    १ २ १    ३ १ २    १ २
ग्मार्२ष्टगाः। दिवाचरायिः। दक्षेणा। नार्२मृत्रा
१ १ १ १
३हुउ। वा२३४५:(३) ॥ १ * ॥[३]

१ ५    ३ १    ४ ५
॥ कुत्ससारथीयम् ॥ होऽ४वा। उहुवा३। होवा।
२१२ २ १    २ १ २    १ ३ ४ ५    १२१२ १२    २
प्रकाव्यियाम्। उशने। वब्रुवाणाः। देवोदेवा। ना
१    २ ३ ४ ५    २ २ १    २ १    २ २
३म्भनि। माविवक्ती। महिव्रताः। श्रुचिव। धूःप
४ ५    २१२ २१    २ १    २ ३ ४ ५    २
वाकाः। पदावरा। होइभि। ऐतिरेभान्॥(१) प्र
१ १२ १    ३ १ २    १ ३ ४ ५    २१२ २ १    २ १
हृᳪसासाः। तृपला। वग्नुमच्छा। अमादस्ताम्। वृष
२ ३ ४ ५    २१२ २१    ३ १ २    २ ३ ४
ग। पायवञासूः। अङ्गोषिणाम्। पवमा। नᳪसखा
५    २ १ २ १    २ १    २ ३ ४ ५    २
याः। दुर्म्मर्षवा। वाइप्रव। दन्तिसाकाम् ॥(२) स
२ २ १    ३ १ २    २ ३ ४ ५    २१२१२ १    २
योजतायि। उरुगा। यस्वजूतीम्। वृथाक्रीडा। ता

* ऊ० गा० ११प्र० १ध० १सा०।

१ २ ३ ४ ५ २ १ २ २ १ १ १ २ १ २
इम्मिम । तनगावाः । परीणसाम् । कृणुते । तिग्म

४ ५ २ १ २ २ १ २ १ २ २ २ ३ ५ २
शृङ्गाः । दिवाहरायिः । दद्दशे । नक्तमृज्राः । हो४

५ २ २ ४ ५ ५
वा । उड्वाइ । होवा६वाउवा(३) ॥ ६ * ॥ [४] १

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

---

अथ द्वितीयखण्डे—

अक्षयमिति द्वादशर्चं† प्रथमं सूक्तम्;

तत्र, प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अक्षय्यमिन्द्व:पथाधर्मन्नृतस्यसुश्रियः ।

३ १ २ ३ १ २
विदानाअस्ययोजना ॥ १ ‡ ॥

"अस्य" अनेन यजमानेन क्रताम् "योजना" तद्देवता-योगात् सम्बन्धान् "विदानाः" जानन्तः "सुश्रियः" शोभन-श्रियः "अक्षयम्" हविर्दानात् क्षयन्ते ॥

"योजना"-"योजनम्"—इति पाठौ ॥ १ ॥

---

* ऊ० गा० १३प्र० २ख० ६गा० ।

† 'द्वितीयो द्वादशर्चः'—इति वि० खण्डः-इति यावत् ।

‡ ऋ० वे० ६, ७, १८ ।

Digitized by Google

अथ द्वितीया।

२उ ३ १ २ ३ १ २ ३ १ २ ३ १र २र

प्रधारामधोअग्रियोमहीरपोविगाहते।

३ १ २ ३ १ २ ११२

हविर्हविःषुवन्द्यः॥ २ †॥

"हविःषु" हविषां मध्ये "वन्द्यः" स्तुत्यः "हविः" हवि-रात्मकः यः सोमः "महीः" महतीः "अपः" वसतीवरीः "वि-गाहते", तस्य "मधोः" सोमस्य "अग्रियः" मुख्या धाराः प्रपत-न्तीत्यर्थः॥

"मधोः"--"मध्वः"—इति पाठौ॥ २॥

अथ तृतीया।

३१२ ३ २ २ ३१र २र ३१२

प्रयुजावाचोअग्रियोवृषोअचिक्रदद्वने।

२ ३ १ २ ३ १ ३ २ १

सद्माभिसत्योअध्वरः॥ ३ ‡॥

"अग्रियः" हविषां मध्ये मुख्यः सोमः "युजाः" युक्ताः "वाचः" प्रकरोतीत्यर्थः। एतदेव दर्शयति—"वृषः"¶ कामानां वर्षकः "सत्यः" सत्यभूतः "अध्वरः" हिंसा-वर्जितः सोमः

---

* "हविष्षु"—इति अ० म० पु०-पाठः।

† ऋ० वे० ६, ७, २८।

‡ ऋ० वे० ६, ७, २८।

¶ "वृषोअचिक्रदत्"—इति मूलस्य "वृषः", "अचिक्रदत्"—इति छेदमवलम्ब्य व्याचष्टे सायणः, परमेष पदपाठ-विरुद्धः मत "वृषा", "उ", "अचिक्रदत्"—इति छेद-दर्शनात्; अतएव विवरणकार आह—'वृषा सेक्ता, उ इति पदपूरणः'—इति।

"अप्सु" अप्स्विह "अभि" प्रति "वने" उदके अचिक्रदत् शब्दं करोतीत्यर्थः॥

"वृषोअचिक्रदत्"—"वृषावचक्रदत्"—इति पाठौ॥ ३॥

अथ चतुर्थी।

२ ३ १२ १२ ३ २ ३ १ २ ३ १२ १२
परियत्काव्याकविर्नृम्णापुनानोअर्षति।

१२ ३ १ २
स्वर्वाजीसिषासति॥ ४ *॥

"कविः" क्रान्तकर्मा सोमः "नृम्णा" नृम्णानि बलानि† "पुनानः" शोधयन् "काव्या" काव्यानि कवि-कर्माणि स्तोत्राणि "यद्" यदा "परि अर्षति" परिगच्छति, तदा "स्वः" स्वर्गं "वाजी" बलवान् अन्नवान्वेन्द्रः‡ "सिषासति" यागं प्रत्यागन्तुं सकीयं बलं सम्भक्तुमिच्छति॥

"पुनानः"-"वसानः"—इति पाठौ॥ ४॥

अथ पञ्चमी।

१२ ३ १ ३ ३ ३ २ १ २
पवमानोअभिस्पृधोविशोराजेवसीदति।

१ २ ३ १ २ ३ १ २
यदीमृण्वन्तिवेधसः॥ ५ ¶॥

---

* ऋ० वे० ६, ७, २८।

† 'वस्त्रा धनेन'—इति वि०।

‡ 'वाजी—वेगवान्, अथवा चरुपुरोडाशादि-लक्षणेनान्नेनान्नवान् सर्वतीक' यजमानस्य साधयति'—इति वि०।

¶ ऋ० वे० ६, ७, २९।

"यद्" यदा "ईम्" एनम्* सोमं "वेधसः" कर्म्मणां कर्त्तारः ऋत्विजः† "ऋणन्ति" प्रेरयन्ति, तदा "पवमानः" क्षरन्नेव सोमः "स्पृधः" स्पर्द्धमानान् याग-विघ्नकारिणः राक्षसादीन् "अभि सीदति" नाशयितुमभिगच्छति। तत्र दृष्टान्तः—"विशः राजा इव" यथा राजा विशः स्पर्द्धमानान् मनुष्यान् नाशयितुमभिगच्छति तद्वत् ॥ ५ ॥

अथ षष्ठी।

२ २ २ १ १ २ ३ २उ ३ १ २
अव्यावारेपरिप्रियोहरिर्वनेषुसीदति।
३ १ २ १२
रेभोवनुष्यतेमती ॥ ६ ¶ ॥

"हरिः" हरितवर्णः "प्रियः" देवानां प्रियतम एव सोमः "वनेषु" उदकेषु§ सम्भृतः "अव्याः" अवेः "वारे" वाले "परि सीदति" किञ्च "रेभः" अभिषव-वेलायाम् उपरवेषु शब्दं कुर्व्वन् "मती" मत्या स्तुत्या|| "वनुष्यते" सेव्यते ॥ ६ ॥

---

* 'ईम्—इति पदपूरणः'—इति वि०।

† "वेधाः"—इति मेधावि-नामसु निघण्टौ हश्यते (३, १५)

‡ "अर्षति"—इति ऋ०-पाठः।

¶ ऋ० वे० ६, ७, २९।

§ 'वनेषु उदकेषु सीदति, अथवा वनेषु काष्ठमयेषु द्रोणकलशेषु पवनकलशादिषु सीदति'—इति वि०।

|| 'मती—बुद्ध्या ऋत्विग्जनमानानाम्'—इति वि०।

Digitized by Google

अथ सप्तमी।

१ २ १र  २र ३ १ २ ३ १र २र
सवायुमिन्द्रमश्विनासाकम्मदेनगच्छति।

१ २ १ २ ३ १ २
रणायोअस्यधर्मणा* ॥ ७ † ॥

"यः" यजमानः "अस्य" सोमस्य "धर्मभिः"‡ कर्मभिः अभिषवादिभिः "रण"¶ रमते, "सः" यजमानः "वायुम्," "इन्द्रम्," "अश्विना" अश्विनौ च "मदेन" "साकं" सह "गच्छति" प्राप्नोति ॥ ७ ॥

अथाष्टमी।

१ ३ १र २र ३ ३ १ १ २  ३ १ २
आमित्रेवरुणेभगेमध्वःपवन्तऊर्मयः§।

३ १ २ ३ १ २
विदानाअस्यशक्मभिः ॥ ८ ‖ ॥

---

* "धर्मभिः"—इति ऋ०-पाठः।

† ऋ० वे० ९, ७, ७।

‡ धर्मभिरिति सामवेदीयपाठमवलम्ब्यैवेदं प्रतीक-ग्रहणं व्याख्यानञ्च; विवरण-कृद्व्याख्यानन्तु सामवेदीयम् तथाहि—'धर्मणा कर्मणा'—इति।

¶ "रणाः" दीर्घाश्रुतिः "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ "मित्रावरुणाभगंमध्वः"—इति ऋ०-पाठः।

‖ ऋ० वे० ९, ७, ८।

Digitized by Google

येषां यजमानानां "मधोः" सोमस्य "ऊर्मयः" तरङ्गाः "मित्रावरुणा"* मित्रावरुणौ देवौ "भगं"† भगाख्यं देवञ्च प्रति "पवन्ते" चरन्ति, ते यजमानाः "अस्य" सोमस्य इदं सोमं "विदानाः" जानन्तः "अक्मभिः" सुखैः‡ सङ्गच्छन्तइति शेषः ॥ ८ ॥

अथ नवमी ।

२ ३ १ २   ३ १र ३ १ २   ३ १२

अस्मभ्यꣳरोदसीरयिंमध्वोवाजस्यसातये ।

२ ३ १२ ३ १ २

श्रवोवसूनिसञ्जितम् ॥ ९ ¶ ॥

हे "रोदसी" द्यावापृथिव्यौ ! युवां "मध्वः" देवानां मादयितुः "वाजस्य" सोमाख्यस्यान्नस्य "सातये" लाभाय§ "अस्मभ्यं" "रयिं" धनं "श्रवः" अन्नञ्च‖ "वसूनि" वासकान्यन्यान्यपि पश्वादीनि "सञ्जितं" सञ्चयन्तं** प्रयच्छतमित्यर्थः ॥ ९ ॥

---

*, † ऋग्वेदीयपाठानुसारेणेदं प्रतीकग्रहणम् । विवरणकृता तु छन्दआर्चे— 'मित्रे, वरुणे, भगे-सप्तम्येकवचनं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, मित्राय, वरुणाय, भगाय'—इति ।

‡ 'अक्माभिः—अक्तैः कर्मभिः'—इति वि॰ ।

¶ ऋ॰ वे॰ ६, ७, १९ ।

§ 'सातये—दानार्थम्'—इति वि॰ ।

‖ श्रवः—श्रव्यं यशो यशं वा'—इति वि॰ ।

** 'संचतं—सम्यक् चयनम्'—इति वि॰ ।

Digitized by Google

अथ दशमी।

२ ३१ २ २ २ ३१ २ ३१ २
आतेदक्षम्मयोभुवंवह्निमद्यावृणीमहे।
२ ३ १ २३ १ २
पान्तमापुरुस्पृहम्॥ १० *॥

हे सोम! यष्टारो वयं "ते" तव स्वभूतं "दक्षं" बलम् "अद्य"† अस्मिन् यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावकम् "वह्निं" धनादीनां प्रापकम् "पान्तं" शत्रुभ्यो रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं कामानाम्॥ १०॥

अथैकादशी।

२ ३ १२ १२ ३ १२ ३ १ २ ३ १ २
आमन्द्रमावरेण्यमाविप्रमामनीषिणम्।
२ २ १ २३ १ २
पान्तमापुरुस्पृहम्॥ ११ ‡॥

हे सोम! "मन्द्रं" मदकरं स्तुत्यं वा त्वाम् "आ वृणीमहे" "वरेण्यं" सर्वैर्वरणीयं सम्भजनीयञ्च; किञ्च "विप्रं" मेधाविनं त्वां तथा "मनीषिणं" मनसईषा मनीषा तद्वन्तं स्तुतिमन्तं वा त्वामावृणीमहे [प्रत्येकं विशेषणापेक्षया आ-इत्युपसर्गः

---

* ऋ० भा० ६, १, २, १ (२ भा० ५६ पृ०)=ऋ० वे० ७, १, ६, २।

† मूले तु "निपातस्य च (६, ३, १३६)"—इति दीर्घान्तः "अद्या"—इति।

‡ ऋ० वे० ७, १, ६, ४।

ज्ञातः*; किञ्च "पान्तं" सर्वेषां रक्षकम् "पुरुस्पृहं" बहुभिः स्पृहणीयं च त्वां सम्भजामहे ॥ ११ ॥

अथ द्वादशी ।

२ ३ १र २र३ र ३ १ २ ३ २
आरयिमासुचेतुनमासुक्रतोतनूष्वा ।
२ ३ १ २ ३ १ २
पान्तमापुरुस्पृहम् ॥ १२ † ॥ २

हे "सुक्रतो" शोभन-प्रज्ञ सोम ! त्वदीयं "रयिं" धनम् वयम् "आ"‡ वृणीमहे । किञ्च, "सु चेतुनम्" [ चिती सञ्ज्ञाने ( भ्वा० प० ) भावे औणादिक उन प्रत्ययः ] सुज्ञानञ्च । किञ्च "तनूषु" अस्मत्पुत्रेषु च धनं सुज्ञानञ्च त्वम् "आ" विधेहि यद्वा पुत्रार्थं वयमावृणीमहे । तथा "पान्तं" सर्वस्य रक्षकं "पुरुस्पृहं" बहुभिर्यष्टृभिः काम्यमानं त्वां सम्भजामहे ॥ १२ ॥ २

इति सामवेदार्थ-प्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य द्वितीयः खण्डः ¶ ॥ २ ॥

---

* विवरणकारस्त्वन्यथैव व्याचष्टे—'आमन्द्रम्—आनुपूर्व्येण मन्द्रं वलम्'—इति, 'आवरेण्यम्—आभिमुख्येन वरेण्यं मत्'—इ त, 'आविप्रम—अतिशयेन विपश्चितम्' —इत्यादि च ।

† ऋ० वे० ७, १, ६, ५ ।

‡ अत्राप्यन्यथा व्याख्यातं विवरणकृता—'आरयिम्—आभिमुख्येन धनवन्तम्' —इत्यादि ।

¶ 'उक्तं वहिष्पवमानम्'—इति वि० ।

Digitized by Google

अथ तृतीय-खण्डे,*प्रथम-तृचे—

प्रथमा।

२ १ २ ३ १ २ ३ १ २ ३ १
मूर्द्धानन्दिवो अरतिम्पृथिव्या
२ ३ १ २ ३ २उ ३ १ २ १ २
वैश्वानरमृतआजातमग्निम्।
३ २ ३ २ ३ १ २ ३ १ २
कविꣳसम्राजमतिथिञ्जनाना
३ १ २ १ २ ३ २
मासन्नःपात्रञ्जनयन्तदेवाः॥ १ †॥

"मूर्द्धानं" शिरोभूतं, कस्य? "दिवः" द्युलोकस्य, "पृथिव्याः" प्रथितायाः भूमिः "अरतिं" गन्तारम् [यद्वा, गन्तव्यं स्वामिनं], "वैश्वानरं विश्वेषां नराणां सम्बन्धिनम्, "ऋते" [ऋतमिति सत्यस्य यज्ञस्य वा नाम (निघ० ३,१०,६)। निमित्त-सप्तम्येषा (२,३,३६ वा०)]ऋतनिमित्तम् "आ" आभिमुख्येन जातं सृष्ट्या-द्यावुत्पन्नं "कविं" क्रान्तदर्शिनं "सम्राजं" सम्यग्राजमानं "जनानां" यजमानानाम् "अतिथिं" हविर्वहनाय सततं गन्तारं [यद्वा, अतिथिवत् पूज्यम् "आसन्" आसनि [द्विती-यार्थे सप्तमी (३,१,८५), अग्नि-लक्षणेनास्येन हि देवा हवींषि भुञ्जते] "नः" अस्माकं "पात्रं" पातारं रक्षकं वैश्वानरमग्निं

---

* 'इदानीमाग्नेयम्'—इति वि०।

† ऋ० आ० १, २, २, ५ (१ भा० २०४ पृ०) = य० वे० ७, २४ = ऋ० वे० ४, ५, ८, १।

Digitized by Google

"देवाः" स्तोतारः ऋत्विजः देवा एव वा "आ जनयन्त" यज्ञाभिमुख्येन अजीजनन् अरण्योः सकाशात् उदपादयन्॥

"आसन्नःपात्रम्"-"आसन्नापात्रम्"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३
त्वांविश्वेअमृतजायमानꣳ
२ ३ १ २ ३ १ २ ३ १र २र
शिशुन्नदेवाअभिसन्नवन्ते।
१ ३ १ २ ३ १ २ ३
तवक्रतुभिरमृतत्वमायन्
१र१ ३ २ ३ १र २र
वैश्वानरयत्पित्रोरदीदेः॥ २ *॥

हे "अमृत" मरण-रहिताग्ने! "विश्वे देवाः" स्तोतारः "जायमानम्" अरण्योः सकाशात् उत्पद्यमानं त्वां "शिशुं न" पुत्रमिव "अभि सं नवन्ते" अभिसंस्तुवन्ति [ यद्वा, दीव्यन्तीति देवा रश्मयः ते सर्वे जायमानं त्वामभिसन्नवन्ते अभिगच्छन्ति, यथा पितरः पुत्रमभि गच्छन्ति ], अपि च हे वैश्वानर अग्ने! "यत्" यदा "पित्रोः" पालयित्रोः द्यावा-पृथिव्योर्मध्ये "अदीदेः" दीप्यसे, तदानीं "तव" त्वदीयैः "क्रतुभिः" कर्मभिः ज्योतिष्टोमादिभिर्यागैः "अमृतत्वम्" देवत्वम् "आयन्" यजमानाः प्राप्नुवन्ति॥ २॥

* ऋ० वे० ४, ५, ८, ४।

Digitized by Google

अथ तृतीया।

१ २ ३ १ २ २ १२ ३ १
नाभिंयज्ञाना८सदन८रयीणां
३ १ २ ३ २ ३ १२ ३२
महामाहावमभिसन्नवन्त।
३ २ ३ १२ ३ १ २
वैश्वानर८रथ्यमध्वराणां
३ १ २ ३ १ २ ३ २
यज्ञस्यकेतुञ्जनयन्तदेवाः॥ ३ *॥ ३

"नाभिं यज्ञानां"†, "सदनं रयीणां" धनानां स्थानमेक-निलयं, "महां" महान्तम् "आहावम" आह्वयन्ते अस्मिन्नाहुतय इत्याहावः तादृशं [यद्वा, वृष्ट्युदक-धाराणामाहाव-स्थानीय मेव-भूतम्] अग्निम् "अभि सं नवन्त" स्तोतारः सम्यक् स्तुवन्ति। तथा "वैश्वानरं" विश्वेषां नराणां सम्बन्धिनम् अध्वराणां यज्ञानां "रथ्यं" रथिनं, यथा रथी स्व-रथं नयति तद्वन्नेतारं रंहितारं गमयितारं‡ "यज्ञस्य" "केतुं" प्रज्ञापकमग्नि एवं-विधमग्निं "देवाः" स्तोतार ऋत्विजो देवा एव वा§ "जन-यन्त" जनयन्ति मन्थनेनोत्पादयन्ति॥ ३॥ ३

---

* ऋ० वे० ४, ५, ८, २।

† 'नाभिं यज्ञानां—प्रधानभूतं सदनम्'—इति वि०।

‡ 'रथ्यं—रथभूतं रंहणीयं वा'—इति वि०।

¶ 'केतुं—ध्वजम्'--इति वि०।

§ 'देवाः—दानवन्त ऋत्विजः'—इति वि०।

Digitized by Google

अथ द्वितीय-तृचे—

प्रथमा ।

१२ ३ १ २ ३ १ २ ३ २ ३ १
प्रवोमित्रायगायतवरुणायविपागिरा ।
१ २ ३ १ २ २ २
महिक्षत्रावृतम्बृहत् ॥ १ * ॥

हे मदीया ऋत्विजः! "वः" यूयमित्यर्थः। "मित्राय" "वरुणाय" "विपा" व्यापया "गिरा" स्तुत्या "गायत" स्तुतिं कुरुत [स्तुत्या स्तुतेत्येतत् पाकं पचतीतिवत्]। हे "महिक्षत्रौ" प्रभूत-बलौ युवाम् "ऋतं" यज्ञं† "बृहत्" महत् अपि प्रशस्तं स्तुत्यर्थमागच्छतमिति शेषः [अथवा "महत्" प्रभूतम् "ऋतं" स्तोत्रं शृणुतमिति शेषः ॥ १ ॥

अथ द्वितीया ।

३ २ ३ २ ३ १ २ ३ १ २ ३१२ ३१२
सम्राजायाघृतयोनीमित्रश्चोभावरुणश्च ।
३ २ ३ १ २ ३ २
देवादेवेषुप्रशस्ता ॥ २ ‡ ॥

"या" यौ "मित्रश्च" "वरुणश्च" [परस्परापेक्षया च-शब्दः] "उभा" उभौ "सम्राजा" सम्राजानौ सर्वस्य स्वामिनौ "घृतयोनी"

---

* ऋ० वे० ४, ४, ६, १ ।

† 'ऋतं सत्यम्'—इति वि० ।

‡ ऋ० वे० ४, ४, ६, २ ।

उदकस्योत्पादको "देवा" द्योतमानो "देवेषु" मध्ये "प्रशस्ता" प्रशंसनीयौ स्तुत्यौ तौ स्तुत्या गायतेति पूर्व्वत्रान्वयः ॥ २ ॥

अथ तृतीया ।

१ २   ३ १ २   ३१ २ ३ २ १ २
ता नः शक्तम्पार्थिवस्य महोरायो दिव्यस्य ।

१ २   ३२३ १२
महिवाङ्क्षत्रन्देवेषु ॥ ३ * ॥ ४

"ता" तौ देवौ "नः" अस्मदर्थं "पार्थिवस्य" पृथिवी-सम्बन्धस्य "दिव्यस्य" दिविभवस्य च "महः" महतः "रायः" धनस्य "शक्त" समर्थम्, भवतं दातुमिति शेषः । हे देवौ ! "वां" युवयोः "महि" महत् पूज्यं "क्षत्र" बलं देवेषु प्रसिद्धं, स्तुम इति शेषः ॥ ३ ॥ ४

अथ तृतीय-तृचे—

प्रथमा ॥

१२   १२        ३ १ २ ३ २   ३ १
इन्द्रायाहिचित्रभानोसुताइमेत्वायवः ।

१ २  ३ १ २ ३ १ २
अण्वीभिस्तनापूतासः ॥ १ † ॥

"चित्रभानो" हे विचित्र-दीप्ते "इन्द्र !" अस्मिन् कर्म्मणि "आयाहि" आगच्छ । "सुताः" अभिषुताः "इमे" सोमाः

---

* अत्रैव पुनः ६, ३, ११, १=ऋ० वे० ४, ४, ६, ९ ।

† य० वे० २१, २=ऋ० वे० १, १, ५, ४ ।

"त्वायवः" त्वां कामयमाना वर्त्तन्ते । "अण्वीभिः"* [ अङ्गुलि-नामैतत् ( निघ० २, ५, २ ) ] ऋत्विजा मङ्गुलिभिः सुता इत्यन्वयः । किञ्च, ते सोमाः "तना" नित्यं "पूतासः" शुद्धाः ऊर्णा-पवित्रेण शोधितत्वात् ॥ १ ॥

अथ द्वितीया ।

१र २र ३ २ ३ १र २र ३ १ २
इन्द्रायाहिधियेषितोविप्रजूतःसुतावतः ।
२ ३ १ २ ३ १ २
उपब्रह्माणिवाघतः ॥ २ † ॥

हे "इन्द्र !" त्वम् "आयाहि" अस्मिन् कर्म्मणि आगच्छ । किमर्थम् ? "वाघतः" [ ऋत्विङ्नामैतत् ( निघ० ३, १८, ३ )] ऋत्विजः "ब्रह्माणि" वेद-रूपाणि स्तोत्राणि "उप" एतुम् । कीदृशस्त्वम् ? "धिया" अस्मदीयया प्रज्ञया "इषितः" प्राप्तः, अस्मद्भक्त्या प्रेरित इत्यर्थः । "विप्रजूतः" यथा यजमान-भक्त्या प्रेरितः तथान्यैरपि विप्रैः मेधाविभिः ऋत्विग्भिः प्रेरितः ! कीदृशस्य ? "वाघतः ?" "सुतावतः" अभिषुत-सोम-युक्तस्य ॥२॥

अथ तृतीया ।

१र २र ३ १ २ ३ २ ३ १ २
इन्द्रायाहितूतुजानउपब्रह्माणिहरिवः ।
३ १ २ ३ १ २
सुतेदधिष्वनश्चनः ॥ ३ ‡ ॥ ५

* 'अण्वीभिः—सूक्ष्माभिः वीचिभिः'—इति वि० ।

† ऋ० वे० १, १, ५, ५ ।

‡ ऋ० वे० १, १, ५, ६ ।

Digitized by Google

[हरि-शब्दः इन्द्र-सम्बन्धिनोरश्वयोर्नामधेयम् "हरी इन्द्रस्य, रोहितोऽग्नेः ( नि० १,१५,१-२ )"—इति तदीयाश्व-नामत्वेन पठितत्वात्] हे "हरिवः" अश्व-युक्तेन्द्र! त्वं "अश्वानि" आनेतुम् "आ याहि"। कीदृशस्त्वम्? "तूतुजानः" त्वरमाणः। आगत्य च अस्मिन् "सुते" सोमाभिषव-युक्ते कर्म्मणि "नः" अस्मदीयं "चनः" [ अन्न-नामैतत् ( निरु० नै० ६,१६ ) ] हविर्लक्षणमन्नं "दधिष्व" धारय स्वीकुर्व्वन्त्वित्यर्थः ॥ ३ ॥ ५

अथ चतुर्थ-तृचे—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
तमीडिष्वयोअर्चिषावनाविश्वापरिष्वजत् ।

३ १ २ ३ १ २ ३ १ २
कृष्णाकृणोतिजिह्वया ॥ १ * ॥

हे स्तोतः! "तम्" अग्निम् "ईडिष्व" स्तुहि, "यः" अग्निः "अर्चिषा" ज्वाला-रूपेण तेजसा "विश्वा" सर्व्वाणि "वना" वनान्यरण्यानि "परिष्वजत्" परिष्वजति परितो वेष्टयति, यश्च तानि वनानि "जिह्वया" ज्वालया दग्धा "कृष्णा" कृष्णवर्णानि "कृणोति", तमीडिष्वेति सम्बन्धः ॥ १ ॥

---

* ऋ० वे० ४, ८, १८, ५।



Digitized by Google

अथ द्वितीया।

१ २ ३ २ १ १ २ १ २ २ २ १ १ २

यद्द्य आविवासति सुम्नमिन्द्रस्य मर्त्यः।

२ १ २ २ १ २ २ २ २

द्युम्नाय सुतरा अपः॥ २ *॥

"यः" "मर्त्यः" मनुष्यः "इद्धे" दीप्ते अग्नौ "सुम्नं" सुखकरं हविः "इन्द्रस्य" [ चतुर्थ्यर्थे षष्ठी (२, ३, ६२ ) ] इन्द्राय "आविवासति" परिचरति प्रयच्छति, तस्य मर्त्तस्य "द्युम्नाय" द्योतमानायान्नाय तदर्थं "सुतराः" सुखेन तरणीयाः "अपः" उदकानि वृष्ट्यात्मकानि, इन्द्रः करोत्विति शेषः॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २

तानो वाजवतीरिष आशून्पिपृतमर्वतः।

१ २ ३ २ ३ १ २

एन्द्रमग्निञ्च वोढवे॥ ३ †॥ ६

हे इन्द्राग्नी! "ता" तौ युवां "वाजवतीः" अन्नवतीः "इषः" इष्यमाणा "इष्टीः" [ यद्वा, वाजो बलं तद्वतीः इषः अन्नानि ] "आशून्" शीघ्रगान् "अर्व्वतः" अश्वांश्च "नः" अस्मभ्यं "पिपृतम्

* ऋ० वे० ४, ८, २९, १।

† ऋ० वे० ४, ८, २९, २।

पूरयतम् प्रयच्छतम्। किमर्थम्? "इन्द्रम्" "अग्निञ्च" "आ वोढवे" आ समन्तात् वोढुं हविर्भिः प्रापयन्तु॥ ३॥६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य तृतीयः खण्डः*॥ ३॥

---

अथ चतुर्थ-खण्डे,† प्रथम-तृचे—

प्रथमा।

१ २ ३ २ ३ १ २ ३ २उ
प्रोअयासीदिन्दुरिन्द्रस्यनिष्कृतꣳ
२ ३ १ २र ३र ३ १ २
सखासख्युर्नप्रमिनातिसङ्गिरम्।
१ २ ३ २ ३ १ २ ३
मर्यइवयुवतिभिःसमर्षति
१ २ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा॥ १‡॥

"इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थानमुदरं "प्रो अयासीत्" प्रैव गच्छति; गत्वा च "सखा" सखिभूतः "सख्युः"

---

* 'उक्तं प्रातःसवनं चतुर्विंशस्तोमिकम्'—इति वि०।

† 'इदानीं माध्यन्दिनं सवनम्। तत्रापवस्वचारयेति सप्तर्चि-प्रभृतीनि सामानि माध्यन्दिनीयार्थानि, पुनानः सोमधारयेति कवष-इत्यन्तः—प्रभृतीनि सामानि बार्हत-मानि'—इति वि०।

‡ ऋ० वा० ६, २, २, ४ (२भा० १०९पृ०)—ऋ० सं० ७, २, ११, १।

इन्द्रस्य "सक्थिरं" सम्यग् गिरणाधारभूतम् उदरं "न" "प्र मिनाति" हिनस्ति, किञ्च "मर्य इव युवतिभिः" मर्त्त्यो यथा तरुणीभिः स्त्रीभिः सह सङ्गतो भवति तद्वदयमपि सोमो युवतिभिर्मिश्रण-शीलादिभिर्वसतीवरीभिरद्भिः सह "समर्षते" सङ्गच्छते अभिषव-काल-पश्चात् सोमः "शतयामना" अनेक-यामन-साधन-विस्तोपेतेन "पथा" मार्गेण दशापवित्र-सम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः यद्वैकमेव वाक्यम्—यथा मर्यो मर्त्त्यो युवतिभिः सह सङ्गच्छते एवं कलशे शत-यामना पथा सङ्गच्छते॥

"शतयामना"—"शतयाम्ना"——इति पाठौ॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ १ २
प्रवोधियोमन्द्रयुवोविपन्युवः

३ १ २ ३ १ २
मनस्युवःसंवरणेष्वक्रमुः।

२ ३ १ १ २ क २र ३ १ २
हरिङ्क्रीडन्तमभ्यनूषतस्तुभो

१ ३ १ २ ३ १ ३ १ २
भिधेनवःपयसेदभिश्रयुः॥ २ *॥

हे सोमाः "वः" युष्माकं "धियः" ध्यातारः† "मन्द्रयुवः" मदकरं शब्दं कामयमानाः "पनस्युवः" स्तुतिं कामयमानाः

* ऋ० वे० ७, ३, १५, २।

† 'धियः—बुद्धयः'—इति वि०।

"विपन्यवः" [—स्तोतृ-नामैतत्*) स्तोतारः "संवरेषु" तृण-कटा-वरणोपेतेषु याग-गृहेषु "प्राक्रमुः" प्रक्रमन्ते । तदेवाह—"स्तुभः" स्तोतारः† "हरिं" हरितवर्णं "क्रीड़न्तं" क्रीड़न-शीलं सोमम् "अभ्यनूषत" अभिष्टुवन्ति "धेनवः" अपि "पयसा" स्वीयेन क्षीरेणैव "इत्" इमं सोमम् अभिलक्ष्य "अशिश्रयुः" अधिकं श्रीणन्ति ॥

"संवरणेषु"-"संवसनेषु"—इति पाठौ, "हरिङ्क्रीड़न्तं" -"सोममनीषां"—इति च, "पयसेदभिश्रयुः"-"पयसेमशिश्रयुः" —इति च ॥ २ ॥

अथ तृतीया ।

१　२　　३१　१　२　१　२　१　२
आनःसोमसंयतम्पिप्युषीमिष
१　२　१　१　२　१　२　　२　१　२
मिन्दोपवस्वपवमानऊर्मिणा ।
२　३　१　२　३　२उ　१　१　२
यानोदोहतेत्रिरहन्नसश्चुषी
३१र　२र१　१　२　२　१　२
क्षुमद्वाजवन्मधुमत्सुवीर्य्यम् ॥ ३ ‡ ॥ ७

---

* "विपन्यवः"—इति निघण्टौ मेधावि-नामसु सप्तदशं पदम् ( ३, १५ ) ।

† 'स्तुभः—स्तोभवत्यः'—इति वि० ।

‡ ऋ० वे० ७, ३, १५, ३ ।

Digitized by Google

हे "इन्दो" दीप्त! "सोम !" "पवमान:" त्वं "न:" अस्माकं "संयतं" सङ्गृहीतं "पिप्युषीं" प्रवृद्धम्* "इषम्" अन्नम् "ऊर्मिणा" प्रवाह-रूपेण तदीयेन रसेन "पवस्व" प्रयच्छेत्यर्थः । "या" इट् "न:" अस्माकम् "अहन्" अहनि अह्नः "त्रि:" त्रिषु सवनेषु "असश्चुषी" अप्रतिबन्धेन† "दोहते" । किम् ? "द्युमत्" शब्दोपेतं सर्व्वत्र श्रूयमाणं "वाजवत्" बलवत् "मधुमत्" माधुर्योपेतं "सुवीर्य्यं" शोभन-सामर्थ्यं पुत्रं दोहते । तामिषं पवस्वेति समन्वयः ॥

"ऊर्मिणा"-"अप्रियम्"—इति पाठौ ॥ ३ ॥ ७

॥ प्रवद्भार्गवम् ॥ प्रोअयासायित् । इन्दुरिन्द्रा । स्या २निष्कृताम् । सखासख्यूः । नप्रमिना । ता२यिस ङ्गिराम् । मर्य्यइवा । युवतिभायिः । सा२मर्षतायि । सोमःकला । शेशतया । मा२नापथा३१उ ॥(१) प्रवो धियो । मन्द्रयुवो । वा२यिपन्युवाः । पनस्युवाः । संवरणायि । षू२वक्रमूः । हरिक्रीडा । तमभ्यनू । षा

* 'पिप्युषी'—पानेच्छाम्'—इति वि० ।

† 'असश्चुषी—आनुपूर्व्वेण'—इति वि० ।

१ १ १र २ १ १
२तस्तुभाः। अभिधेना। वःपयसायित्। आ२श्रिश्र
१ १ १र १र २ १ १र
यू३राउ॥(२) आनःसोमा। संयतम्पायि। प्यू२षीमि
२ र १ २ १ १र १र र
षाम्। इन्दोपवा। स्वपवमा। ना२ऊर्म्मिणा। यानो
१र १र १ १ २ १र
दोहा। तेन्विरद्वान्। आ२सस्नुषायि। सुमद्वाजाः।
१ १ १र २ १ १ १ १ १
वमधुमान्। सू२वीरियाउमाउ। वा२३४५(३)॥७*॥[१]
१ र र २
॥काव्वम्॥ प्रवो। अयासोदिन्दुरिन्द्रा। स्यनि
१ १र २ १
ष्कार्त्ता२म्। सखासख्युर्नप्रमिना। तिसङ्गायिरा२म्।
१ २ १ १ २ ४ ५
मर्यइवयुवतिभायिः। समर्षाता२३यि। सोमा३ःकाला।
१र १ १ २ ४ २ १
शेषतााया२३। माना३पा५थाई५६॥(१) प्रवोवा। धि
र २ १ १ २
योमन्द्रयुवे। विपन्यूवा२ः। पनस्युवःसंवरणायि। षु
१ १ र २ १ १
वक्रामू२ः। हरिंक्रीडन्तमभ्यनू। षतस्तुभा२३ः। आ
१ ४ ५ २ १ १ २ ४
भौ३धेना। वःपयासा२३यित्। आशा३यिश्रा५यू६

* ऋ० सं० ४अ० १अ० ७वा०।

१र २ र १र १
५ ६ ॥(२) आनोवा। सोमसंयतम्पायि। प्युषीमायि

१ र २ र १ १र र
षा२म्। इन्दोपवस्वपवमा। नऊर्म्मायिणा२। यानो

र र २ १ १ २ ४ ५ २
दोह्वतेत्त्रिरह्वान्। असश्रूषा२३यि। सूमा३द्धाजा। व

१ १ २ ४
म्मधूमा२३त्। सूवा३यिरापुयाथ५६म(३) ॥ १० *॥ [२]

३र २ ३र ५र १
॥ लौशाद्यम्॥ प्रोम्रयासीत्। इन्दुरिन्द्रा २ ३।

४ २ १ ५ ३ २र ३ ५ १ ४ २
स्या३निष्कृतम्। सखासख्यु:। नप्रमिना२३। तौ३स

३ ५ २ २ ३ ४ १ ४ २ ३ ५
ङ्गिरम्। मर्य्यइव। युवतिभा२३यि:। सा३मर्षति।

३र २ २ ५ १र १ ४
सोम:कला। शतशतया २ ३। मना३पा५याई५६ ॥(१)

३ १र ३ ५ १ ४ २ ३ ५ ३ १ ३ ५
प्रवोधिय:। मद्रयुवो२३। वा३यिपन्युव:। पनस्युव:।

१ ४ २ १ ५ ३ २ १र ५ १
सवरणा२३यि। षू३वक्रमु:। हरिक्रीड। तमभ्यनू२३।

४ २ ३ ५ ३ १ ३र ५ १ २
षा३तस्तुभ:। अभिधेना। व:पयसा२३यित्। मश्रा

४ ३र २ ३र ५ १
३यिश्रा५यू६५६: ॥(२) आन:सोम। संयतपा २ ३ यि।

---

* ऊ० गा० ६प्र० २ख० १०षा०।

४ १र ३ ५ २ १र ३ ५ १ ४ २र १
प्यू३षीमिषम् । इन्दोपव । सुपवमा २ ३ । नाउञ्मि
५र ३र २र ३र ५ १र ४ र ३ ५र २ १
णा । यानोदोह । तेनिरह्वा२३न् । ग्रा३सखुणी । सुम
३र १ १ १ ४
हाजा । वन्मधुमा २ ३ त् । सुवा ३ यिरा ५ या ६ ५
६ म् (३) ॥ ११ * ॥ [३]

३र २ ३ ५ १ १
॥ यज्ञसारथिम् ॥ प्रोष्वाया२३४सीत् । इन्दूरा२३
५ १ २ १ २ १ ३ २ ३
४यिन्द्रा । स्यानिष्कृताउम् । होयि । सखासा२३४
५ २ ३ ५ १ २ १ १ १
ख्यूः । नप्रामी२३४ना । तायिसङ्गिराउम् । होयि ।
३ २ ३ ५ २ ३ ५ १ २ १ २
मर्य्याई२३४वा । युवाती२३४भायिः । सामर्षताउयि ।
१ ३र १ ३ ५ २र ३ ५ १ २र
होयि । सोमाःका२३४ला । प्रेशाता२३४या । माना
१२ १ ३ १ ३ ५ २ ३
पथा३ । होर२३४५ई ॥(१) प्रवोधी२३४यो । मन्द्रायू२
५ १ २ १ २ १ ३२ ३ ५
३४वो । वायिपन्युवा३ः । होयि । पनास्यू२३४वाः ।
२ ३ ५ १२ १ २ १ ३२ ३
संवारा२३४णायि । पूवक्तमू३ः । होयि । हरायिन्द्रा

* ऊ० गा० ७प्र० १खं० ११गा० ।

५ २ २ ५ १ १ २ १ १
२३४यिडा । तमाभ्धा२३४नू । घातस्तुभा३ः । होयि ।

१२ २ ५ २ २ ५ १ ११२
पभायिधे२३४ना । वःपाया२३४सायित् । आभिश्रयू३ः ।

१ १२ २ २ ५ २ २ ५
हो२३४५ई ॥(२) आनाःसो२३४मा । संयाता२३४म्पी ।

११२ १ २ १ २१ २ ५ २ २
प्पूषीमिषा३म् । होयि । इन्दोपा२३४वा । स्वपावा२३

५ १ १२ १ २ १ २१ २ २ ५
४मा । नाऊर्म्मिणा३ । होयि । यानोदो२३४द्दा ।

१२ ५ १ ११२ १ २ २ १
तेन्वीरा२३४ह्वान् । आसख्रुषा३यि । होयि । सुमाक्ष

५ २ ५ ५ ११२ १ २ १
२३४जा । वन्माधू२३४मात् । सुवीरिया३म् । हो२३

४५ई । डा(३) ॥ ५ ॥ [४]

१२ २ १ १२ १२
॥ वाराहम्† ॥ हाउहाउ । ऊप् । प्रोभयासायित् ।

२ १ १ २ ४ ५ २ १२ २१
इन्दुरि । द्रस्यनिष्कृताम् । सखासख्यूः । नप्रमि ।

१२ ३ ४ ५ १ १ २ १ २ ३ ४ ५
नातिसञ्जिराम् । मर्य्यइवा । युवति । भिःसमर्षता

१२ १ १२ १ १२ २ २ ४
यि । सोमःकला । शेष्मत । या । मनाइपा५या६५

---

* ऊ० गा० १०प्र० १ख० ५सा० ।

† "जगतीवाराहम्"—इति ख० पु०-पाठः ।

१ ११ ४१ १र२३ ५ २१
६॥(१) प्रवोधियो। मन्द्रयु। वोविपन्युवाः। पनस्यु
२१ १र२ ४ ५ २१र २१
वाः। संवर। णेषुवक्रमूः। हरिक्रीडा। तमभ्य।
१र२४ ५ २१र २१ १र ३२
नूषतस्तुभाः। अभिधेना। वःपय। सेत्। चश्राइयि
४ १र १ र २१ २२ ४र
आ५यू६५६ः॥(२) आनःसोमा। संयतम्। पिप्युषी
५ २१र ११ १र३४र ५ २र
मिषाम्। इन्दोपवा। स्वपत्र। मानऊर्म्मिणा। या
१र र २र१ २१४ ५ २र र
नोदोहा। तेभिर। चस्मस्युषायि। हाउहाउ।
१ २१र २१ २ ३१ ४
ऊप्। सुमदाजा। वन्मधु। मत्। सुवा३रा५या६५
ई म्(३)॥ १५ *॥[५]

२र १ १२र ३ २
॥ अपामीवम्॥ प्रोश्वा। यासोदिन्दुरिन्द्रा३स्या३नि
१५ २१ २ ४ २३५ २
ष्कृतम्। सखा। सख्युर्न्नप्रमिना३तो३सङ्गिरम्। म
१ २ ४ १२५ २र१ २
र्य्यः। इवयुवतिभा३यिःमा३मर्षति। सोमाः। कल
र २२ ४ २१ १र
शेशतया। मना३पा५या६५६॥(१) प्रत्रो। धियोमन्द्र

* ऊ० गा० १३प्र० १ष० १५गा०।

४ १२५ २१ २ ३ १२५
युवो३वा३यिपन्युवः। पना। सुवःसंवरणा३यिषू३वक्रमुः।
२१ २र ४ १२५ २१ २र
वरायिम्। क्रीडन्तमभ्यनू३षा३नस्तुभः। अभायि। धे
र २१ ४ २र१ २र
मवःपयसेत्। अग्रा३यिग्रा५यू६५६ः॥(२) आनाः। सो
४ २र१५ २१ २
मसंयतम्पा३यिप्यू३षीमिषम् इ पवस्वपवमा३ना
२र१५र २र१ २र र ४ १२५
३ऊर्म्मिणा। यानो। दोहते। त्रिरहा३ना३सश्चुषी।
२१ २र ३२ ४
क्षुमात्। वाजवन्मधुमत्। सुवा३ यिरा ५ या ६ ५
६ म्(३)॥ १८ *॥[६] ७

अथ नकिरिति प्रगाथरूपे द्वितीयसूक्ते†—

प्रथमा।

२ ३१र २र ३१२१ २३११
नकिष्टङ्कर्मणानशद्यश्चकारसदावृधम्।
२३२३ २ ३१२३ १ २३११ ३१र २र
इन्द्रन्नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टन्धृष्णुमोजसा॥ १ ‡॥

---

* ऊ० गा० ११प्र० २ख० १८गा०।

† 'उभी माध्यन्दिनः पवमानः। वृहद्वृहद् वामदेव्यं मैत्रावरुणं साम अभिनिधनं काण्वं ब्रह्मसाम वैखानसमच्छावाकसाम'—इति वि०।

‡ ऋ० मा० ६, १, १, १ (१भा० ५०२४०)=ऋ० वे० ६,५,८,१।

Digitized by Google

"तं" जनम् अन्यो मर्त्त्यो जनः "कर्म्मणा" हननादि-व्यापारेण "नकिः नशत्" नैव व्याप्नोति, "यः" "इन्द्रं चकार" इन्द्रमेवानुकूलं यज्ञैः साधनैश्चकार । कीदृश-मिन्द्रम् ? "सदावृधं" सर्व्वदा वर्द्धकं, "विश्वगूर्त्तं" सर्व्वैस्तुत्यम्, "ऋभ्वसं" महान्तम् "ओजसा" स्वीयेन बलेन "अधृष्ट" शत्रुभिरनभिभूतम् "धृष्णुं" शत्रूणामभिभवनशीलम् ॥

"धृष्णुमोजसा"—"धृष्णुओजसम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २　३ १र २र　२　१र　१र २ १　२ ३ १ २
अषाढमुग्रम्पृतनासुसासहिंयस्मिन्महीरुरुज्रयः ।
१ २ ३ ३ १ २　३ २ ३ १ २
सन्धेनवोजायमानेअनोनवुर्द्यावक्षामीरनोनवुः ॥ २ * ॥८

"अषाढ़म्" असोढ़म् "उग्रम्" उद्गूर्णबलं "पृतनासु" शत्रुसेनासु "सासहिम्" अभिभवितारमिन्द्रं† स्तौमीत्यर्थः, "यस्मिन्" इन्द्रे "जायमाने" "महीः" महिभ्यः "उरुज्रयः" बहु-वेगाः "धेनवः" क्षीरादिना प्रीणयित्र्यः अजा गाव एव वा‡ "समनोनवुः" समस्तुवन् । न केवलं धेनव एव अपि तु "द्यावः" द्युलोकाः "क्षामीः" पृथिव्यश्च ¶ समनोनवुः, तत्रत्याः सर्व्वे

* ऋ० वे० ६, १, ८, ४ ।

† 'सासहिं—साधन-स्वभावम्'—इति वि० ।

‡ 　नः—गावः, आपः आदित्यरश्मयो वा'—इति वि० ।

¶ 'क्षामीः—द्युलोकान् उपपत्समर्थाः आदित्य-रश्मयः'—इति वि० ।

प्राणिनो नमन्त इत्यर्थः "विहृतो लोकाः"—इति श्रुतेः बहु-
वचनम् ॥

"धामौः"—"धामः"—इति पाठौ॥ २॥ ८

५ १ ४ ५ ४र ५ १ १ १र
॥ वैखानसम्॥ नकिष्टा३ङ्कर्मणानशात्। यश्चाका

१ १ १र २ १ १ १र १ १ १ १ २
रा। सदावृधार३म्। सदावृधाम्। इन्द्रान्नया। वि

१ २ १ १ १ २ २ २ १ १
श्वगू। तमा२भ्र्वतार३म्। तमृभ्वसाम्। अधाष्टे

१ १ १र १ १ १ ३र २ ५ १
न्धा। धृष्णुमाजसा२३। धृष्णुमोजसा३४३॥(१) अधृष्टा३

४ ५ ४र ५ १ १ २ १ २ १र १ १ १ ३र
न्धृष्णुमोजसा। अधाष्टेन्धा। धृष्णुमोजसा२३। धृष्णुमो

२ १ २ १ २ २ २ २ ७ १
जसा। अषाढमू। उग्रम्पृतना। सुसा२सहा२३यिम्।

२ ३र २ १ २ १ २ २ २ १ २ २
सुसासहीम्। यस्मायिन्मह्यायिः। उरुज्रया२३ः। उरु

२ ५ २ ४ र ५ ४ ५ २ १ २
ज्रया३४३ः॥(२) यस्मिन्मा३ह्योरुरुज्रयाः। यस्मायिन्म

१ १ २ २ १ १२ २ १ २ १
ह्यायिः। उरुजया२३ः। उरुज्रयाः। सन्धायिनवो।

१र १ १र १ ७ १ १ १र २ र १ १र १
जायमाने। अनो२नवू२३ः। अनोनवूः। द्यावाक्षामा

१ २र १ १        १ २र २        १
यिः । आनोनवूर्ष्ट्रः । अनोनवू३४३ः । ष्रोर ३ ४ ५ई ।

डा(३) ॥ ८ * ॥ [१] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
चतुर्थः खण्डः † ॥ ४ ॥

---

अथ पञ्चम खण्डे‡, प्रथम तृचे—

प्रथमा ।

१ २ ३ १र २र ३ १ ३ १ २
सखायआनिषीदतपुनानायप्रगायत ।

२ ३ १ २ ३ १र २र ३ २
शिशुन्नयज्ञैःपरिभूषतश्रिये ॥ १ ¶ ॥

हे "सखायः" सखीभूताः स्तोतार ऋत्विजः ! "आ निषीदत" स्तोतुमुपविशत । अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत । ततः अभिष्टुतं सोमं "यज्ञैः" यजमानीयैः हविर्भिर्मिश्रणैश्च "श्रिये" शोभार्थं "परि भूषत" परितोऽलङ्कुरुत । तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितर आभरणैरलङ्कुर्व्वन्ति तद्वत् ॥ १ ॥

---

* उ० गा० ४प्र० १भा० ८सा० ।

† 'उक्तानि क्षुद्राणि'—इति वि० ।

‡ 'इन्द्रासौमार्भवः पवमानः'—इति वि० ।

¶ ऋ० पा० ६, १, १, २ (२भा० २०६पृ० ) = ऋ० वे० ७, ५, ७, १ ।

अथ द्वितीया ।

१ २ ३ १उ ३ १ १ १ १ १ १ १ १
समीवत्सन्नमातृभिःसृजतागयसाधनम् ।
१ १ १ १ ३ १र २र
देवाव्यांऽम्मदमभिप्रिद्विशवसम् ॥ २ * ॥

हे ऋत्विजः! "गय-साधनं" गृहस्य साधनभूतम्† "ईम्" एनं‡ सोमं "मातृभिः" मातृभूताभिः वसतीवरीभिः "संसृजत" सम्मिश्रयत, कथमिव? "वत्सम्" यथा वत्सं मातृभिः गोभिः संयोजयन्ति तद्वत्। कीदृशम्? "देवाव्यं" देवानां रक्षकं "मदं" मदन-हेतुं "द्विशवसं" द्विगुण-वेगम् अतिशयित-बलं वा यद्वा द्वयोर्लोकयोस्तत्र स्थिता देवमनुष्या इत्यर्थः, तेषां हविर्द्दान-प्रदानेन प्रवर्द्धयितारं तं सोमम् "अभि" सं सृजत ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ १ ३ १ १ ३ १ २
पुनानादक्षसाधनंयथाशर्द्धायवीतये ।
१ २ ३ २ ३ १ २ ३ १ २
यथामित्रायवरुणायशन्तमम् ॥ ३ ¶ ॥ ९

* ऋ० वे० ७, ५, ७, १ ।

† "गयः"—इति निघण्टौ गृहनामसाद्यं पदम् (३, ४)। विवरणकृता त्वेवं व्याख्यातम्—'गयः प्राणाः, देवानां प्राण-साधनार्थं मिश्रयत सोमम्'—इति।

‡ "ईम्"—इति ऋग्वेदीय-पाठमवलम्ब्यैषा व्याख्या सामवेदीयपाठस्तु "ई"—इति

¶ ऋ० वे० ७, ५, ७, २ ।

Digitized by Google

"इषसाधनं" बलस्य साधनं* धनानां हविर्वा साधकं सोमं "पुनाता" पवित्रेण पुनीत [पूञ् पवने (उ०) क्र्यादिः; तस्माल्लोटि "तप्तनप्तनथनाश्च (७, १, ४५)"—इति तस्य तबादेशः, पित्त्वादीत्वाभावः "मद्याय" देवानां† "वीतये" देवानां पानार्थं यथा भवति तथा "मित्राय" "वरुणाय" च "शन्तमम्" अतिशयेन सुखं यथा भवति तथा पुनीतेत्यर्थः॥

"शन्तमं"·"शन्तमः"—इति पाठौ॥ ३॥ ९

॥ प्रथम‡॥ हाऽ। वो३हा। वो३हा३। हा। ओ २३४वा। हायि। साखायार२३४आ। नीषीदार२३४ता। पूनानार२३४या। प्रार२३४गा। यार२३४ता। गायिष्ठुआ २३४या। ज्ञीःपारा२३४यिभू। षार२३४त। आर२३४यायि॥(१) सामीवार२३४त्साम्। नामातूर२३भायिः। सार्श्ञातार२ ४गा। यार२३४सा। धार२३४नाम्। दायिवावार२३४ याम्। मादामार२३४भो। हार२३४यिआ॥(२) वार२३४

* 'इषसाधनं—सोम-कर्म-कर्त्तारम्'—इति वि०।

† 'मदाय—बलाय'—इति वि०।

‡ "प्रथः"—इति क० पु० पाठः।

साम् । पूनाता२३४दा । त्वासाधा२३४नाम् । यार्था
दा२३४र्ह्वा । या२३४वौ । ता२३४यायि । यथामा२३४
यित्रा । यावाह्व२३४णा । या२३४म्र । ता२३४माम् ।
हा ऽ । वो३हा । वो३हा३ । हा । ओ२३४वा । हा
३४ । औहोवा । ए३ । प्रतिविश्वानिदुरितानरेमार३
४५(३) ॥ १२ * ॥ [१]

॥ सुज्ञानम् ॥ सखाय आ । निषीदता । पुनाना
या२ । प्रगायता । शिशुन्नाया२ । यौःप । रा२यि
भू२३४औहोवा । षतश्रियए३ ॥(२) समीवत्साम् । न
मातृभायि । सृजतागा२ । यसाधनाम् । देवावाया२
म् । मदम् । आ२भा२३४औहोवा । दिप्रवसमे३ ॥(१)
पुनाताद्दा । स्साधनाम् । यथाश्राद्धा२ । यवीतया

* ऊ० गा० ४प्र० १ख० १२गा० ।

२ र १ १ १ १र र १
यि। ययामाविञा२। यव। इ२णा२३४औहोवा। य

१ १ १११
ज्ञममे३उपा२३४५(३)॥ १८*॥ [२]

२ १ २ १ ५र
॥ दैवोदासम्॥ सखा३१। यश्वा३१२३४। निषी।

१ २ २ १ २र २ ५र १ २
दा३ता। पुमा३१। नाया३१२३४। प्रगा। या३ता।

१ १ २ १ र १ १ १ २ १
शिशू३१म्। नया३१२३४। औ:प। रा३यिभू। षता

२ २ १ ५ २ १ २ २
३१। श्रिया३। ओ२३४वा॥(१) समी३१। वत्सा३१२

५र १ १ २ १ ५र
४म्। नमा। तू३भायिः। स्वजा३१२३४। यसा।

१ १ २र २ २ २ ५ २
सा३नाम्। देवा३१। विया३१२३४म्। मदम्। भा

१ २ २ २ २ १ ५
३भायि। हिश्रा ३ १। वसा३म्। ओ२३४वा॥(१)

२ १ २र २ ५र २ २ २ १
पुना३१। तादा३१२३४। वसा। धा३नाम्। यथा

२ १ ५र २ २ २ २ २ २
३१मर्धा३१२३४। यवी। ता३यायि। यथा३। मित्रा

* ऊ० गा० ७प्र० १ख० १८गा०।

३१२३४ । यव । छ३पा । यम्रा२१ । तमा३म् । श्रो
२३४वा । अ२३४पा(३) ॥ १९ * ॥ [३]

॥ पौष्कलम् ॥ सखाया३ानि । पीदा२ ३ ४ता ।
पुनानाया । प्रागायार३४ता । शिशूनया । यै:पार
रा२३४५यिभू६५६ । षतश्रिये२३४५ ॥(१) समीवा३त्सन ।
मातृ२३४भायिः । सजाताागा । यासाधा २ ३ ४नाम् ।
देवाषियाम् । मदा२मा२३४५भा६५६यि । द्विशवसा२
३४५म् ॥(२) पुनाता३दक्ष । साधा२३४नाम् । यथा
शर्द्धा । पावीता२३४यायि । यथामित्रा । यथा२रु२३
४५णा६५६ । यश्नन्तमा२३४५म्(३) ॥ १८ † ॥ [४]

॥ श्रौक्तम् ॥ सखा । यषाश्रो२३४वा । निषायि ।

---

* ऋ० मा० ७प्र० १ षा० १९ षा० ।

† ऋ० मा० ९प्र० १ षा० १८ षा० ।

Digitized by Google

१ २ ५ २ ८१र १ १ १ १ १ १
दाताओ२३४वा । पुनानायप्रगा२यता२३४५ । आयि
२ २ ५ १ ८ १ १ १ १ १ १ २ २
यिआओ२३४वा । नयमै:परिभू२३४५ । धाताओ२३४
५ २ ५ ८ २ १ २ ५ २ १
वा । श्रियेर ॥(१) समौ । वत्साओ२३४वा । नमा ।
२ २ ५ २ १८ २ १८ १ १ १ १ १ १ २
तृभाओ२३४वा । सजतागयसाधना२३४५म् । दायिवा
२ ५ १ २२ २ २ ५
ओ२३४वा । वियम्मदमभा२यि । दायिआओ२३४वा ।
१ २ ८ २८१ २ ५ २ १ २
वसा२म् ॥(२) पुना । नादाओ२३४वा । वसा । धाना ।
१ ५ १ २८ १ ८ २ ८ १ १ १ १ १ १ १ २ २
ओ२३४वा । यथाशर्द्धायवीतया२३४५यि । यायाओ२३
५ २ १८ २ १ १ १ १ १ १ १ २ २ ५ २
४वा । मित्रायवरुणा२३४५ । याआओ२३४वा । तमा
१म्(३) ॥ १५ ॥ [५] ९

अथ प्रवाजीति त्वचात्मकं द्वेपदं द्वितीयं सूक्तं—

तत्र प्रथमा ।

१ २क २८ २ १ १ १ २ २ १ २ ३उ २ १ १
प्रवाज्यचाः सहस्रधारस्तिरःपवित्रं विवारमव्यम् ॥ १ † ॥

---

* ऋ० मा० १४प्र० २चा० १५खा० ।

† ऋ० वे० ७, ५, १९, ५ ।

"वाजी" बलवान् वेगवान् वा "सहस्रधारः" बहुधारायुक्तः सोमः "अव्यम्" अविभवं "वारं" वालं पवित्रं "तिरः" व्यवधायकं कुर्व्वन् "प्राचाः" विविधं प्रचरति [चरतेर्लुङि रूपम्] ॥

"प्रवाजी"-"प्रसुवानः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ ३क २र ३ १ २ ३ १ २ ३ १र २र ३ २
सवाव्यचाःसहस्ररेताअद्भिर्मृजानोगोभिःश्रीणानः ॥२*॥

"सः" सोमः "अचाः" चरति। कोदृशः? "सहस्ररेतः" बहु-रेतस्कः "बह्वुदकः" "अद्भिः" वसतीवरीभिः "मृजानः" मृज्यमानः "गोभिः" गविकारैः चीरादिभिः "श्रीणानः" श्रियमाणः ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १र २र ३ १र २र ३ २
प्रसोमयाहीन्द्रस्यकुक्षानृभिर्येमाणोअद्रिभिःसुतः ॥३†॥१०

हे "सोम!" "नृभिः" ऋत्विग्भिः "येमानः" नियम्यमानः‡ "अद्रिभिः" ग्रावभिः "सुतः" अभिषुतः "इन्द्रस्य" "कुक्षा" [सप्तम्या डादेशः (३, ४, ३८)] कुक्षौ उदरभूते कलशे वा "प्रयाहि" प्रकर्षेण गच्छ [संहितायां येमान इत्यत्र चान्दसं रूपम्] ॥ ३ ॥ १०

* ऋ० वे० ७, ५, ११, ६।

† ऋ० वे० ७, ५, ११, ७।

‡ 'येमानः—सूयमानः'—इति वि०।

Digitized by Google

१ १२ १ २ १   १ १ २ १
॥ सोहविषम् ॥ प्रवाजियच्चाः । सहस्रधारास्ता१यि
५   २ १   २ १२   ५
रा२३४ः । हायि । पवित्राम् । विवारा२३४ॱहायि ।
२ ५ ५   १ २र १ २ १   २ १ २ ०
आ२३४व्योई३हायि ॥(१) सवाजियस्त्राः । सहस्ररेताच
५   २ १२   २र १
द्गा२३४यिः । हायि । मृजानाः । गोभायिश्रा२३४यि
५   १   ५ ५   १२ २ १ १
हायि । णा२३४नोई३हायि ॥(२) प्रसोमयाच्चो । इन्द्र
०   ५   २र१र   २ १
स्यकुचानृभा२३४यिः । हायि । येमानाः । चद्रिभार
५   १   ५ ५
३४ । यिर्हायि । सू२३४नोई३हायि(३) ॥ १५ * ॥ [१]

१र   १ १   १   २ १
॥ जराबोधीयम् ॥ प्रवाजियोवा । चाः । सहार
१   र १   २   ४ ५
३स्रा । धारस्तायिराः । पवाथित्रा१वार३यिवा । रम् ।
१ १   २ र   १ २   १   २ १
अव्यो३४५ई । डा । सवाजियोवा । चाः । सहार
२   र र १   १   ४ ऽ   ५र
३स्रा । रेताचद्गायिः । मृजाना१गोर३भायिः । श्रो ।
१र १   १ र   १ १   १   १ १
णानो३४५ई । डा । प्रसोमयोवा । हायि । इन्द्रास्या

---

* ऊ० आ० ४प्र० १ख० १५सा० ।

१ २ १ २ २ ४५ ५
२३कू। आनुभायिः। येमानो१आर२३द्रायि। भिः।
१ १
सुतो२३४५ई। डा(३) ॥ १ * ॥ [२] १०

अथ येसोमास इति ऋचात्मकं तृतीयं सूक्तम्, †

तत्र प्रथमा।

१२ १२ १ २ ११ १ ११ २ १ २
येसोमासःपरावतियेअर्वावतिसुन्विरे।
१ ११ ११ १ २
येवादःशर्य्यणावति ॥ १ ‡ ॥

एतद्‌आदिभ्यामृग्भ्यामिन्द्रार्थं सर्वत्र सोमाभिषवोऽस्तीत्याह— "ये" "सोमासः" "परावति" विप्रकृष्टेऽतिदूरे¶ देशे "ये" वा "अर्वावति" अन्तिके देशे§ "सुन्विरे" अभिषूयन्ते "ये वा" "शर्य्यणावति"‖ [ कुरुक्षेत्रस्य जघनार्द्धे शर्य्यणावन्नाम्नाकं मधुर-रस-युक्तं सोमवत् सरोऽस्ति ] "अदः" अस्मिन् सरसि सुरसा ये सोमा इन्द्रायाभिषूयन्ते। ते अस्माकमभिमत-फलं ददात्विति वक्ष्यमाणेन सम्बन्धः ॥ १ ॥

---

* ऊ० गा० ११प्र० ३ख० १गा०।

† 'अद्भावश्रीयमग्निष्टोमसाम'—इति।

‡ ऋ० वे० ७, २, ५, २।

¶ "परावतः"—इति निघण्टौ दूर-नामसु पञ्चमं पदम् ( ३, २६ )।

§ "अर्वाके"—इति निघण्टावन्तिक-नामसु षष्ठमं पदम् ( २, १६ )।

‖ 'शर्य्यणावति—भूमौ'—इति वि०।

अथ द्वितीया !

१ २ ३ २ ३१ २ ३१र २उ ३क १ २र

य आर्जीकेषु कृत्वसु ये मध्ये पस्त्यानाम्।

१ २ १ २ ३ १ २

ये वा जनेषु पञ्चसु ॥ २ * ॥

"ये" वा सोमाः "आर्जीकेषु" ऋजीकानामदूरभवाः आर्जीकादेशास्तेषु† तथा "कृत्वसु" कृत्वानइति देशाभिधानम्, तेषु‡ कर्मवत्सु देशेषु च; किञ्च "पस्त्यानां" सरस्वत्यादीनां नदीनां¶ "मध्ये" समीपे च ये सोमा अभिषूयन्ते [ "ऋषयो वै सरस्वत्यां सत्रमासते"त्यादिषु§ नदीतीरे यज्ञकरणस्य श्रवणात्; किञ्च "जनेषु पञ्चसु" निषाद-पञ्चमाश्चत्वारो वर्णा पञ्चजनास्तेषु‖ च "ये वा" सोमा अभिषुताः। ते सोमा अस्माकमभिमत-फलं दद्यात्वित्युत्तरेण सम्बन्धः॥ २ ॥

---

* ऋ० वे० ७, २, ५, २।

† 'आर्जीकेषु—ऋजुषु'—इति वि०।

‡ 'कृत्वसु—कृतेषु स्थानेषु'—इति वि०।

¶ 'पस्त्यानां—गृहाणाम्'—इति वि०। "पस्त्यम्—इति निघण्टौ गृह-नामसु षष्ठं पदम् (३, ४,)।

§ "ऋषयो वै सरस्वत्यां सत्रमासत। ते कवषमैलूषं सोमादनयन् दास्याः पुत्रः कितवोऽब्राह्मणः कथं नो मध्ये दीक्षिष्टेति। तं बहिर्धन्वोदवहन्नत्रैनं पिपासा हन्तु सरस्वत्या उदकं मा पादिति"--इति ऐत० ब्रा०।

‖ जनेषु पञ्चसु—'पञ्चजनाः, यजमानश्चत्वार ऋत्विजः'—इति वि०।



Digitized by Google

अथ तृतीया ।

१ २ ३ २ २ ३ २ ३ १ २ १ २ ३ १ २
तेनोवृष्टिन्दिवस्परिपवन्तामासुवीर्यम् ।

३ २ ३ २ ३ १ २
स्वानादेवासइन्दवः ॥ ३ * ॥ ११

"स्वानाः" सुवानाः तत्र चाच अभिषूयमाणा "देवासः" देवाः दीपन-शीलाः स्तुत्या वा "इन्दवः" "ग्रहेषु" चमसेषु चरन्तः, "ते" सोमाः "नः" अस्माकं "दिवस्परि" परि-शब्दः पञ्चमी-द्योतकः, अन्तरिक्षादादित्याद्वा "वृष्टिम्" ["अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते । आदित्याज्जायते वृष्टिः (म० १अ०)"—इति वृष्टि-कारणत्वात्] किञ्च "सुवीर्यम्" शोभन-वीर्योपेतम् पुत्रञ्च धनादिकं वा "आ पवन्ताम्" प्रापयन्तु । यजमानः सोमेनाभिमत-फलानि प्राप्नोति खलु ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ३ ॥ ११

२र र र १ २ १ र २ १
॥ जराबोधीयम् ॥ येसोमासोवा । परावतायि ।

२र १ २ १ र २ ४
येआर्वा२३वा । तिसुन्वायिरायि । येवादा१ःआ२३र्ष्ठा ।

४र २ १ २र र १ २ १ २१
णा । वतो३४५ई । डा ॥(१) यआज्जौकोवा । षूक्वत्वमू ।

२र १ २ १ र १ ४
र्यमाध्या२३यिषा । स्त्तियानाम् । येवाजा१ना२३यिषू ।

---

* ऋ० वे० ७, १, ५, ४ ।

५। चसो ३४५६। तेनोवृष्टोवा। दायिवस्पराथि।
पवाम्बा२३मा। सुवीरायाम्। स्वानादा१यिवा२३साः।
६। दवो३४५६। डा(३)॥ १६* ॥[१ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य षष्ठमस्याध्यायस्य
पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

आतेवत्स इति द्व्यृचात्मकं प्रथमं सूक्तम्,—

तत्र प्रथमा।

आतेवत्सोमनोयमत्परमाच्चित्सधस्थात्।
अग्नेत्वाङ्कामयेगिरा॥ १ †॥

हे "अग्ने!" "वत्सः" ऋषिः "ते" तव "मनः" "परमाच्चित्" उत्कृष्टादपि "सधस्थात्" द्युलोकात् "आ यमत्" आयमन्ति आगमयन्ति। केन साधनेन? "त्वां" "कामये"

---

* ऊ० गा० ४प्र० १खा० १६सा०।

† छ० आ० १, १, १, ८ (१भा० १०५पृ०)=य० वे० १२, ११५=ऋ० वे० ६, ८, १६, १।

कामया अभिलषन्त्या "गिरा" स्तुत्या ["कामये"—इत्यत्रापि ये भादेशः पूर्ववत्। यद्वा त्वां कामये अभिलषामि]॥

"कामये"-"कामया"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २उ ३१२ ३ २ ३ २ ३ १ २ ३ २
पुरुत्राहिसदृङ्ङसिदिशोविश्वाअनुप्रभुः।

३ २ २
समत्सुत्वाहवामहे॥ २ *॥

हे अग्ने! "पुरुत्रा हि" बहुषु हि देशेषु त्वं "सदृङ् असि" समान-द्रष्टा भवसि अतएव "विश्वाः" सर्वा दिश "अनु" लक्ष्य "प्रभुः" ईश्वरो भवसि। ईदृशं "त्वा" त्वां "समत्सु" सङ्ग्रामेषु रक्षणार्थं "हवामहे" आह्वयामहे॥

"दिशः"-"विदिशः"—इति पाठौ॥ २॥

अथ तृतीया।

३ २ ३ १२ २ ३ २ ३ २
समत्स्वग्निमवसेवाजयन्तोहवामहे।

३ २ ३ २ ३
वाजेषुचित्रराधसम्॥ ३ †॥ १२

"समत्सु" समरेषु सङ्ग्रामेषु "वाजयन्तः" बलमिच्छन्तो वयम् "अवसे" रक्षणार्थम् "अग्निं हवामहे"। कीदृशम्? "वाजेषु" सङ्ग्रामेषु "चित्रराधसम्" याचनीय-धनम्॥ ३॥१२

* ऋ० वे० ५, ८, १६, ३।

† ऋ० वे० ५, ८, १६, ४।

Digitized by Google

५र र १ र १ १ २र
॥ वात्सम् ॥ आतेवत्साः। मनोयमत्। परमात्।
१ २ १ २ २ ४ ५ ४
चित्सधार२३स्थात्। अग्नायित्वा२३ङ्का३। मयोवा। गा
५ १ र १ २ १ र
पृथिरोई३वायि ॥(१) पुरुत्वाशो। सहङ्कसि। दिवो
१ र १ २ १ २ २ ४ ५
विश्वाः। अनुप्रा२३भूः। समात्सूपत्वा३। हवोवा।
४ ५ २ १ २र १र २
माप्रचोई३वायि ॥(२) समत्सूवा। ग्निमवते। वाजयन्तः
र २ १र २ १ ४ ५ ४
हवामार२३वायि। वाजायिषू३वा३यि। चरोवा। धा
५
५सोई३वायि(३) ॥ १७ * ॥ [१] १२

अथ द्वितीय-तृचे—

प्रथमा।

१ २ २ १ २ २ १ २ २ १ २
त्वमिन्द्राभरसोजौनृम्णाम्शतक्रतोविचर्षणे।
२ ३ १ २ ३ १२
आवीरम्पृतनासहम् ॥ १ † ॥

* ऊ० गा० ४प्र० १ख० १७गा०।

† ऋ० खा० ५, ६, २, ७ (१भा० ८२४पृ०) = ऋ० वे० ४, २, १०, १।

हे "शतक्रतो" बहुकर्मन् ! "विचर्षणे" विद्रष्टः इन्द्र ! त्वं "नः" अस्मभ्यम् "ओजः" बलं "तृष्णं" धनं च "आ भर" आहर। "वीरं" वीर्य्योपेतम् "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" याचामह इति शेषः ॥

"आभरओजः"-आवतामोजः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र ३ १ २ ३ २ ३ १ २ ३ १ २
त्वꣳहिनःपितावसोत्वम्मातांशतक्रतोबभूविथ ।
१ २ ३ १ २
अथातेसुम्नमीमहे ॥ २ * ॥

हे "वसो" वासयितः ! "शतक्रतो" बहुकर्म्मन्निन्द्र ! त्वं "नः" अस्माकं "पिता" पितृवत् पालको "बभूविथ" भव "त्वं" "माता" मातृवद्धारकश्च बभूविथ। अथ च वयं "ते" तव सम्भूतं "सुम्नं" सुखम् "ईमहे" याचामहे ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ ३ १ २
त्वाꣳशुष्मिन्पुरुहूतवाजयन्तमुपब्रुवेसहस्कृत ।
१ २ ३ १ २
सनोरास्वसुवीर्य्यम् ॥ ३ † ॥ १२

---

* ऋ० म० ४, २, १०, १।

† ऋ० वे० ४, २, १०, २।

Digitized by Google

[ सहसा बलेन स्तोतृभिर्युक्तः कृतः सहस्कृतः ] हे "सहस्कृत" इन्द्र ! [स्तुत्या हि देवताया बलं वर्द्धते, तस्य सम्बोधनम्] —"शुष्मिन्" अतएव बलवन् ! "पुरुहूत" पुरुभिर्बहुभिर्यजमानैराहुतेन्द्र ! "वाजयन्तं" बलमिच्छयन्तं त्वाम "उपब्रुवे" उप स्तौमि । "सः" त्वं "नः" अस्मभ्यं सुवीर्यं धनं "रास्व" देहि ॥

"सहस्कृत"-"शतक्रतो"—इति पाठौ ॥ ३ ॥ १३

॥ औपगवाद्यम् ॥ तुवन्ना३इन्द्रआभरा । ओजोनृम्णꣳशतक्रतोविचर्षणायि । आवौ३ । हौ३ । ऊवा२३यि । रा३४पा । जनासाहाम् ॥(१) तुवꣳहा३यिनः पितावसाउ । त्वम्माताशतक्रतोबभूविथा । अथौ३ । हौ३ । ऊवा२३यि । ता३४यिमू । म्नमीमाहायि ॥(२) तुवाꣳशू३ष्मिन्पुरुहूता । वाजयन्तमुपब्रुवेसहस्कृता । स नौ३ । हौ३ । ऊवा२३यि । रा३४स्वा । सुवीरायाम् । रे । हा२ए३ । हिया३४औहोवा । ए३ । उपा३१२३४५,३) ॥ १८ * ॥ [१] १३

* ऊ० गा० ४प्र० १ख० १८गा० ।

अथ तृतीय-तृचे—

प्रथमा ॥

१ २ ३ १ ३ २ ३ १ २
यदिन्द्र चित्रमेहनास्तित्वादातमद्रिवः ।
२ ३ १ २ २ ३ १ २
राधस्तन्नो विदद्वस उभयाहस्त्याभर ॥ १ * ॥

हे "अद्रिवः" वज्रवन् ! "चित्र" चायनीयेन्द्र ! "त्वादातं त्वया दातव्यं यद्धनं "मे" मम "इह" अस्मिंल्लोके "नास्ति", हे "विदद्वसो" लब्धधनेन्द्र ! "नः" अस्मभ्यम् "उभया हस्ती" उभाभ्यां हस्ताभ्यां तद् "राधः" "आभर" आहर ॥

"मेहह"—"मेहना"—इति छन्दोगानां बह्वृचानां पाठौ ॥१॥

अथ द्वितीया ।

१२ ३२ ३ १ २ ३ १ २ ३ १२ ३२
यन्मन्यसे वरेण्यमिन्द्र द्युक्षन्तदाभर ।
३ २ ३ १ २ ३१२ ३२ ३ १२
विद्याम तस्य ते वयमकूपारस्य दावनः ॥ २ † ॥

हे इन्द्र ! "यत्" "द्युक्षम्" अन्नं "वरेण्यं" वरणीयं "मन्यसे" "तत्" द्युक्षम् "आभर" अस्मभ्यम् । "ते" तव सम्बन्धिनो "वयं"

---

* ऋ० सा० ४, २, १, ४ (१भा० ७०४७०) = ऋ० वे० ४, १, १०, १ ।
† ऋ० वे० ४, २, १०, २ ।

Digitized by Google

"तस्य" तादृशस्योत्कलचणस्य "अकूपारस्य" [ अकुत्सितः पारो अन्तो यस्य तादृशस्यास्य "दावनः" दानस्य "विद्याम" स्याम ॥

"दावनः"-"दावने"—इति पाठौ ॥

अथ तृतीया ।

१ २ १ २ १ २ १ १ २ २ १ २ २ १ २ १

यत्ते दिक्षु प्रराध्यम्मनो अस्ति श्रुतम्बृहत् ।

१ २ ३ १ १ २ १ १ २ २ २ १ १

तेन दृढा चिदद्रिव आ वाजन्दर्षि सातये ॥ ३* ॥ १४

॥ इति चतुर्थः प्रपाठकः ॥

हे इन्द्र! "ते" तव "दिक्षु" "प्रराध्यं" प्रकर्षेण स्तुत्यं "श्रुतं" "बृहत्" महत् यत् "मनः" "अस्ति", "तेन" मनसा हे "अद्रिवः" वज्रवन्निन्द्र! "दृढाचित्" दृढमपि "वाजम्" अन्नम् "आ दर्षि" आदारयसि, "सातये" अस्मत्सम्भजनाय लाभाय वा ॥

"दिक्षु"-"दिशु"—इति पाठौ ॥ ३ ॥ १४

३ ४ ५ २ १ ४ ५

॥ वोऽम् ॥ यद्दिद्रचित्तमइ । हना२ । आस्ती ।

१र र र १ १ १

त्वादातमद्रिवः । राधस्तार३न्ना: । वोवी२ । ददसा

२ १ १ १

उ । उभया२३स्ता । स्तायार३ । भा२३रा३४३ ॥(१)

* ऋ० वे० ४, २, १०, ३।



Digitized by Google

यन्मन्यसेवरे । णियाइम् । मायिन्द्रा । द्यु त्वन्तदाभ
र । विद्यामा२३ता । स्याम्या२ । तेवयाम् । अकूपा
२३रा । स्यादार३ । वा२३ना३४३ः ॥(२) यत्तेदि सुप्र
रा । धियाइम् । मामाः । मस्तिश्रुतम्बृहत् । तेनदा
२३ढी । चायिवा२यित् । मद्रिवाः । मावाजा२३दा ।
मायिसा २ ३ । ता २ ३ या ३४ ३ यि । औ२३४ ५ ई ।
डा(३) ॥ १८* ॥ [१]

॥ वसिष्ठप्रियम् ॥ यदिन्द्रा२३ । चित्रमइह । ना
स्ती । त्वादा३तामद्रायिवो२ । राधास्तन्नो३ । विदा
२द्धा२३४साउ । ऊभाओ२३४वा । याहाओ२३४वा ।
स्तियापूभरा ॥(१) यन्मन्या२३ । सेवरेणिम् । मायिन्द्रा ।
द्युत्ता३न्तादा१भारा२ । विद्यामता३ । स्यता२यिवा२३

* छ० आ० ४प्र० १ख० १८आ० ।

५ १ १ २ ५ १ १ २ ५ ४
४याम् । आकाओ२३४वा । पाराओ२३४वा । अदा

२ १र ४ ५र ४ ५
५नाः ॥(२) यत्तेदौ२३ । सुप्राधियम् । मानाः ।

२ १ ० २ १ २ १ १
मस्तौ३भूतम्बृधा२त् । तेनाहढा३ । चिदा२द्रा२३४यि

५ १ २ १ ५ १ १ २ ५ ४
वाः । भावाओ२३४वा । जान्दाओ२३४वा । षिसा५त

यायि । हो५ई । डा(३) ॥ १८ * ॥ [२] १४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य अष्टमस्याध्यायस्य
षष्ठः खण्डः † ॥ ६ ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ८ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण
विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे अष्टमोऽध्यायः ‡ ॥ ८ ॥

---

* ऊ॰ गा॰ १३प्र॰ २अ॰ १९गा॰ ।

† 'समाप्तश्चैतत्खण्डमष्टमः'—इति वि॰ ।

‡ 'चतुर्थः प्रपाठकः परिसमाप्तः'—इति वि॰ मूलपुस्तकादिसम्मतञ्चेतिदम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ९ ॥

## ॥ अथ नवमोऽध्याय आरभ्यते * ॥

तत्र,

शिशुञ्जज्ञानमिति प्रथम-खण्डे† तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १   २ ३ १ २
शिशुञ्जज्ञानꣳहर्य्यतम्मृजन्ति
३ २   ३ १२ ३ १ २ ३ १ २
शुम्भन्तिविप्रम्मरुतोगणेन ।
३ २ ३ १र   २   ३ १र
कविर्गीर्भिष्काव्येन‡कविःसंसत्
२र ३ २ ३ १ २   ३ १ २
सोमःपवित्रमत्येतिरेभन् ॥ १ ¶ ॥

"शिशुम्" इदानीमुत्पन्नत्वाच्छिशुवत्तिष्ठन्तम्§ [यद्वा, पापान्वित मकुर्व्वन्तं विनाशयन्तम्] "जज्ञानम्" प्रादुर्भूतम्|| अतएव

---

* 'इदानीमष्टमप्रपाठकमारभ्य मुच्यते'—इति वि० ।

† "गायत्र-प्रभृति-साम्नां माधवेनार्षेयमुक्तम्'—इति वि० ।

‡ "गोभिः काव्येन"—इति विसर्गमध्यपाठः ख० मु० पु० ।

¶ ऋ० वे० ७, ४, ९, १ ।

§ 'शिशुं—शंसनीयम्'—इति वि० ।

|| 'जज्ञानं—जायमानम्'—इति वि० ।

Digitized by Google

"ऋर्षतं" [ ऋषी गतिकान्त्योः ( भ्वा० प० ) ] । भृमृदृशी-त्यादिना अतच्। सर्वैः काम्यमानं सोमं "मृजन्ति" मरुतः* शोधयन्ति किञ्च "विप्रं" मेधाविनं सोमं "गणे न" आत्मीयेन† समसङ्ख्याकेन "शुम्भन्ति" अलङ्कुर्वन्ति‡ । ततः "कविः" क्रान्त-प्रज्ञः सोमः "काव्येन" कवि-कर्म्मणैव "कविः" शब्दयितव्यः सन् शब्दायमानः "गीर्भिः" स्तुतिभिः सह "पवित्रम्" "अत्येति" अतीत्य गच्छति ॥

"विप्रम्"—इति छन्दोगाः, "वह्निम्"—इति बह्वृचाः पठन्ति॥१॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ ३ २
ऋषिमनायऋषिकृत्स्वर्षाः
३ १ २ ३ १ २ ३ २
सहस्रनीथःपदवीष्कवीनाम् ¶ ।
३ २ ३ १ २ ३ १र २र ३
तृतीयन्धाममहिषःसिषास
१ २ ३ २ ३ १ २ ३ १
न्त्सोमोविराजमनुराजतिष्टुप् ॥ २ § ॥

"ऋषिमनाः" सर्व्वदर्शनशीलमनस्कः, अतएव "ऋषिकृत्" सर्वस्य दर्शनकर्त्ता प्रकाशनस्य कर्त्ता "स्वर्षाः" सर्वस्य सूर्य्यस्य वा

* 'मरुतः—आदित्यरश्मयः'—इति वि० ।

† 'गणेन—सम्पातेन'—इति वि० ।

‡ 'शुम्भन्ति—पावयन्ति'—इति वि० ।

¶ "पदवीः कवीनाम्"—इति विसर्गमध्यपाठः ख० मु० पाठः ।

§ ऋ० वे० ७, ४, ८, २ ।

Digitized by Google

सम्भक्ताः "सहस्रनीथः" [ नीथा स्तुतिः ] बहुविध-स्तुतिकः "कवीनां" क्रान्त-प्रज्ञानां मध्ये "पदवीः" स्खलितानां पदानां साधुत्वेन संयोजयिता यः सोमो विद्यते स "महिषः" महान् पूज्यो वा सोमः "तृतीयं धाम" द्युलोकं "सिषासन्" सम्भक्तुमिच्छन् "स्तुप्" स्तूयमानः सन् "विराजं" विशेषेण राजन्तं दीप्यमान मिन्द्रम् "अनुराजति" प्रकाशयति ॥ २ ॥

अथ तृतीया।

२ २२ १ २३१ २ १ २
चमूषच्छ्येनः शकुनोविभृत्वा

३२ ३१र २र ३ १२
गोविन्दुर्द्रप्सआयुधानिविभ्रत्।

३१ ३ १र २र ३२
अपामूर्मिंसचमानःसमुद्र

३ २ ३१ २ ३१ २
न्तुरीयन्धाममहिषोविवक्ति॥ ३ * ॥ १

"चमूषत्" चमन्ति भक्षयन्त्यत्रेति चम्वश्चमसास्तेषु सीदन्† यद्वा, चम्वौ अधिषवणफलके तयोर्वर्त्तमानः "श्येनः" शंसनीयः "शकुनः" शक्तः सामर्थ्यकारी "विभृत्वा" [ हरतेरातोमनिन्क्वनिब्वनिपश्चे-त्यादिना (३, २, ७४) क्वनिप् ] पात्रेषु विहरणशीलः

* ऋ० वे० ७, ४, ९, ४।

† 'चमूषत्— * * *। अथवा चमूम् सेनाम् सीदति'—इति वि०।

"गोविन्दुः" यजमानानां गवां लम्भकः* [विन्दुरिच्छुरिति उ-प्रत्ययान्तत्वेन निपातितः] "द्रप्सः" धारयन् † "अपाम्" उदकानाम् "ऊर्मिं" प्रेरकं "समुद्रम्" [अन्तरिक्षनामैतत् (निघ० १, ३)] अन्तरिक्षं "सचमानः" सेवमानः "महिषः" महान् य एवं विधः सोमः स "तुरीयं" चतुर्थं धाम चान्द्रमसं स्थानं‡ "विवक्ति" सेवते सूर्य्यलोकस्योपरि चन्द्रमलोको विद्यत इति यमः पृथिव्या अधिपतिः समावत्वित्यादिभिश्चन्द्रमानचत्रा-णामधिपतिः सद्यमत्वेचित्यन्तैर्मन्त्रैर्गीयते ॥ ३ ॥ १

॥ पार्थम् ॥ ओ२हो२होयि। अिप्सुञ्जग्मा। ना२ए। ह्यथं। तम्मृजन्तायि। प्रुभन्तिवायि। प्रा२मरु। तो गणेना। कविगीर्भायिः। का२वियै। नाकविस्सान्। सोमःपवायि। चा२मति। आ२३४३यि। ती२रापुयि भा६५६न् ॥(१) ऋषिमनाः। या२ऋषि। कृत्स्वर्षाः। सहस्रनायि। या२ःपद। वीःकवीनाम्। तृतीयन्धा।

---

* 'गोविन्दः—गावः उदकं वाक् पृथिवी चादित्यरश्मयो वा। एतानि यो विन्दति स गोवित्। विद्ज्ञाने विद्लाभे विद्सत्तायाम्'—इति वि०।

† 'द्रप्सः—उदकसम्भिन्नः'—इति वि०।

‡ 'तुरीयं धाम— * * * द्रोणकलशम्'—इति वि०।

"एषः" सोमः, "वाजी" वेजन-शीलः, "हितः" अध्वर्युणा पात्रे निहितः धृतः, "विश्ववित्" सर्वज्ञः, "मनसः" स्तोत्रस्य "पतिः" स्वामी [ अथवा सोमस्य मनोऽभिमानित्वात् मनसः स्वामित्वम्, "चन्द्रमा मनो भूत्वा हृदयं वा विशत्"—इति श्रुतेः ; तादृशोऽसौ ] "अव्यं वारं" अवि-सम्बन्धिनं वालं दशापवित्रं "वि धावति" विविधं गच्छति ॥

"अव्यम्"-"अव्ये"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

२ ३ १ २ ३ १ २ ३ १ ३ १ २
एषपवित्रेअक्षरत्सोमोदेवेभ्यःसुतः ।
२ ३ १ २ ३ २
विश्वाधामान्याविशन् ॥ २ * ॥

"एषः" सोमः "देवेभ्यः" देवार्थं "सुतः" अभिषुतः सन् पवित्रे "अक्षरन्" स्रवन् "विश्वा" सर्वाणि "धामानि" देव-शरीराणि "आ विशन्" प्रविशन् प्रवेष्टुमित्यर्थः ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
एषदेवःशुभायतेधियोनावममर्त्यः ।
३ १ २ ३ १ २
वृत्रहादेववीतमः ॥ ३ † ॥

---

* ऋ० वे० ६, ८, १८, २।
† ऋ० वे० ६, ८, १८ ३।

"एषः" सोमः "देवः" "शुभायते"*। कुत्र? "अधियोनौ" स्वीये स्थाने†। कीदृशएषः? "अमर्त्यः" अमरणधर्म्मा "वृत्रहा" शत्रु-हन्ता "देववीतमः" अतिशयेन देवानां कामयिता‡॥ ३॥

अथ चतुर्थी।

१ २उ ३ १ २ ३ १ २ ३ १ २ ३ १ २
एषवृषाकनिक्रदद्दशभिर्ज्जामिभिर्यतः।
२ १ २र
अभिद्रोणानिधावति॥ ४ ¶॥

"वृषा" कामानां वर्षिता "एषः" सोमः "कनिक्रदत्" शब्दं कुर्व्वन् "दशभिः" "जामिभिः" अङ्गुलिभिः "यतः" धृतः§ "द्रोणानि" द्रुममयानि पात्राणि "अभि धावति" अभिगच्छति॥ ४॥

अथ पञ्चमी।

२ १ २र ३ १ २ ३ १ २ १ २
एषसूर्य्यमरोचयत्पवमानोअधिद्यवि।
३ १ २ ३ १२ २र
पवित्रेमत्सरोमदः॥ ५ ‖॥

---

* 'शुभायते—शुभं करोति'—इति वि०।

† 'अधियोनौ—योनिर्द्रोणकलशः'—इति वि०।

‡ 'देववीतमः—देवानां भक्षतमः, अथवा'—इत्यादि वि०।

¶ ऋ० वे० ६, ८, १८, ४।

§ 'जामिभिः—जामयो भगिन्यः अङ्गुल्यः ताभिर्यतः संयतः बद्ध इत्यर्थः—इति वि०।

‖ ऋ० वे० ६, ८, १८, ५।

"पवमानः" पूयमानः "एषः" सोमः "अधि दवि" द्युलोके स्थितं "सूर्य्यं" "रोचयत्" रोचयति। कीदृशः? "पवित्रे" स्वयं दशापवित्रे स्थितः, "मत्सरः" मद-हेतु प्रासः, "मदः" हृष्टः॥

"अधिद्यवि। पवित्रेमत्सरोमदः"—"विचर्षणि। विश्वा धामानिविश्ववित्"—इति पाठौ॥ ५॥

अथ षष्ठी।

११ २र ३ १ २ ३ १ २
एषसूर्य्येणहासतेसंवसानोविवस्वता।
१ २ ३ १र २र
पतिर्वाचोअदाभ्यः॥ ६ *॥ ५

"एषः" सोमः "संवसानः" सर्वमप्याच्छादयन् "विवस्वता" दीप्तिमता† "सूर्येण" "हासते" परित्यज्यते पवित्रइति शेषः। कीदृशः? "वाचः" स्तुति-लक्षणायाः "पतिः" पालकः स्वामी वा‡ "अदाभ्यः" केनाप्यहिंस्यः॥ ६॥ ५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य चतुर्थः खण्डः॥ ४॥

---

* ऋ० वे० ६, ८, १०, ५।

† 'विवस्वता—स्वकीयेन तेजसा'—इति वि०।

‡ 'पतिर्वाचः—लौकिकाः वैदिकाश्च, तासां स्वामी'—इति वि०।

Digitized by Google

अथ पञ्चम-खण्डे—

एषकविरिति षड्‌चं सूक्तम्,—

तत्र प्रथमा ।

२ ३ १ २ ३ १ २   ३ १ ३ १ २
एषकविरभिष्टुतःपवित्रेअधितोशते ।
३ २उ ३ १ २
पुनानोघ्नन्नपद्विषः ॥ १ * ॥

"एषः" सोमः "कविः" मेधावी "अभिष्टुतः" अभितःस्तुतः† "पवित्रे अधि" दशापवित्रे अधि दशापवित्रमतीत्य "तोशते" [यद्यपि तोशतिर्वधकर्मा तथाहि हनने गति-सद्भावात् अत्र गतिमात्रे वर्त्तते] गच्छतीत्यर्थः‡ [अथवा "पवित्रे अधि" कृष्णाजिने "तोशते" हन्यते पीड्यत इत्यर्थः] किङ्कुर्वन्? "पुनानः" पूयमानः "द्विषः" शत्रून् "अपघ्नन्" अपगमयन ॥

"द्विषः"-"स्रिधः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ ३२ ३ १ २ ३ १२ ३२
एषइन्द्रायवायवेस्वर्जित्परिषिच्यते ।
३ १ २ ३ १ २
पवित्रेदक्षसाधनः ॥ २ ¶ ॥

---

* ऋ० वे० ६, ८, १७, १ ।

† 'स्तोतृभिः'—इति वि० ।

‡ 'तोशते—तुशी दीप्तौ दीप्यते'—इति वि० ।

¶ ऋ० वे० ६, ८, १७, २ ।

"एषः" सोमः "स्वर्जित्" स्वर्गस्य सर्वस्य वा जेता "इन्द्राय" "वायवे" च "पवित्रे" "परिषिच्यते" परिस्राव्यते। कीदृशएषः? "दक्षसाधनः" बलकारी ॥ २ ॥

अथ तृतीया।

१ २३ २ १ २ ३ २ ३ १र २र ३ २
एषनृभिर्विनीयतेदिवोमूर्द्धावृषासुतः।
३ २ ३ १ २ ३ २
सोमोवनेषुविश्ववित् ॥ ३ * ॥

"एषः" सोमः "नृभिः" कर्म-नेतृभिः ऋत्विग्भिः "विनीयते" विविधं नीयते। कीदृशः? "दिवः" द्युलोकस्य "मूर्द्धा" शिरोवत् प्रधानभूतः "वृषा" अभिमत-वर्षकः "सुतः" अभिषुतः। कुत्र नीयते? "वनेषु" वननीयेषु पात्रेषु वन-सम्भूत-द्रुम-विकारेषु वा पात्रेषु† "विश्ववित्" सर्वज्ञ एष इति समन्वयः ॥ ३ ॥

अथ चतुर्थी।

३ १ २ ३ १ २ ३ १ २ १ २
एषगव्युरचिक्रदत्पवमानोहिरण्ययुः।
१ १ ३ १र २र
इन्दुःसत्राजिदस्तृतः ॥ ४ ‡ ॥

"एषः" सोमः "पवमानः" पूयमानः "अचिक्रदत्" शब्दं करोति। कथम्भूतः सन्? "गव्युः" अस्माकं गा इच्छन्

---

* ऋ० वे० ६, ८, १७, ३।

† 'वनेषु—उदकेषु'—इति वि०।

‡ ऋ० वे० ६, ८, १७, ४।

"हिरण्ययुः" हिरण्यानीच्छन् "इन्दुः" दीप्तः सन्, "सत्राजित्" महतः शत्रोरसुरादेर्जेता, * "अस्तृतः" स्वयमन्यैरहिंस्यश्च सन् ॥ ४ ॥

अथ पञ्चमी।

२ २ ३क २र ३ १ २ ३ २ ३ १ २

एष शुष्म्यसिष्यददन्तरिक्षे वृषा हरिः।

३ १उ ३ २ ३ १

पुनान इन्दुरिन्द्रमा ॥ ५ † ॥

"शुष्मी" बलवान् सोमः "अन्तरिक्षे" दशापवित्रे "असिष्यदत्" स्यन्दते‡। कीदृशएषः ? "वृषा" वर्षकः, "हरिः" हरितवर्णः,"पुनानः" पूयमानः, "इन्दुः" दीप्तः, सएव "इन्द्रम्" इन्द्रञ्चापि ; गच्छतीति शेषः। "आ"—इति चार्थे¶ ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ ३ १ २

एष शुष्म्यदाभ्यः सोमः पुनानो अर्षति।

३ १ २ ३ २

देवावीरघशंसहा ॥ ६ § ॥ ६

"एषः" सोमः "शुष्मी" बलवान् "अदाभ्यः" अदम्भनीयः अहिंसनीयः "पुनानः" पूयमानः "अर्षति" गच्छति "देवावीः"

* 'सत्राजित्—सहसा जेता अथवा सत्राजित्—सदाजित्'—इति वि०।

† ऋ० वे० ६, ८, १७, ६।

‡ 'असिष्यदत्—सीदति'—इति वि०।

¶ 'आ—आनुपूर्व्येण'—इति वि०।

§ ऋ० वे० ६, ८, १८, ६।



Digitized by Google

देवानामविता* "अघशंसहा" अघान् शंसन्तीत्यघशंसाः तेषां वा हन्ता† ॥ ६ ॥ ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

सस्तुतःपीतयइति षड्चं सूक्तम्,

तत्र प्रथमा।

१ २ १ ३ १ ३ २ ३ १र १ ३ १ २
सस्तुतःपीतयेवृषासोमःपवित्रेअर्षति।

१ १र १र ३ १
विघ्नन्रक्षांसिदेवयुः ॥ १ ‡ ॥

"सः" सोमः "पीतये" इन्द्रादिपानाय "सुतः" अभिषुतः "वृषा" वर्षणः सन् "पवित्रे" "अर्षति" गच्छति। किङ्कुर्वन्? "रक्षांसि" "निघ्नन्"। "देवयुः" देवकामः। स इत्यन्वयः ॥ १ ॥

---

* 'देवावीः—देवानां भक्षभूतः'—इति वि०।

† 'अघं पापं यः शंसति सः अघशंसः, तस्य हन्ता'—इति वि०।

‡ ऋ० वे० ६, ८, २७, १।

Digitized by Google

अथ द्वितीया ।

१ २ १ २　　३ १२ १२　　२ १
सपवित्रेविचक्षणोहरिरर्षतिधर्णसिः ।
१ २उ　१ १ १
अभियोनिङ्कनिक्रदत् ॥ २ * ॥

"सः" सोमः "विचक्षणः" [पश्यति-कर्मैतत् (निघ० ३, ११,३)] सर्वस्य द्रष्टा "हरिः" हरितवर्णः सोमः "धर्णसिः" सर्वस्य धारकः "पवित्रे" "अर्षति" गच्छति, पश्चात् "कनिक्रदत्" शब्दं कुर्वन् "योनिं" स्थानं द्रोणकलशम् "अभि" गच्छति † ॥ २ ॥

अथ तृतीया ।

१ ३　१ २　१२ ३ १२ १२　३ १२
सवाजीरोचनन्दिवःपवमानोविधावति ।
३　१२　१२ ३ १ २
रक्षोहावारमव्ययम् ॥ ३ ‡ ॥

"सः" "वाजी" वेजनवान् ¶ अश्व-स्थानीयः "दिवः" "रोचनं" रोचकः "पवमानः" पूयमानः "विधावति" । कीदृशः? "रक्षोहाः" रक्षसां हन्ता, "अव्ययं वारं" दशापवित्रम् अतीत्य विधावति विविधं गच्छति ॥

"रोचनं"-"रोचना"—इति पाठौ ॥ ३ ॥

---

* ऋ० वे० ६,८,१०,२ ।

† अभीत्युपसर्गश्रुत्या क्रियापदाहतिः ।

‡ ऋ० वे० ६, ८, १०, ३ ।

¶ 'वाजी—बलवान्'—इति वि० ।

Digitized by Google

अथ चतुर्थी।

१ २ ३उ २ १ २ ३ १ २
सत्रितस्याधिसानविपवमानोअरोचयत्।
२ १ ३ १ २ ३ २
जामिभिःसूर्यꣳसह ॥ ४ * ॥

"सः" सोमः "त्रितस्य" महर्षेः "अधिसानवि" समुच्छ्रिते यज्ञे† [ अधीति सप्तम्यर्थानुवादी ] "पवमानः" पूयमानः "जामिभिः" प्रहर्त्तैः बन्धुभूतैर्वा सुतेजोभिः ‡ "सह" सहितः सन् "सूर्य्यम्" "अरोचयत्" प्रकाशितवान् ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १र २र ३ १ २ ३ १ २र
सवृत्रहावृषासुतोवरिवोविददाभ्यः।
२ ३ १ २
सोमोवाजमिवासरत् ॥ ५ ¶ ॥

"सः" सोमः "वृत्रहा" शत्रूणां हन्ता "वृषा" वर्षकः "सुतः" अभिषुतः "वरिवोवित्" § यष्टुर्धनस्य लम्भकः "अदाभ्यः"

---

* ऋ० वे० ६, ८, २७, ४।

† 'त्रितस्याधिसानवि—त्रितस्यार्थे, अधिसानवि प्र‌ुवे स्थाने'—इति वि०।

‡ 'जामिभिः—भगिनीभिः'—इति वि०।

¶ ऋ० वे० ६, ८, २७, ५।

§ 'वरिवोभजः'—इति वि०।

Digitized by Google

अन्यैरहिंसनीयः; एवङ्गुणः सन् "वाजमिव" सङ्ग्राममश्वइव * "असरत्" गच्छति कलशम् ॥ ५ ॥

अथ षष्ठी ।

१ २ १  २ १ २ ३ १  १२  १२
स देवः कविनेषितोऽभिद्रोणानिधावति ।
२ ३ १ २  ३  १२
इन्दुरिन्द्रायमंहयन् ॥ ६ † ॥ ७

"सः" सोमः "देवः" "इन्दुः" क्लिद्यमानः "कविना" आक्रान्त-प्रज्ञेनाध्वर्युणा ‡ "इषितः" प्रेरितः ¶ सन् "द्रोणानि" द्रोण-कलशान् § "अभि धावति" अभिगच्छति । किङ्कुर्वन्? "इन्द्राय" इन्द्रं "मंहयन्" स्वकीय-रसेन पूजयन् ॥

"मंहयन्"-"मंहना"—इति पाठौ ॥ ६ ॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

* 'वाजम्—अन्नम्, इव असरत्'—इति वि० ।

† ऋ० वे० ६, ८, २७, ६ ।

‡ 'कविना—ब्रह्मणा'—इति वि० ।

¶ 'इषितः—क्षिप्तः'—इति वि० ।

§ 'द्रोणानि—द्रोण-कलश-सम्बन्धानि पात्राणि'—इति वि० ।

Digitized by Google

अथ सप्तम-खण्डे—

यःपावमानीरिति षड्चं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३१र ३र ३ १ २३ १ २
यःपावमानीरध्येत्यृषिभिःसम्भृतꣳरसम्।

२३ ३ २ ३ १ २ ३ १ २ ३ १ २
सर्वꣳसपूतमश्नातिस्वदितम्मातरिश्वना॥ १ *॥

"यः" जनः "पावमानीः पवमान-देवताकाः† सर्वा ऋचः तद्रूपं "ऋषिभिः" सूक्तद्रष्टृभिः मधुच्छन्दःप्रभृतिभिः "सम्भृतं" सम्पादितं "रसं" वेदसारभूतं ‡ पावमानं सूक्तसङ्घं यः "अध्येति,"¶ "सः" जनः "सर्वं" भोज्यजातं "पूतं" परिशुद्धमेव "अश्नाति" भक्षयति § कथमस्य पूतत्वम्? तत्राह—स्वस्वादनात् प्रागेव "मातरिश्वना" [मातरि अन्तरिक्षे श्वसितीति मातरिश्वा वायुः, स च पवित्रमेव] पवित्रेण वायुना "स्वदितं" स्वादूकृतं परिपूतमेवान्नं पश्चात् स नरोऽश्नाति॥ १॥

* ऋ० वे० ७, २, १८, ६।

† 'पावमान्यश्च या सोमदेवत्याः ऋचः विश्वपि पवमानेषु, ताश्चाभिष्टिः साम्प्रतं आख्यायते—यः पावमानीरध्येतीति'—इति वि०।

‡ 'रसं—वीर्यम्'—इति वि०।

¶ 'यः अध्येति तस्य किं फलं भवति? सर्वं सः पूतम् अश्नाति, यत् किञ्चित् खादति तत् पूतं भवति'—इति वि०।

§ 'अध्ययनकाल आर्षच्छन्दोदैवतब्राह्मणैः सहितं परिज्ञानं प्रशस्यते'—इति वि०।

अथ द्वितीया ।

२ २उ ३ १२ ३२ ३ १ २ ३ १ २
पावमानीर्योअध्येत्यृषिभिःसम्भृतꣳरसम् ।
१ ३ १ २ ३ २ ३ १२ ३२ ३ २
तस्मैसरस्वतीदुहेक्षीरꣳसर्पिर्मधूदकम् ॥ २ * ॥

"यः" ब्राह्मणः "पावमानीः" पवमान-देवताका ऋचः "ऋषिभिः" मधुच्छन्दःप्रभृतिभिर्मन्त्रद्रष्टृभिः "सम्भृतं रसं" वेद-सारं सूक्तसङ्घम् "अध्येति" अधीते, "तस्मै" पवमानाध्ययनं कुर्वते जनाय "सरस्वती" सर्वत्र सरणवती वाग्देवता † "क्षीरं" यज्ञ-साधनं पयः, "सर्पिः"तादृशं घृतं "मधु" मदकरम् "उदकं" सोमं "दुहे" स्वयमेव दुग्धे यागादि-पर-वेदशास्त्रं विदं करोतीत्यर्थः ‡ [दुह प्रपूरणे ( अदा० प० ) कर्मकर्त्तरि "न दुह-स्नु-नमाम् ( ३, १, ८९ )"—इत्यादिना यकः प्रतिषेधः, "लोपस्त आत्मनेपदेषु (७, १, ४१ )"—इति त-लोपः ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ २ ३ १२ ३ १ २
पावमानीःस्वस्त्ययनीःसुदुघाहिघृतश्चुतः ।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २
ऋषिभिस्सम्भृतोरसोब्राह्मणेष्वमृतꣳहितम् ॥ ३¶ ॥

---

* ऋ० वे० ७, २, १८, ७ ।

† 'सरस्वती—वायुपा'—इति वि० ।

‡ 'क्षीरं, सर्पिः, मधु, उदकम्—एतानि रसवन्ति द्रव्याणि तस्य सम्पद्यन्ते'—इति वि० ।

¶ ऋ० वे० ७, २, ५, १ ।

Digitized by Google

याः पावमान्य ऋचः ताः "स्वस्त्ययनीः" क्षेम-प्रापिकाः "सुदुघाः" सुष्ठु फलं दुहानाः "घृतश्चुतः" * [घृतं श्चोतन्ति क्षारयन्तीति घृतश्चुतः ईदृग्भूताः] अस्माननुगृह्णन्त्विति शेषः। "ऋषिभिः" मन्त्र-दर्शिभिर्मुनिभिः "रसः" फलसारः "सम्भृतः" अस्मासु सम्पादितः "ब्राह्मणेषु" ब्रह्माणो मन्त्राः तत्पाठकाः ब्राह्मणाः, तेष्वस्मासु † "अमृतम्" अविनाश-बलं "हितं" सम्पादितम् ॥ ३ ॥

अथ चतुर्थी।

२ १ २ ३ १ ३ १र २र ३ २
पावमानीर्दधन्तु न इमं लोकमथो अमुम्।
२ ३ १ २ १ २ ३२ ३ १ २
कामान्त्समर्द्धयन्तु नो देवीर्देवैः समाहृताः ॥ ४ ‡ ॥

"देवैः" इन्द्रादिभिः "समाहृताः" सम्पादिताः "पावमानीः देवीः" पवमान-मन्त्राभिमानिनी देव्यः "नः" अस्माकम् "इमम्" ईदृग्भूतं "लोकं" भूलोकम् "अथो" अपि च "अमुं" स्वर्गलोकं "दधन्तु" प्रयच्छन्तु। तत्रत्यान् "कामान्" च "नः" अस्मदर्थं "समर्द्धयन्तु" समृद्धान् कुर्वन्तु ॥ ४ ॥

* 'घृतश्चुतः—घृतश्राविणः, अथवा घृतमुदकं तत् श्रवन्ति, कामवर्षी पर्जन्यो भवति'—इति वि०।

† 'ब्राह्मणेषु—अधिकरणभूतेषु'—इति वि०।

‡ ऋ० वे० ७, २, ५, २।

अथ पञ्चमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
येनदेवाःपवित्रेणात्मानम्पुनतेसदा।

१ २ ३ १ २ ३ १ २
तेनसहस्रधारेणपावमानीःपुनन्तुनः॥ ५ *॥

"देवाः" इन्द्राद्याः "येन" पवित्रेण शुद्धि-साधनेन "सदा" "आत्मानं" स्व-देहं पुनते शोधयन्ति, "सहस्रधारेण" सहस्रावान्तर-भेद-युक्तेन "तेन" साधनेन "पावमानीः" पावमान्य ऋचः "नः" अस्मान् "पुनन्तु" ॥ ५ ॥

अथ षष्ठी।

३ २ ३ १ २ ३ १ २ ३ १
पावमानीःस्वस्त्ययनीस्ताभिर्गच्छतिनान्दनम्।

१ २ ३ १ २ ३ १ १
पुण्यांश्चभक्षान्भक्षयत्यमृतत्वञ्चगच्छति॥ ६ † ॥ ८

"पावमानीः" पवमानः पावकः पूयमानो वा सोमः, तत्सम्बन्धिन्यस्तद्देवताका ऋचः पावमान्यस्ताः "स्वस्त्ययनीः" स्वस्तीत्यविनाश-नाम, तथाविध-फलस्य प्रापयित्र्यः, "ताभिः" उक्त-लक्षणाभिः पावमानीभिः, तत्पाठेन स्तोता "नान्दनं" ‡ नन्द-

• ऋ० वे० ७, २, ५, ३।

† ऋ० वे० ७, २, ५, १६।

‡ 'नान्दनं—पुत्र-वस्तु-धन-धान्यादिभिः'—इति वि०।

यति सुकृतिन इति नन्दनः स्वर्गः स एव नान्दनः [स्वार्थिकस्त-द्धित-प्रत्ययः] तम् "गच्छति" प्राप्नोति । किञ्चेह लोके "पुण्यान्"* सुकृत-सम्पादितान् "भक्षान्" भक्षणीयान् भोगान् अन्न-पानादि-लक्षणान् "च" भक्षयति । किञ्च "अमृतत्वं च गच्छति" अमृतत्वं नाम सोमस्तच्च प्राप्नोति ॥ ६ ॥ ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य सप्तमः खण्डः† ॥ ७ ॥

---

अथाष्टमे खण्डे‡—

अगन्मेति-तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २   ३ १र   २र ३ १ २ ३
अगन्ममहानमसायविष्ठं
२ ३ २ ३ १ २ ३ १ २ ३ २
योदीदायसमिद्धःस्वेदुरोणे ।

---

* 'पुण्यान्—मन्त्रपूतान् अथवा धानाः करम्भः पुरोडाशः प्रतीवापः पयस्येति अथवा * * *)—इति वि० ।

† 'उक्ताः पावमान्यः, उक्तञ्च वहिष्पवमानं, नवमखण्डः'—इति वि० ।

‡ 'इदानीमाज्यानि भवन्ति'—इति वि० ।

१ २ १ २ १ २ ३ ३ १ २ १ १
चित्रभानुꣳरोदसीअन्तरुर्वी

२ ३ १ २ ३ १ २
स्वाहुतंविश्वतःप्रत्यञ्चम् ॥ १ * ॥

"यः" अग्निः "स्वे दुरोणे" आहवनीयाख्ये स्वे स्थाने "समिद्धः" काष्ठैः सम्यग्दीप्तः सन् "दीदाय" दीप्यते, तमिमं "यविष्ठ" युवतमम् "उर्वी" विस्तीर्णयोः "रोदसी" रोदस्योः द्यावा-पृथिव्योः "अन्तः" मध्ये अन्तरिक्षे "चित्रभानुं" चित्रकालं "स्वाहुतं" सुष्ठु आहुतिभिर्हुतं सन्तं "विश्वतः" सर्वतः "प्रत्यञ्चं" प्रतिगच्छन्तमग्निं "महा" महता "नमसा" नमस्कारेण "अगन्म" वयमुपगच्छामः ॥ १ ॥

अथ द्वितीया ।

१ २ १र २र ३ १ २ ३ १
समह्नाविश्वादुरितानिसाह्वा

३ १ २ ३ २ ३ २ ३ १ २
नग्निष्टवेदमआजातवेदाः ।

१ २ ३ १ २ ३ २
सनोरक्षिषद्दुरितादवद्या

३ १ २ ३ १ ३ १ २ ३ १ २
दस्मान्गृणतउतनोमघोनः ॥ २ † ॥

* ऋ० वे० ५, २, १५, १ ।

† ऋ० वे० ५, २, १५, २ ।

यः "अग्निः" "मह्ना" महत्वेन "विश्वा" विश्वानि "दुरिता" दुरितानि "साह्वान्" अभिभवन् "जातवेदाः" जात-धनः जात-प्रज्ञो वा "दमे" यज्ञगृहे "स्तवे" अस्माभिः स्तूयते, "सः" अग्निः "गृणतः" स्तुवतः "नः" अस्मान् "दुरितात्" पापात् "अवद्यात्" निन्दिताच्च कर्मणः "रक्षिषत्" रक्षतु। "उत" अपिच "मघोनः" हविष्मतः "नः" अस्मान् रक्षतु ॥ २ ॥

अथ तृतीया।

१ २र ३ २ ३ १ ३ २ १
त्वंवरुणउतमित्रोअग्नेत्वां

२ ३ १ २ १ २
वर्द्धन्तिमतिभिर्वसिष्ठाः।

१र २र ३ १ २ ३ १
त्वेवसु*सुषणनानिसन्तुयूय

२ ३ २ ३ १ २
म्पातस्वस्तिभिःसदानः ॥ ३ † ॥ ९

हे "अग्ने!" "त्वं" "वरुणः" असि पापानां निवारको भवसि "उत" अपिच "मित्रः" असि, पुण्य-प्रापणे सखा भवसि। "वसिष्ठाः" एतन्नामका ऋषयः हे अग्ने! "त्वां" "मतिभिः" स्तुतिभिः "वर्द्धन्ति" वर्द्धयन्ति "त्वे" त्वयि विद्यमानानि "वसु" वसूनि "सुषणनानि" सुसम्भजनानि "सन्तु"। हे अग्ने! "यूयं"

---

* "वसु"—इति क०-मु०-पुस्तकयोः पाठः।

† ऋ० वे० ५, २, १५, ३।

त्वदाद्याः सर्वे देवाः "स्वस्तिभिः" चेमैः "नः" अस्मान् "सदा" सर्वदा "पात" रक्षत ॥ ३ ॥ ९

अथ तृचात्मके द्वितीय-सूक्ते—

तत्र प्रथमा ।

३ २उ ३ १र २र ३ १ २ ३ १ १
महाᳬइन्द्रोयओजसापर्ज्जन्योवृष्टिमाᳬइव ।

१ २ ३ १ २
स्तोमैर्वत्सस्यवावृधे ॥ १ * ॥

"यः" "इन्द्रः" "ओजसा" बलेन "महान्" सर्वेभ्योऽधिकः। क इव ? "वृष्टिमानिव" यथा वृष्ट्या युक्तः "पर्जन्यः" रसानां प्रार्ज-यिता देवः महान्, स इन्द्रः "वत्सस्य" पुत्र-स्थानीयस्य स्तोतुः वत्स-नाम्न एव वा ऋषेः "स्तोमैः" स्तोत्रैः "वावृधे" प्रवर्धते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ १र २र ३ १ १ २ ३ २ ३ १ २
कण्वाइन्द्रं यदक्रतस्तोमैर्यज्ञस्यसाधनम् ।

३ १ २ ३ १ २
जामिब्रुवतआयुधा ॥ २ † ॥

"कण्वाः" [स्तोतृ-नामैतत् (निघ० ३,१५,७)] स्तोतारः कण्व-गोत्रा वा "इन्द्रं" "स्तोमैः" स्तोत्रैः "यज्ञस्य" यागस्य "साधनं"

---

* ऋ० वे० ५, ८, ९, १ = अ० वे० ७, ४० ।

† ऋ० वे० ५, ८, ९, २ ।

Digitized by Google

साधयितारं निष्पादकं "यद्" यदा "अक्रत" अकृषत [ करोते-र्लुङि "मन्त्रे घसेति (२, ४, ८०) च्लेर्लुक्, तदानीं "आयुधा" शत्रूणां हिंसकानि वाणादीनि "जामि" * [अतिरिक्तनामैतत् ] अतिरिक्तम् अधिकं प्रयोजन-रहितं "ब्रुवते" कथयन्ति। "आयुधा" आयुधस्य सर्वस्य कार्य्यस्येन्द्रेण कृतत्वात् आयुधानि निःप्रयोजना-नीत्यर्थः [ यद्वा, 'आयुधा' आयुधमायोधनशीलमिन्द्रं 'जामि' जामिं भ्रातरं 'ब्रुवते' वदन्ति ॥

"आयुधा"-"आयुधम्"—इति पाठो ॥ २ ॥

अथ तृतीया।

३ २ ३ १ २ ३ १ २ ३ १र २र ३ १ २
प्रजामृतस्यपिप्रतःप्रयद्भरन्तवह्नयः।

१ २ ३ २ ३ १ २
विप्राऋतस्यवाहसा ॥ ३ † ॥ १०

"ऋतस्य" यज्ञस्य सत्यस्य वा "प्रजा" प्रकर्षेण जातमिन्द्रं "पिप्रतः" नभसः प्रदेशान् पूरयन्तः "वह्नयः" वाहका अश्वा "यद्" यदा "प्र भरन्त" प्रकर्षेण भरन्ति वहन्ति तदा "विप्राः" मेधाविनः

---

* 'जामि—जामामि'—इति वि०।

† ऋ० वे० ५, ८, ९, २।

Digitized by Google

स्तोतारः "ऋतस्य" यज्ञस्य "वाहसा" प्रापकेण स्तोत्रेण तम् इन्द्रं स्तुवन्तीति शेषः ॥ ३ ॥ १०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य अष्टमः खण्डः* ॥ ८ ॥

---

अथ नवमे खण्डे†—

पवमानस्येति तृचात्मकं प्रथमं सूक्तम्, ‡

तत्र प्रथमा ।

१२ २ १२३ १२३ १ २

पवमानस्यजिघ्नतोहरेश्चन्द्राअसृक्षत ।

३ १ २ ३१ २

जीराअजिरशोचिषः ॥ १ § ॥

"जिघ्नतः" पुनः पुनः तमांसि विनाशयतः‖ "हरेः" हरितवर्णस्य "अजिरशोचिषः" सर्वत्र-गमन-शील-तेजसः "पव-

---

* 'उक्थान्याज्यानि'—इति वि० ।

† 'इदानीं माध्यन्दिनः पवमानः'—इति वि० ।

‡ 'उत्तराद्याराव्यतप्रभृतीनि सामानि ब्राह्मणोक्तार्थानि'—इति वि० ।

¶ "अजीर"—इति ख० पु० पाठः ।

§ ऋ० वे ७, २, ११, ४ ।

‖ 'जिघ्नतः—घ्नमानस्य'—इति वि० ।

Digitized by Google

मानस्य" "चन्द्राः" [चदि आह्लादे (भ्वा० प०)] देवानामाह्लादयितारः "जीराः" चिप्रं चरण-शीलाः * धाराः "असृचत" सृजन्ति पवित्राविर्गच्छन्तीत्यर्थः ॥

"जिघ्नतः"-"जघ्नतः"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २
पवमानोरथीतमःशुभ्रेभिःशुभ्रशस्तमः।
१ २ ३ १ २
हरिश्चन्द्रोमरुद्गणः ॥ २ † ॥

"पवमानः" देवः "रथीतमः" अतिशयेन रथवान् [ "छन्दसीवनिपौ (८,२,१७ वा०)"—इतीकारः। तथा "शुभ्रेभिः" शोभायुक्तेभ्यस्तेजोभ्योऽपि "शुभ्रशस्तमः" अत्यन्तं दीप्यमानश्च [यद्वा, निर्मलतम-यशोयुक्तः] "हरिश्चन्द्रः" [ "ह्रस्वाच्चन्द्रोत्तरपदे मन्त्रे (६,१,१५१)"—इति सांहितिकः सुट्] हरित-वर्ण-दीप्तिः हरित-धारा-युक्तो वा "मरुद्गणः" मरुतो यस्य गणाः सहाय-भूताः स तथोक्तः तादृशः सोमः सर्वान् स्व-रश्मिभिः व्याप्नोत्वित्युत्तरेण सम्बन्धः ॥ २ ॥

* 'जीराः—जीरणात्मकाः'—इति वि०।
† ऋ० वे० ७, १, १२, १।

अथ तृतीया।

१ २ ३ २र २ १ २ ३ १ २
पवमानव्यश्नुहिरश्मिभिर्वाजसातमः।
१ २ ३ २ ३ १ २
दधत्स्तोत्रेसुवीर्य्यम् ॥ ३ * ॥ ११

हे "पवमान" सोम! त्वं "रश्मिभिः" स्व-दीप्तिभिः "व्यश्नुहि" सर्वं जगद् व्याप्नुहि। कीदृशस्त्वम्? "वाजसातमः" अतिशयेनान्नस्य दाता बलस्य सम्भक्ता वा तथा "स्तोत्रे" पवमानं स्तोत्रं कुर्वते जनाय "सुवीर्य्यं" शोभन-वीर्योपेतं पुत्रं धनं वा "दधत्" विदधत् प्रयच्छत् व्याप्नुहि॥

"पवमानव्यश्नुहि"-"पवमानोव्यश्नवत्"—इति पाठौ॥ ३॥ ११

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा।

२ ३ १ २ ३ २उ २ १ २ ३ २ ३ २
परीतोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः।
३ १र २र ३ २ २उ ३ २ ३ २ ३ १ २
दधन्वाꣳयोनर्यो अप्स्वाऽ३ऽन्तरासुषावसोममद्रिभिः॥१†॥

हे ऋत्विजः! "सुतम्" अभिषुतं सोमम् "इतः" अस्मात् कर्मण ऊर्द्धम् अथवा अस्मात् प्रदेशात् ऊर्द्धं "परिषिञ्चत" वसतीवरीभिः [इतोषिञ्चतेत्यत्र संहितायां छान्दसं रो रुत्वम्, आदेश-

* ऋ० वे० ७, २, १२, २।

† छ० आ० ६, १, ३, २ (२भा० ७७ पृ०) = ऋ० वे० ७, ५, १२, १।



Digitized by Google

प्रत्यययोरिति षत्वम् ] "यः" "सोमः" देवानाम् "उत्तमं" प्रशंस्यं "हविः" भवति "आ" अपिच "नर्य्यः" मनुष्य-हितः यश्च सोमः "अप्सु" वसतीवरीषु अन्तरिक्षे वा "अन्तर्" "दधन्वान्" गच्छन् भवन् भवति तं "सोमम्" "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार ; तं परिषिञ्चतेति समन्वयः ॥ १ ॥

अथ द्वितीया।

२ १ २ २ १ २ ३ १ २ ३ १ १ २ १ २
नूनम्पुनानोविभिःपरिस्रवादब्धःसुरभिन्तरः।

३ १ २३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सुतेचित्त्वाप्सुमदामोअन्धसाश्रीणन्तोगोभिरुत्तरम् ॥२*॥

हे सोम! "अदब्धः" कैश्चिदप्यहिंसितः "सुरभितरः" अत्यन्तं सुगन्धि त्वं "नूनम्" इदानीं "पुनानः" पूयमानः "अविभिः" अवि-वाल-कृतैः पवित्रैः "परिस्रव" परिक्षर "सुते चित्"† अभिषुते सति "अन्धसा" भक्ष-लक्षणेनानेन "गोभिः" गोविकारैः क्षीरादिभिः "श्रीणन्तः" मिश्रयन्तः वयम् "उत्तरम्" उद्गततरम् ‡ "अप्सु" वसतीवरीषु स्थितं "त्वा" त्वां "मदामः" मदामहे ॥ २ ॥

---

* ऋ० वे० ७, ५, १९, २।

† 'चित्—इति पदपूरणः'—इति वि०।

‡ 'उत्तरम्—उत्तरेषु सवनेषु'—इति वि०।

Digitized by Google

अथ अध्यास्वरूपा तृतीया ।

१ २ ३ १र २र　　३ १ २ ३ ३१ १ १　　१ २
परिस्वान*श्चक्षसेदेवमादनःक्रतुरिन्दुर्विचक्षणः ॥३†॥ १२

"स्वानः" सुतः अभिषूयमाणः सोमः "चक्षसे"‡ सर्वेषां दर्शनाय "परि" स्रवति। कीदृशः? "देवमादनः" देवानां तर्पयिता, "क्रतुः" कर्त्ता,¶ "इन्दुः" पात्रेषु चरण-शीलः दीप्तो वा, "विचक्षणः" "सर्वस्य" विद्रष्टा ॥ ३ ॥ १२

५ ४　२र ३ ४ र ५　　१र र
॥ पृष्ठम् ॥ परा३यितोषिञ्चतासुताम् । सोमोयउत्त

१　　२ १र र र
म७ंहवार३यिर्हौइया। दधन्वा७ंयोनर्योअप्सुवन्तरार३

१　१ १र　२　१　२
होइया। सुषावार२३सो। ममद्रा२३यिभा३४३यिः ॥(१)

५ ४　२ ३र ४　५　　१ र　र　　१
सुषा३वसोममद्रिभायिः। सुषावसोममद्रिभा२३यिर्हौ

२र　१ र र　　१　　२ १
इया। नूम्पुनानोअविभिःपरिस्रवा२३होइया। अदब्धा

२　१　२　　५ ४　२　३ ४　५
२३ःह। रभिन्तार२३रा३४३ः ॥(२) अदा३ब्धःसुरभिन्तराः।

---

* "सुवान"—इति क० पाठः ।

† ऋ० वे० ७, ५, ११, ३ ।

‡ 'चक्षसे—ख्याय'—इति वि० ।

¶ 'क्रतुः—यज्ञः'—इति वि० ।

१ १ ११र र र
अदब्ध सुरभिन्तरा२३ओइया। सुतेचित्त्वाप्सुमदामोअ
१ १र१ २ १ २
न्धसा२३ओइया। ओणान्तो२३गो। भिरुता२ ३रा ३ ४
१
३म्। ओ२३४५ई। डा॥ १ *॥ [१]
५ ४ २ ४ ५र ५र १र
॥ कौल्मलबर्हिषम्॥ परा३यितो३षिञ्चतासुताम्। सो
र २ र र १ २
मोयउत्तमा२९ओवा२ ३ ४ यिः। दधन्वा९योनर्य्योआ।
२१ १ र र २ १ ५
एहोयि। प्स्व२न्तरा। सुषावसोममोवा३ओ२३४वा।
४ ५ ५ ४ २ ४र ५ १
द्रा५यिभो६हायि॥(१) सुषा३वा३सोममद्रिभायिः। सु
२ र १ १र र र १ २
षावसोममा२द्रायिभा२ ३ ४यिः। नूनम्पुनानोअवायिभा
र १ १ २ १
यिः। पेहोयि। पा२रिस्रवा। अदब्धःसुरभोवा३ओ
५ ४ ५ ५ ४ २ ४ ५
२३४वा। ता५रो६हायि॥(२) अदा३ब्धा३ःसुरभिन्तराः।
१ १ २र र १ २
अदब्धःसुरभा२यिन्तारा२ ३ ४ः। सुतेचित्त्वाप्सुमादा।

---

* क० गा० ५प्र० २अ० १मा०।

१ र १ र र र १ २ १
ऐहोयि। मो२अन्धसा। ओणान्तोगोभिरोवा३ओ२३४

५ ४ ५
वा। तापुरो६हायि(३) ॥ २ * ॥ [२]

१ २र १र २ र १ १
॥ अर्कपुष्पाद्यम् ॥ परोतोषिञ्चतासुतम्। ऊवे२३।

१र २र १ २ १ २ १ २ १र र र २ १
सोमोयउत्तमꣳहविः। ऊवे२३। दधन्वाꣳयोनर्य्योअप्स्

२ १र २ १र१ १र २ १ २ १
वन्तरा। ऊवे२३। सुषावसोममद्रिभिः। ऊवे२३ ॥(१)

२ १र २ १र २ १ २ १ २ १र २१र २ १ २
सुषावसोममद्रिभिः। ऊवे२३। सुषावसोममद्रिभिः।

१ २र१ २र १र २ १ २ १ १ २
ऊवे२३। नूनम्पुनानोविभिःपरिस्रव। ऊवे२३। अदब्धः

१ २ १ २ १ २
सुरभिन्तरः। ऊवे२३ ॥(२) अदब्धःसुरभिन्तरः। सुर

१ १ २ १ २ १
भिन्तरः। ऊवे२३। अदब्धःसुरभिन्तरः। ऊवे २ ३।

२ १र २र १ २र र १ २र १ २र १ २र १र
सुतेचित्त्वाप्सुमदामोअन्धसा। ऊवे २ ३। ओणान्तोगो

२ १ र १ १ १ २ २
भिरुत्तरम्। ऊवे२३। ऊवे२३। होवा३हा३। हा

* ऊ० गा० ५प्र० २ख० २गा०।

५र र २ १र र र १र २ १ १ १
३४। औहोवा। अर्कोदिवाना२म्परमेवियो२मा २ ३ ४
१
५न्(३) ॥ २ * ॥ [३]

२ र १र र र र र २
॥ दैर्घश्रवसम् ॥ परीतोषिञ्चतासुतमोहाओहा३ए ।
१र १र १ २ १ २ १ ऽ ॰ ऽ २ २ ३ २
सोमोयउत्तमꣳहविः । ओ३हा । ओ३हा३ए३४ । दधा
३र २ १ २ १ २ ऽ २
३४न्वाꣳयाः । नारियः । अꣳसूअन्तरा । ओ ३ हा ।
ऽ २ २ २ २ २ २ २ १ ५ ४
ओ३हा३ए३४ । सुषा३४वसो३ । ममो२३४वा । द्रा५
५ २ र र र र र २
यिभो६हायि ॥(१) सुषावसोममद्रिभिरोहाओहा३ए ।
२ १र २ १र २ १ २ ऽ २ ऽ २ २ ३र २
सुषावसोममद्रिभिः । ओ३हा । औ३हा३ए३४ । नूना
३ २ १ २ १ २ ऽ २ ऽ
३४म्पुना । नोअवि । भिःपारिस्रवा । ओ३हा । ओ३
२ २ २ २ ३ २ र १ ५ ४
हा३ए३४ । अदा३४ब्धःसू३ । रभो२३४वा । ता५रो६
५ २ र र र २ १ २
हायि ॥(२) अदब्धःसुरभिन्तरओहाओहा३ए । अदब्धः
१ २ ऽ २ ऽ २ २ ३ २
सुरभिन्तरः । ओ३हा । ओ३हा३ए३४ । सुता३४यि

* ऊ० गा० ५प्र० २अ० ३सा० ।

Digitized by Google

चित्त्वा। आप्सुम। दामोअन्धसा। ओ३द्दा। ओ३
द्दा३ए३४। ओणा३४न्तोगो३। भिरो२३४वा। तापुरो
ई्हायि(३) ॥ ४ * ॥ [४]

॥ दवग्वरोवैयश्वम् ॥ परीतोषिञ्चतासूताम। सो
मो। यउत्तमꣳहविः। दधान्वाꣳ१या२ः। नय्यो अप्सु
वन्तरा। सुषावा१सो२। ममद्रा२३यिभा३४३यिः ॥(१)
सुषावसोममद्रायिभायिः। सुषा। वसोममद्रिभिः।
नूनाम्पू१ना२। नोअविभिःपरिस्रव। अदाब्धा१ःसू२।
रभिन्ता२३रा३४३ः ॥(२) अदब्धःसुरभिन्तारा:। अद्दा।
ब्धःसुरभिन्तरः। सुतायिचा१यित्वा२। अप्सुमदामो
अन्धसा। श्रीणान्तो१गो२। भिरुत्ता२३रा ३ ४ ३म्।
ओ२३४५ई। डा(३) ॥ ५ † ॥ [५]

---

* ऊ० गा० ५प्र० २ख० ४सा० ।        † ऊ० गा० ५प्र० २ख० ५सा० ।

Digitized by Google

२ र र र र
॥ आभीशवाद्यम् ॥ परीतोषिञ्चतासुतम्। ए। सो

र ऽ १ ७ २ ३ ५ २ १र
मोयऊ३त्तामॅ्रवाविः। दा२३४धा। हायि। न्वाॅ्र

र र ७ २ ३ ५ २ १र २
योनर्य्योअप्सूअन्तारा। सू२३४षा। हायि। वासोम

१ ५ ४ ५ २ र र
मो२३४वा। द्रा५यिभो६हायि ॥(१) सुषावसोममद्रिभि

र र ऽ १ ७ २ ३ ५ २
रे। सुषावसो३मामद्रिभायिः। नू२३४नाम्। हायि।

१ र र ७ २ ३ ५ २ १
पुनानोअविभिःपारिस्रावा। आ२३४दा। हायि। अाः

२ १ ५ ४ ५ २
सूरभो२३४वा। ता५रो६हायि ॥(२) अदब्धःसुरभिन्त

ऽ १ ७ २ ३ ५ २ १
रए। अदब्धःसू३राभिन्तारः। व२३४ते। हायि। चि

र र ७ २ ३ ५ २ १ र
त्वाप्सुमदामोअन्धासा। आ२३४यिष। हा। तोगो

२ १ ५ ४ ५
भिरो२३४वा। ता५रो६हायि(३) ॥ ६ * ॥ [६]

३ ४र ५ र र २ ३ ४र ५
॥ माधुच्छन्दसम् ॥ परीतोषा। होयिः। चतासुता

५ २र १ २ १ २ ३ ५ २ १र र
६मे। सोमोयऊ। तामॅ्रवा२३४वोः। दधन्वाॅ्रयोन

* ऊ० गा० ५प्र० १ख० ६सा०।

य्यौंऽ३। प्सुवान्तारा। औहोऽ३४वाहायि। सुषावासो।
औहोऽ३४वाहा। ममद्राऽ२३यिभाऽ३४३यिः। ओऽ२३४५
ई। डा(३) ॥ ३ * ॥ [७]

॥ ऐडमायास्यम् ॥ आयिपरायि। तोषायि। चता
सुताम्। सोमोयऽ३१। तमऽ२ह्वायिः। दाधन्वाऽ२
याऽ३१ः। नर्य्याश्रा। प्सुवन्तरा। सूषावसोऽ३१। ममद्राऽ२३
यिभाऽ३४३यिः ॥(१) आयिसुषा। वासो। ममद्रिभा
यिः। सूषावसोऽ३१। ममद्रिभायिः। नूनम्पुनाऽ३१।
नोश्वविभायिः। परिस्रवा। आदब्धःसूऽ३१। रभिन्ता
ऽ२३राऽ३४३ः ॥(२) आश्वदा। ब्धाःसू। रभिन्तराः। आ
दब्धःसूऽ३१। रभिन्तराः। सूतेचित्त्वाऽ३१। प्सुमदा।

* ऊ० गा० ७प्र० १ख० १सा०।



Digitized by Google

२र १ र र २ १ २
षोचक्षता। आयिचक्तोगो३१। भिक्ताऽ२रा३४३म्।
१
औोऽ२३४५ई। डा(३) ॥ ४ * ॥ [८]

२ १ ४ र ५ १र २र
॥ पृश्नि ॥ परायितो२३षिञ्चतासुत७हाउ। सोमो
१ २ १ २ १ २ १ २ २
यउत्तम७हविः। दधन्वा७१या २ ३ः। होवा३हायि।
२ २र १ २ १ २ २ १
मारियोच। प्सुवान्ता१रा२३। होवा३हायि। सुषा
२ १ २ २ १ २ १ २
वा१सो२३। होवा३हा। मामद्रिभिः। इडा२३भा३४
१
३। औोऽ२३४५ई। डा(१) ॥ २ † ॥ [९]

२ र र र
॥ अभीशवोत्तरम् ॥ परीतोषिञ्चतासुतम्ए। ए।
र र १ ० २ ३ ५ २ २
सोमोयजऽ३त्ताम७हाविः। दा२३४धा। हा३हायि।
१र र र ० २ ३ ५ २ २ १र
व्हा७यीनर्य्योअप्सून्तारा। सू२३४षा। हा३हायि। षा
२ १र ५ ४ ५ १ र र
सोममो२३४वा। द्रा५यिभो६हायि ॥(१) सुषावसोम

---

* ऊ० गा० ७प्र० १अ० ४सा०।

† ऊ० गा० ७प्र० २अ० १सा०।

Digitized by Google

मद्रिभिरे। ए। सुषावसो३मामद्रि। भायिः। मू२३४

नाम्। हा३हायि। पुनानोषविभिःपारिस्रावा। धा

२३४हा। हा३हायि। आःखरभो२३४वा। तापूरो६

हायि॥(२) यदद्भ्यःसुरभिन्तरए। ए। यदद्भ्यःसू३राभि

न्तारः। सू२३४ते। हा३हायि। पिबाप्सुमदामोश्र

न्धासा। आ२३४यिषा। हा३हा। तोगोभिरो२३४

वा। तापूरो६हायि(३)॥४*॥[१०]

॥सन्ततम्॥ परीतोषिञ्चतासुताम्। सोमोयउत्त

मण्हवायिः। दधन्वाण्२३वाः। नारियोम। ष्सुवा

न्तारा। औहो२३४वाहायि। सु। षावा२३सो३। हो

वा३हा। ममद्रा२३यिभा३४३यिः॥(१) सुषावसोमम

द्रिभायिः। सुषावसोऽममद्रिभायिः। नूमरुपू२३मा।

* ऊ० गा० ७प्र० २ख० ४सा०।

१ २ १ २ ३र २ ३र २ १
नोअविभिः। परायिस्वावा। औहोऽ३४वाहायि। अ।
२ १ २ २ १ २
दाब्धा२३:सू३। होवा३हा। रभिन्ता२३रा३४३: ॥(२)
१ २ १ २१ २१ र
अदब्धःसूरभिन्तराः। अदब्धःसूरभिन्तराः। सुतेचा२३
२ १ १र र १ २ ३र २ ३र २
यित्वा। आप्सुमदा। मोमान्धासा। औहोऽ३४वाहा
१र २ १ २ २ १
यि। श्री। पान्तो२३गो३। होवा३हायि। भिरुत्ता
२ १
२३रा३४३म्। ओ२३४५ई। डा(३) ॥ ३ * ॥ [११]

५ र २ ४ ५ ४र ५ २र १ २
॥ कालेयम् † ॥ परीतो३षिञ्चतासुताम्। सोमोय
१ २२ ११ २१र २ १
उ। तमऽ२३हवा२३यिः। दधन्वाऽ२या३ः। ना२ ३ ४।
३४र ५ २ २ १ ३२ २ ५
रियोअप्सुव। ता३रा। सुषावसौ। वा३४३ओ३४वा।
४ ४
ममा५द्रिभायिः। हो५ई। डा(३) ॥ ४ ‡ ॥ [१२]
२र र १ ५ १
॥ रौरवम् ॥ परीतोषिञ्चा३तासू२३४ताम्। सोऽ

---

* ऊ० गा० ९प्र० १ख० ३सा०।

† "महाकालेयम्"—इति ख०-पाठः।

‡ ऊ० गा० ९प्र० १ख० ४सा०

२ २ २ २ ३ २ १
मोयउत्तमꣳहविर्द्धव्वाꣳयोनर्य्योअप्सुवा२न्तरा। ओ
२ २ १२ २ २ १ २ २
हा३उवा। सुषावसोममा २ ३ हायि। ओहा३उवा।
१ ३ ५ २ २ २ १
द्रिभायिः। औ३होवा॥(१) सुषावसोमा३मद्रा२ ३ ४
५ १ २ २ २ २ २
यिभायिः। सू॒षावसोममद्रिभिर्नूनम्पुनानोअविभिःपरा२
३ २ १ २ २ १ २ १
यिस्रवा। ओहा३उवा। अदब्धःसुरभा२३यिहायि। ओ
२ २ १ २ ३ ५ २ १
हा३उवा। तरा। औ३होवा॥(२) अदब्धःसुरा३भि
५ १ २ २ २
न्तार३४राः। आ। दब्धःसुरभिन्तरःसुतेचित्त्वाप्सुमदा
२ ३ २ १ २ १ १२ २ २ २
मोआ२न्धसा। ओहा३उवा। श्रीणन्तोगोभिरू२३हा
१ २ २ १ ४ ५ ४
यि। ओहा३उवा। तराम्। औ२३होवा। हो५ई।
डा(३)॥ ११ *॥ [१३]

१ २२ १२ २ २ १२ २२ १२
॥ आष्टादꣳष्ट्रोत्तरम्॥ परीतोषिञ्चतासुतमैयाही।
२ २ १२ २२ १ २ १ १२
हो३वा। सोमोयउत्तमम्। होवा२३यिः। ऐया२३त्।

* ऊ० गा० ६प्र० ३अ० ११सा०।

औ२३होवा । दधन्वाᳪयोनर्योअप्सुव । तारा२३ ।
ऐया२३त् । औ२३होवा । सुषावसोमम । द्रायिभा
२३यिः । ऐया२३त् । औ२३होवा३४३ ॥(१) सुषावसो
ममद्रिभिरैयाही । होइवा । सुषावसोमम । द्रायिभा
२३यिः । ऐया२३त् । औ२३होवा । नूनम्पुनानोविभिः
परि । स्रावा२३ । ऐया२३त् । औ२३होवा । अदब्धः
सुरभि । तार२३त् । ऐया२३त् । औ२३होवा३४३ ॥(२)
अदब्धःसुरभिन्तरऐयाही । होइवा । अदब्धःसुरभि ।
तारा२३ः । ऐया२३त् । औ२३होवा । सुतेचित्त्वाप्सु
मदामोअ । धासा२३ । ऐया२३होवा । श्रीणन्तोगो
भिरु । तारा२३म् । ऐया२३त् । औ२३होवा३४३ ।
ओ२३४५ । ई । डा(३) ॥ १८ * ॥ [१४]

* ऋ० गा० १२प्र० १ख० १८गा० ।

॥ उत्सेधम् ॥ परीतोषिञ्चतासुतम् । सोमः । य ऊ३४औहोवा । तमः२वाऽ२यिः । हाउ३१उवा २ ३ । ऊ ३ ४ पा । दधाइन्वाऽ२या । औहोवाहायि । नारि योआ । प्सुवन्तारा । हाउ३१उवा२३ । प३४पा । सुषाउवसो । अन्हौवाहायि । ममाउद्राऽयिभा ६ ५ ६ त्रिः ॥(१) सुषावसोममद्रिभिः । सुषा । वसो३४औहो वा । ममद्रिभाऽ२यिः । हाउ३१उवा२३ । ऊ ३ ४ पा । नूनाउपुना । औहोवाहायि । नोअविभायिः । परि स्राव । हाउ३१उवा२३ । ऊ३४पा । पदाउधवःसु । औ होवाहायि । रभाउस्रिस्ताऽराइ५६ः ॥(२) आदध्वःसुर भिन्तरः । अद । ध्वःसू३४औहोवा । रभिन्तराऽ२रः । हाउ३१उवा२३ । ऊ३४पा । सुताउयिचित्त्वा । औहो वाहायि । आप्सुमदा । मोअन्धासा । हाउ३१उवा२

३। ऊ३४पा। श्रोणा३न्तोगो। यौहोवाद्धायि। भि

हुङ्कता५रा६५६म् (३) ॥ २० * ॥ [१५]

॥ पृश्नि ॥ परायितो२३षिञ्चतासुतꣳद्धाउ। सोमो

यउत्तमꣳहविः। दधान्वाꣳ१या२३ः। होवा३हायि।

नारियोअ। प्सुवान्ता१रा२३। होवा३हायि। सुषा

वा१मा२३। होवा३हा। मामद्रिभिः। इडा२३ ॥(१)

सुषावा२३सोमामद्रिभिर्हाउ। सुषावसोममद्रिभिः। नू

नाम्पू१ना२३। होवा३हायि। नोषविभिः। परायि

सा१वा२३। होवा३हायि। यदाभ्या१ःसू२३। होवा३

हा। राभिन्तरः। इडा२३ ॥(२) अदाभ्या२३ःसुरभि

न्तरोद्धाउ ॥(२) अदभ्यःसुरभिन्तरः। सुतायिचा१यि

त्वा२३। होवा३हायि। अप्सुमदा। मोयान्धा१सा

* ऊ० गा० १२प्र० २अ० २०सा०।

१ २ २ १र २ १ २ २
२३। द्योवा३हायि। श्रीणान्ते१गो२३। द्योवा३हायि।

१ २ १
भायिरुत्तरम्। इडा२३(३)॥ ६ *॥ [१५]

३ ४र१र ४ ५ र २ २ १
॥ साम्रम्॥ परीतोषिञ्चता। हा३हा३यि। सू२३

५ १र १ १
४। तꣳसुतोवा। सोमोहो२यि। यऊहो२। ता

७ १ २र १ १ ३
मꣳहावा२यिः। दाधन्वाꣳय। नरायियोआ। प्सु

२ २ ५ १ १ १ १
वाउवा३। ऊ३४पा। तरा२। सुषा२वासो२। मम।

२ ५र र ४ ३र ४ १र ४ ५र २ २
द्रा२यिभा२३४औहोवा॥(१) सुषावसोममा। हा३हा

१ ५ १ १
यि। द्रा२३४यि। भिद्रिभोवाःसुषाहो२ई। वसाहो

१ ७ १ २र र १ २
२। मामद्रायिभा२यिः। ननम्पुना। नोआवायिभा

३२ २ ५ १ १ १
यिः। पराउवा३। ऊ३४पा। स्वा२। आदा२ब्धाः

१ ३ ५र ८ ३ ४ ५
सू२। र्रभ। तार२रा२३४औहोवा॥(२) अदब्धःसुर

२ २ १ ५ १
भि। हा३हा३यि। ता२३४। रस्तरोवा। अदाही

* ऊ० गा० १५प्र०१अ० ६सा०।



Digitized by Google

१ १ ७ १ र २ र
२यि । भ्वःहचो२ । राभिन्तारा२ः । हतेचित्वा । पु
१ २ ३ २ २ ५ १ १
मादा । मघाउवा३ । ऊ३४पा । धसा२ । आयिणा
१ १ ३ ११र र २
२न्तोगो२ । भिह । तार२रा२३४औहोवा । ऊ२२३
५
४पा(३) ॥ १२ * ॥ [१६]

२र १र २ र १
॥ मानवोत्तरम् ॥ हावायि । परीतोषिञ्चतासुतम् ।
र ७ १र १
होवायि । सोमोयउत्तमꣳहविः । दाधन्वाꣳयः । ना
७ र २ ७ ३ ५ २ १ २
रियोआ३१ । प्सूवार२न्ता२३४रा । सुषावा२ ३ सो ३ ।
१ ३ ५र र ३ ५ १
मार२मा२३४औहोवा । द्रा२३४यिभीः ॥(१) होवायि ।
२ १र २ १र १ १ २ १ र र
सुषावसोममद्रिभिः । होवायि । हषावसोममद्रिभिः ।
७ २ र १ ७ २ ७ ३ ५
नूनम्पुना । नोअविभा३१यिः । परा२यिस्रा२३४वा ।
२ १ २ १ ५र र ३ ५
अदाब्धा२३ःह३ । रा२३४औहोवा । ता२३४राः ॥(२)
१ २ १ २ १
होवायि । अदब्धःसुरभिन्तरः । होवायि । आदब्धः

* ऊ० गा० १५प्र० २ष० १२सा०।

१ ७र
सुरभिन्तरः। ह्वोवायि। आदध्यःसुरभिन्तरः। स्तुते
२ र १ ७ २ ७र २ ५ २र १
चित्त्वा। आप्सुमदा३१। मोआ२न्धा२३४सा। श्रीणा
२ १ ३ ५र र २
न्तो २ ३ गो ३। भा२यिहु२३४औहोवा। ता २ ३ ४
५
राम्(३) ॥ १३ * ॥ [१७]

१ २ १ २ र
॥ आनूपं वाध्र्यश्वम् ॥ परायिपरायि। तोषिञ्चा ३
१ २ १ र २ १ २ १
ताहु१ता२म्। सोमोयउ। तमाउ२वा१वा२यिः। दा
१ १ र २ १ २ १ २ २
धा२न्वाउ२या२ः। नर्य्योअप्सुवन्ता२३रा। सुषावा३सो
१ ४ २ ५ १ २ १ २
३। मा२३मा३। द्रा३४५यिभो६हायि ॥(१) सूषासूषा।
र १ २ १ र २ र १ २
वसोमा३माद्रा१यिभा२यिः। स्तुषावसो। ममाद्रा१यि
१ १ १र २ १ २
भा२यिः। नूना२म्पूना२। नोअविभिःपरिस्रा२३वा।
१ २ २ १ ४ २ ५
अदाब्धा३ःहु३। रा२३भा३यि। ता३४५रो६हायि ॥(२)
१ २ १ २ १ २ १ २
अदाअदा। ब्धःसुरा३भायिन्ता१रा२ः। आदब्धःसु।

* ऊ० गा० १५प्र० २ख० १३गा०।

१ २ १ १ १ २ १२
रभायिन्ता१रा२ः। छते२चायित्वा२। अ५सूमदोमो

१ २ १२ १ २ १ ४ २
अन्धा२३सा। श्रोणा५न्तो३गो६। भा२३यिछ३। ता

५
३४५रो६च्चायि(३) ॥ १४ * ॥ [१८]

२२ २ ४ ५ २ २
॥ यौधाजयम् ॥ परा३१यि। तो३षि। च। ताह्व

५ १ २ १ २२ २
२३४ताम्। सोमो३। यज२। तमा३४५म्। हा२

५ २ १ २र १ २ १र ३ २
३४वो:। दधान्वा५ग्या:। न। र्य्यीआ२। पस्तुवा३४५।

३ ५ २ १ २२ ३
ता२३४रा। सुषा२। वासो२। ममा३४५। द्रा२३४

५ २ २ २ ४ऽ ५ २ ३ ५
यिभो:॥(१) सुषा३१। वा३सो। मम्। आद्रा२३४यिभायि:।

१ २ १ २ २ ३ ५ १र १ २
छषा३। वसो२। ममा३४५। द्रा२३४यिभो:। नूनापु

१ २ १ २२ ३ ५
ना। न:। अविभा२यि:। परा३४५यि। स्रा२३४वा।

२ १ ३२ ३ ५
अदा२। ब्धा:छ२। रभा३४५यि। ता२३४रा: ॥(२)

३ २ २ ५ ५ २ २ ५ १ २
अदा३१। ब्धा३:सू। र। भिन्ता२३४रा:। आदा३।

* ऊ० गा० १५प्र० २ख० १४सा०।

१ २ २ ३ ५ २ १ २ १
व्यःस्व२ । रभा३४५यि । ता२३४राः । सुतायिचित्त्वा ।

२ १ ३र २ ३ ५ १र
अ । प्सुमदा२ । मोआ३४५ । धा२३४सा । श्रीणा२ ।

१ ३ २ ३ ५
तेगो२ । भिरू३४५ । ता२३४राम्(३) ॥ ५ * ॥ [१९]

५ र २ ४ ५ ४र ५ १ र २
॥ द्वैगतम् ॥ परीतो३षिञ्चतासुताम् । सोमोयउ ।

१ २ ३ २ १ २ २ १र
तमा(उ)त्वा१वा२यिः । दधा३ । चौ३चो३वा । न्वा(उ)

र र ० १ १ ३ ५र र
योनर्य्योअप्स्वअन्तारा२ । सुषा२३ । वा२सो२३४औचो

२ १ ३ १ १ १ १ ५ र २ ४र ५
वा । ए३ । ममा२द्रिभा२३४५यिः ॥(१) सुषावा३सोम

४ ५ १ र २ र १ २ ३र २
मद्रिभा३यिः । स्वषावसो । ममाद्रा१यिभा२यिः । नूना

२ २ २ १ र र ० १
रम् । चौ३चो३वा । पुनानोअविभिःपारिस्रावा२ । म

१ ३ ५र र २ १ ३
दा२३ । ब्धा२ःसू२३४औचोवा । ए३ । रभा२यिन्तरा

१ १ १ १ ५ २ ४ ५ ४ ५ १ २
२३४५ः ॥(२) अदब्धा३ःसुरभिन्तराः । आदब्धःसू । र

१ २ ३ २ २ २ २ १ र
भायिन्ता१रा२ः । सुता३यि । हौ३हो३वा । चित्त्वा

° क० मा० २६प्र० १ख० ५सा० ।

र ० १र १ २ १र
प्सुमदामोअन्धासा२ । औणा२३ । तो२गो२३४वौ
र २ २ २११११
वोवा । ए३ । भिद्रू२त्तरा२३४५म्(३) ॥ ६ * ॥ [२०]

॥ कण्वरथन्तरम् ॥ पारीतोषिञ्चतासुताम् । सो
१र ऽ २ १ २ २ २ र र
मोयज्ञ । ता३मा॰ह्वा३वायिः । दधन्वा॰योनर्य्योअप्सु
२ १र २ १र ५ २
वन्तरा२३४ऐही । सुषावा२३४सो । ममा३१उवा२३ ।
२ २ ३ २ र र १२र १ २ १ २ १र र
ए३ । द्रिभिरा ॥(१) वृषावसोममद्रिभायिः । सुषावसो ।
२ १ २ २ र र र २
मा३माद्रा३यिभायिः । नूनम्पुनानोअविभिःपरिस्रवा२३
५र २ १ ५ २ २
४ऐषी । अद्ब्धा२३४:ह्व । सू । रभा३१उवा२३ । ए३ ।
२ ३ २ र १ २ १ २ २ २ १ २
तरभा ॥(२) आदब्धःसुरभिन्तराः । षदब्धःह्व । रा३
१ २ २ र र र र २ ५र
भायिन्ता३राः । सुतेचित्त्वाप्सुमदामोअन्धसा२३४ऐही ।
२र १ ५ २ १ २ २ ३ २
औणान्तो२३४गो । भिद्रू३आउवा२३ । ए३ । तरभा(३)

॥ १८ † ॥ [२१]

---

* ऊ० गा० १६प्र० १ख० ६सा० ।

† ऊ० गा० १६प्र० १ख० १८सा० ।

अथ त्र्यचात्मके तृतीय-सूक्ते—

प्रथमा ।

१ २ ३ १ २ ३ १ २ ३ २ ३ २ ३
असाविसोमोअरुषोवृषाहरी

१ २ ३ २ ३ १र २र
राजेवदस्मोअभिगाअचिक्रदत् ।

२ ३ ३ १ २ ३ १ २ ३ १र
पुनानोवारमत्येष्यव्ययᳪश्येनो

२र ३ १ २ ३ १ २
नयोनिङ्घृतवन्तमासदत् ॥ १ * ॥

"सोमः" "असावि" अभिषुतोऽभूत् । कीदृशः सोमः ? "अरुषः" आरोचमानः, "वृषा" वर्षकः, "हरिः" हरितवर्णः ; स च राजेव "दस्मः" दर्शनीयः सन् "गाः" उदकानि "अभि" लक्ष्य "अचिक्रदत्" शब्दं करोति स्व-रस-निर्मोक-समये, पश्चात् पुनानः "अव्ययम्" अविमयं "वारं" वालं दशापवित्रम् "अत्येषि" हे सोम ! अतिक्रम्य गच्छसि । ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम् "आसदत्" प्रविशति ॥

"अत्येषि"-"पर्येति"—इति पाठौ, "आसदत्"-"आसदम्" —इति च ॥ १ ॥

---

* छ० आ० ६, २, २, ९ (२भा० १९१ पृ०) = ऋ० वे० ७, ३, ७, १ ।

Digitized by Google

अथ द्वितीया।

२ १ २ २ १ २ ३ १ २ १ १ २
पर्जन्यःपितामहिषस्यपर्णिनो

१ २ ३ २ ३ २ ३ १ २
नाभापृथिव्यागिरिषुक्षयन्दधे।

१ २ ३ १ १ ३ १उ ३ १ २ २
स्वसारआपोअभिगाउदासर

२र २र ३ १ २ ३ २
न्त्सङ्ग्रावभिर्वसतेवीतेअध्वरे॥२*॥

यस्य "महिषस्य" महतः "पर्णिनः" पर्णवतः पतनवतो वा सोमस्य "पर्जन्यः" "पिता" जनकः "सः" सोमः "पृथिव्याः" † "नाभा" नाभौ नाभिस्थानीये ‡ हविर्धाने "गिरिषु" गिरिसम्बन्धिषु ग्रावसु "क्षयं"निवासं "दधे"धारयति अभिषव-समये। तथा "स्वसारः" अङ्गुलयः "आपः" वसतीवर्यः ¶ "गाः" आशिरार्थाः स्तुतयो वा § "अभि" आभिमुख्येन "उदासरन्" उद्गच्छन्ति गच्छन्तु, "वसते", "सम्" गच्छते च, "ग्रावभिः" साकम्। कुत्र? "वीते" कान्ते "अध्वरे" यज्ञे॥

"उदासरन्"-"उतासरन्"—इति पाठो, "वीते"-वीथे"—इति च॥२॥

* ऋ० वे० ७, ३, ७, २।

† 'पृथिव्याः समुत्पन्नः'—इति वि०।

‡ 'नाभा—नाभि-स्थानीयः'—इति वि०।

¶ 'अप्सु आह्वपः'—इति वि०।

§ 'गाः—सोमस्य रश्मयः'—इति वि०।

Digitized by Google

अथ तृतीया ।

२ १२३१र २र३ १ २१
कविर्वेधस्यापर्य्येषिमाहिन

२ ३ ११ २ ३१ १र
मत्योनमृष्टोअभिवाजमर्षसि ।

१ १२ ३१ २
अपसेधन्दुरितासोमनोमृड

२ १र १र३१ २ ३१ २
घृतावसानःपरियासिनिर्णिजम् ॥ १ * ॥ १३

हे "सोम !" "कविः" क्रान्तदर्शी सन् "वेधस्या" याग-विधानेच्छया "माहिनं" मंहनीयं पवित्रं "पर्य्येषि" परि-गच्छसि, पश्चात् "मृष्टः" प्रक्षालितः "अत्योन" † अश्व इव "वाजं" सङ्ग्रामम् ‡ "अभ्यर्षसि" । सोम ! "दुरिता" अस्म-दीयानि दुरितानि "अपसेधन्" परिहरन् ¶ "नः" अस्मान् "मृड" सुखय "घृतावसानः" घृतानि उदकानि वसानः आच्छा-दयन् "परि यासि" अभिगच्छसि । किन्तत् ? "निर्णिजम्" पवित्रम् ॥

"सोमनोमृडघृता"-"सोममृडयघृतम्"—इति पाठौ ॥१॥ १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य

नवमः खण्डः ॥ ९ ॥

* ऋ०वे० ७, १, ७, १ ।

† 'अत्यः—अतीत्य गच्छति'—इति वि० ।

‡ 'वाजम्—अन्नं चरु-पुरोडाशादिलक्षणम्'—इति वि० ।

¶ 'अपसेधन्—रक्ष इत्यौ (भा० आ०) अपसृष्टिः कृतः संवर्द्धति'—इति वि० ।



Digitized by Google

१र र २ र र
॥ महासामराजम् ॥ हाउहोवा३हायि । असावि

ऽ१ २ ४ १र २११११ १र र
सोमो३आ । रुषो३वा३ । षाहरा२३४५यिः । राजेव

र ऽ १ २ ४ १ ३११११ २ र
दस्मो३आ । भिगा३ । आ३ । चिक्रदा२३४५त् । पुना

र र ऽ १ २ ४ २ २११११ १र
नोवारा३मा । जिया३यिषो३ । अव्यया२३४५म् । श्ये

र र १ २ ४ २र २
नोनयोनो३घा । तवा३न्ता३म् । आसदा३हाउ ॥(१)

२ १ऽ १ २ ४ २ ३ १ १ १ १
पर्जन्यःपिता३मा । हिषा३स्या३ । पर्णिना २ ३ ४ ५: ।

२र र र ऽ १ र ४ २ २११११
नाभापृथिव्या३मायि । रिषू३त्ता३ । यन्दधा२३४५यि ।

१ र र र १ र ४ २र ३११११
स्वसारत्वायो३आ । भिगा३ज३न् । आसरा२३४५न् ।

२ र १ २र ४ २
सङ्गावभिर्वा३सा । तेवा३यिते३ । अध्वरा३२उ ॥(२)

र र ऽ १ २ ४ २र २११११ २ र
कविर्वेधस्या३पा । रिया३यिषो३माहिना२३४५म् । अत्यो

र ऽ १ २ ४ २ ३११११ १र
नम्ष्टो३आ । भिवा३जा३म् । अर्षसा२३४५यि । अप

१ २र ४ २र ३११११ १र
सधन्तूश्चरायि । तासो३मा३ । नोम्वा२३४५ । हाउ

१ २ १ २ १ २ २र र र

प्रसायिषसायि । अपा३१२३४ । सेधन्दुरितासोमनः ।

१ २ १ २ १ २ २र २ ३ २

मृडामृडा । घृता३१२३४ । वसानःपरिया । सिना३

४

यिर्णा५यिजा६५६म् (३) ॥ २ * ॥ [२]

२ र १ २र १

॥ ऐडमायास्यम् ॥ असावायिसो२३ । सोअरुषा२

२ १ र १२ र १ २र २

३ः । ए३ । वृषाहरिरे३ । राजेवादा२३ । स्मोअभा

१ २ २ र १ २ १

यिगा२३ः । ए३ । अचिक्रदढे३ । पुनानोवा२३ । रमता

२ २ १र र १ २

यिये२३ । ए३ । षिअव्ययमे३ । श्येनोनायो२३ । नि

१ २ २ र २ १

कृतावा२३ । ए३ । तमासददे३४३ ॥(१) पर्ज्जन्याःपा२

२र १ २ २ २र र

३यि । तामहायिषा२३ । ए३ । सुपर्णिनए३ । नाभा

१ २र १ २

पार्थो२३यि । व्यागिरायिषू२३ । ए३ । स्वयन्दधए३ ।

२ र १ २र १ २ २ र

स्वसाराआ२३ । पोअभायिगा२३ः । ए३ । उदासरन्ने

२ र ३ १ १ २

३ । सङ्गावाभा२३यिः । वसतायिवा२३यि । ए३ । पो

* छ० गा० ८प्र० १अ० २सा० ।

षभायिगा२३ः। ए३। उदासरत्ने३। सप्तावाभार२३
                        २र
यिः। वसतायिवा२३यि। ए३। तेषध्वरए३४३॥(२)
२   १          २र   १          २    २र
कविर्वायिधा२३। स्यापरायिये२३। ए३। षिमाहिन
    २  र  १          २र   १           २    २
मे३। अत्योनामा२३। ष्टोम्भायिवा२३। ए३। अ
        २  १           १   १           २
मर्षसिए३। अपसायिधा२३न्। दुरितासार३। ए३।
२ र        २  र  १          २   १          २
मनोम्तउए३। घृतावासा२३। नःपरायिया२३। ए३।
२              १
सिनिर्णिजमे३४३। ओ२३४५ई। डा(३)॥४*॥[३]

            २              ३  २    ३र ४र
॥वासिष्ठम्॥ हायि। उऊवायि। असा३४औहो
५    १      २  १      २  ३ ४र  ४        ३र २
वा। विसो। मो३अरु। षोवृषाहरायिः। राजे३४
३र ४र ५   १     २  १      २  ३  ४   ५     ३ १
औहोवा। वदा। सो३अभि। गाअर्चिक्रदात्। पुना
 ३र ४र ५    १र     २  १     २  ३  ४   ५     ३र
३४औहोवा। नोवा। रा३मति। एषिअव्ययाम्। ग्यो
२   ३र ४र ५     १     २  १     २    ३  २   ४
मो३४औहोवा। नयो। निघृत। व। तमा३सा५दाई५

* ऊ० गा० १०प्र० २ख० ४सा०।

२ १ १ २ १ २ २ ४ र

अचिक्रादा२३त्। पू२३ना। नो२३वा३४। रमतिये

५ २ १ १ २ १ २ २

षिम। व्या३याम्। य्या२३यिनो। ना२३यो३४। नि

४ ५ ३ २ ४ २ १ २

ष्कृतव। नमा३सा५दा६५६त्॥(१) पर्ज्जा। वाचायि।

१ र २ १ १ र र

न्याःपितामहिषा। सुपर्णायिना२ः। नाभापृथिव्यागि

२ १ १ २ १ २

रिषू। दयन्दाधा२३यि। स्वा२३सा। रा२३आ३४

३०४, ३, ४र ५र २ १ १ २ १ २

पोअभिगाउद्वा। सा३रान्। सा२३ग्रा। वा२३भा३४

३४र५र ३र २ ४ २ १

यिः। वसतेवो। तेवा३ध्वा५रा६५६यि॥(२) कवो।

२ १ र २ र १

वाचायि। वायिधस्यापरियायि। षिमाचायिना२म्।

१ र र २ १ १ २

मात्योनवछोअभिवा। जमर्षासा२३यि। आ२३पा।

१ २ २ ४र र ५ २ २ १

सा२३यिधा३४न्। दुरितासोमनः। मा३र्डा। घा२३

२ १ २ २ ४ ५र ३ २ ४

र्ना। वा२३सा३४। नःपरिया। सिना३यिर्णा५यिजा

६५६(३)॥ २० *॥ [५] १३

* क० मा० २३प्र० २ख० २०सा०।

अथ दशमे खण्डे—

प्रगाथात्मके प्रथम-सूक्ते,

प्रथमा।

१ २ २ ३ १र २र
आयन्तइवसूर्य्यं विश्वेदिन्द्रस्यभक्षत।
१२ २ १र २र३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः॥ १*॥

हे अस्मदीया जनाः! "आयन्त इव" सूर्य्यं यथा समाश्रिता रश्मयः सूर्य्यं भजन्ते, तथा "इन्द्रस्य""विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत। "वसुजातः" प्रादुर्भूत इन्द्रः यानि "वसूनि" धनानि "ओजसा" बलेन "जनिमा" जनिष्यमाणानि करोति अतो "भागं न" पित्र्यं भागमिव तानि धनानि "प्रति दीधिमः" प्रतिधारयेम॥

"जातोजनिमानि"-"जातेजनिमानि"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १र २र ३ १र २र ३ १ १
अलर्षि†रातिंवसुदामुपस्तुहिभद्राइन्द्रस्यरातयः।
१ २ ३ १ २ ३ १र २र३ १ २ ३ १ १ ३ १ २
योअस्यकामंविधतोनरोषतिमनोदानायचोदयन्॥२‡॥ १४

हे स्तोतः! "अलर्षिरातिम्" अपापक-दानम् अपापिष्ठस्य दातारइत्यर्थः [अलर्षि-पद-समानार्थमनर्श-पदं यास्केन व्याख्या-

* ऋ॰ चा॰ ३, १, ३, ५ (२भा॰ ५५१ पृ॰) = ऋ॰ वे॰ ७, २, ३, ४।

† "अलऋषि"—इति क॰ पु॰ पाठः।

‡ ऋ॰ वे॰ ७, ७, ३, ४।

तम्—"अनर्शरातिमनश्लील-दानमश्लीलं पापकम्"-इति (निरु० नै० ६,२३)] "वसुदां" धनस्य दातारमिन्द्रम् "उप स्तुहि"* यतः "इन्द्रस्य" "रातयः" दानानि "भद्रा" कल्याणानि महदैश्वर्यकारीणीत्यर्थः। "यः" इन्द्रः स्वकीयं "मनः" "दानाय" अभीष्ट-प्रदानाय "चोदयन्" प्रेरयन् "विधतः" परिचरतः "अस्य" स्तोतुः "कामम्" इच्छां "न रोषति" न हिनस्ति। तमिन्द्रमुपस्तुहीति सम्बन्धः॥

"अलर्षिरातिम्"—इति छन्दोगाः पठन्ति, "अनर्शरातिम्"—इति बह्वृचाः; "योअस्य"-"सोअस्य"—इति च॥२॥ १४

२र २ १
॥ आयन्तीयम् ॥ आयन्तइवसू१रायाम्। विश्वा२
१ १ १ २ २ २ १र
यिद्द्रा२। स्यभा२त्ताता। वामूनिजातोजनिमा। नि
१ २ १ २र १ १ २ १र
योजा१सा२। प्रतिभागन्नदी२घिमः। प्रा२इती। भा
२ २ १ ३ २ १ ५ २
गान्नाइदा। ऊम्। धिमा३ः। ओ२३४वा॥(१) प्रति
र २ १ १र १
भागन्नदा१यिधायिमाः। प्रता२यि। भागा२म्। न
१ २ र १ २ र १ २
दा२यिधायिमाः। आक्तर्षिरातिम्बसदाम्। उपास्व१

* 'उपस्तुहि—समीपे स्थित्वा स्तुहि'—इति वि०।



Digitized by Google

२ १२ २ १ १ २ १ २ १ २
हायि। भद्राइन्द्रस्यरातयः। भा२३द्राः। इन्द्रास्या३

२ १ ३ २ १ ५ १ २
रा। ऊम्। तया३ः। औ२३४वा॥(२) भद्राइन्द्रस्य

२ १ १ १ १
रा१तायाः। भद्रा२इन्द्रा२। स्यरा२तायाः। याश्च

२ २ १ २ १ २ ११ २ १२ २ २ २ १
स्यकामम्बिधतः। नरोषा१ता२यि। मनोदानायचोद

२ १ २ १२ २ २ १ १ १
यन्। मा२३नाः। दानाया३चो। ऊम्। दया३।

१ ५ ३ १ १ १ १
औ२३४वा। हे२३४५(३)॥ ८ *॥ [१]

२२ २२ १ २ १
॥ निषेधम ॥ आयन्तइवा३सूरियाम्। विश्वायिन्द्रा।

२ १ १२ १ १ ४ ५ २ ३
स्यभक्षता२। इहा३। वासू३नायिजा। हाहौ२३४

५ १ २ १ २ २ १ २ १ २ १ २
हा। तोजनिमा। नियोजा२३सा। इहा३। प्राता

४ ५ २ १ ५ ३ २ ४
३यिभागाम्। हाहो२३४हा। नदा३यिधा५यिमा६५

३ १ १ १ १
६ः। हे२३४५(३)॥ २ †॥ [२] १४

---

* ऊ० गा० ५प्र० २अ० ८सा०।

† ऊ० गा० १प्र० २अ० २सा०।

Digitized by Google

अथ प्रगाथात्मके द्वितीय-सूक्ते--

प्रथमा।

१२ २३१२ ३१२ ३ १२
यतइन्द्रभयामहेततोनोअभयङ्कृधि।
१२ ३ १उ ३१२२ २३१उ ३१र २र
मघवञ्छग्धितवतन्नऊतयेविद्विषोविमृधोजहि॥१*॥

हे "इन्द्र!" "यतः" हिंसकान् "भयामहे" वयं, ततः "नः" अस्मभ्यम् "अभयं" "कृधि" कुरु। हे "मघवन्" धनवन्निन्द्र! "नः" अस्मानुद्दिश्य "तत्" तस्यै "तव ऊतये" त्वत्कर्त्तृकायै रक्षायै "शग्धि" शक्तो भव। किञ्च "वि द्विषः" अस्मद्द्वेष्टॄन् विजहि; "वि मृधः" अस्मद्धिंसकान् विजहि॥

"ऊतये"-"ऊतिभिः"—इति पाठौ॥ १॥

अथ द्वितीया।

१र २र ३१२ ३२उ ३१ २ ३२
त्वꣳहिराधसस्पतेराधसोमहःक्षयस्यासिविधर्त्ता।
१२ ३१२ ३१२
तन्त्वावयम्मघवन्निन्द्रगिर्वणःसुतावन्तोहवामहे॥२†॥१५

हे "राधसस्पते" धनस्य स्वामिन्! "त्वं हि" त्वं खलु "महः" महतः "राधसः" धनस्य "क्षयस्य" गृहस्य च ‡

---

* ऋ० स० ३, २, ४, २ (१भा० १६४ पृ०) = ऋ० वे० ६, ४, ३०, १।

† ऋ० वे० ६, ४, ३०, ४।

‡ 'क्षयो निवासः, तस्य'—इति वि०।

"विधर्त्ता असि हि" अस्मभ्यं दातुं धारको भवसि खलु। हे "गिर्वणः" गीर्भिर्वननीय! "मघवन्" धनवन्निन्द्र! "तं" तादृशं "त्वा" त्वाम् "वयं" "सुतावन्तः" अभिषुत-सोमाः "हवामहे" आह्वयामः।

"राधसस्पते"-"राधस्पते"—इति पाठो, "विधर्त्ता"-"विधर्त्ते"—इति च॥२॥१५

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य दशमः खण्डः *॥१०॥

१ १ १ २२ १ २ २ २

॥समन्तम॥ यतइन्द्रभयामहायि। ततोनोआभ

१ १ २ १ २

यङ्कृधायि। मघवा२३का। ग्धायितवनत्। नऊतायो।

२ २ ३२ २ १ २ १ २ १

औहो३४वाहायि। वि। द्वायिषो२३वी३। होवा३हा

२ १२ २ १ २१ १ २२

३हायि। मृधोजा१२३हा३४३यि॥(१) विद्विषोविमृधोज

१ २ २ १२ २

हायि। विद्विषोवायिमृधोजहायि। तुवं हा२३यिरा।

१ १ ३२ १ ३२ २ १ २

धसोमाहा। औहो३४वाहायिच। यास्या२३सी३।

* 'उक्तो माध्यन्दिनः पवमानः नवममह:। वामदेव्यं मैत्रावरुणं साम, आयन्तीयं अच्छावाकं साम, गायत्र मच्छावाकं साम च'—इति वि०।

Digitized by Google

१ २ २ १ २ १ २ १र २ १
होवा३हायि। विधा२३र्म्मा३४३ ॥(१) जयन्नासीविधर्म्मा।
र २ १ २ १ २ २र २
तन्वावा२३याम्। मायवन्नि। द्रगायिर्वाणा। औहो
२र २ १ २ १ ० २
३४वाहायि। सु। तावा२३न्ता३। होवा३हायि। ह
१र २ १
वामा२३हा३४३यि। ओ२३४५ई। डा(३) ॥ १०* ॥ [१] १५

अथैकादश-खण्डे†—

त्वंसोमेति-त्र्यृचात्मकं प्रथमं सूक्तम्‡,

तत्र प्रथमा।

१ २ ३ १ ३ १र २र ३ २
त्वꣳसोमासिधारयुर्म्मन्द्रओजिष्ठोअध्वरे।
१ २ ३ १ २
पवस्वमꣳहयद्रयिः ॥ १¶ ॥

हे "सोम!" अभिषूयमाण-पवमान! "मन्द्रः" मादयितृतमः "ओजिष्ठः" ओजस्वितमः त्वम् "अध्वरे" हिंसा-रहिते ऽस्मदीये यज्ञे "धारयुः" अभिषव-धारा-कामः "असि" भवसि।

---

* ऊ० गा० ४प्र० २अ० १०सा०।

† 'इदानीमारभ्य पवमानः'—इति वि०।

‡ 'त्वं सोमासि धारयुरिति चतस्रऋक्षु प्रभृतीनि सामानि साम्नामार्षाणि'—इति वि०।

¶ ऋ० वे० ७, २, १२ १।

ततः "त्वं" "मंहयद्रयिः" स्तोतृभ्यः प्रदीयमान-धनः सन्* "पवस्व" द्रोणकलशे ग्रहादिषु दशापवित्रेण पूतो भव [ यद्वा, "धारयुः" तद्वदर्थे भाष्यत इति मत्वर्थीयो युस् ]। हे सोम! त्वं धारावानसि ततः पवस्वेति सम्बन्धः॥ १॥

अथ द्वितीया।

१ १ २ ३ १ २ ३ १ २ ३ १ २
त्वꣳ सुतो मदिन्तमो दधन्वान्मत्सरिन्तमः।
१ २ ३ १२ ३२
इन्दुः सत्राजिदस्तृतः॥ २†॥

हे सोम! "सुतः" अभिषुतः "त्वं" "मदिन्तमः" अतिशयेन मदयुक्तोऽसि। कीदृशस्त्वम्? "दधन्वान्" यज्ञस्य धारकः, "मत्सरिन्तमः" अतिशयेन मदकारी,‡ "इन्दुः" सोमः, "सत्राजित्" बहूनां जेता,¶ "अस्तृतः" केनाप्यहिंसितः॥

"मदिन्तमः"-"नृमादनः"—इति पाठो, "इन्दुः सत्राजिदस्तृतः"—"इन्द्रायसूरिरन्धसा"—इति च॥ २॥

अथ तृतीया।

१ २ ३ १२ ३२ ३क२र ३ १ २
त्वꣳ सुष्वाणो अद्रिभिरभ्यर्ष कनिक्रदत्।
१ २ ३ १ २ ३ १ २
द्युमन्तꣳ शुष्ममाभर॥ ३§॥ १६

---

* 'यद्यपि मंहतिः पूजार्थः तथाप्यत्र लाभार्थो द्रष्टव्यः'—इति वि०।

† ऋ० वे० ७, २, १३, २।

‡ 'मत्सरिन्तमः—मदनीयतमः—इति वि०।

¶ 'सत्राजित्—सदा जेता अथवा सहजेता'—इति वि०।

§ ऋ० वे० ७, १, १२, २।

हे "पवमान" सोम! "अद्रिभिः" ग्रावभिः "सुष्वाणः" सुन्वानः अभिषूयमाणस्त्वं "कनिक्रदत्" भृशं शब्दं कुर्वन् "अभ्यर्ष" कलशं पात्राणि चाभिगच्छ। किञ्च "द्युमन्तं" दीप्तियुक्तं "शुष्मं" शत्रूणां शोषकं बलं वा "आभर"* ॥

"आभर"-"उत्तमम्"—इति पाठौ ॥ २ ॥ १६

॥ आश्वघ्नम् ॥ आऔहोवाहायि। तुवᳯसोमा। सिधा। रयुः। ऐहीयैहो१। मान्द्रओजिष्ठोआध्वरे। ऐहीयैहो१। आ२यि। पावा२स्वामा२। ह्ययत्। रा२या२३४औहोवा ॥(१) आऔहोवाहायि। तुवᳯसुता:। मद्दायि। तमः। ऐहोयैहो१। दाधन्वान्मत्स रायिन्तमः। ऐहीयैहो१। आ२यि। आयिन्द्र२:सा त्रा२। जिद। स्ता२त्तां२३४औहोवा ॥(२) आऔ होवाहायि। तुवᳯसुषा। णोआ। द्रिभिः। ऐहीयै हो१। आभियर्षकनायिक्रदत्। ऐहीयैहो१। आ२

* सर्वेदमिति प्रतीक-पाठं सर्गस्य वैसारमिति तद्व्याख्यानपाठ विवरणे प्रामादिक इव उपलक्ष्यते।

१ १ १र ३ ५र र
यि। द्यूमा२न्नाप्नू२। आमा। भा२रा२३४औहोवा।
१ १ र २ ३ १ १ १ १
प्नुक्ष्वाक्रता२३४५:(३) ॥ ११* ॥ [१]

३४ ५र र र २ ३ ५
॥ शाम्मदम्॥ तुवꣳसोमासिऐ। चौऐचौ२३४या।
१र १ ५ १ २ र १
धारयुरै२हौ३या। मन्द्रऔजिष्ठोअध्वरऐ२हौऐ२चौ३
२ १ २ २ १ ५ ४
या। प्रावाखामा३१२३। चयो२३४वा। रा५यो६चा
३४ ५ र र २ ३ ५ १
यि ॥(१) तुवꣳसुतोमऐ। होऐहो२३४या। दिन्तमऐ
१ ऽ २ २ र १ ऽ २
२हौऐ२चौ३या। दधन्वान्मधुरिन्तमऐ२चौऐ२चौ३या।
१ २ २ १ ५ ४ ५
आयिन्दूःसात्रा३१२३। जिदो२३४वा। स्ता५र्चौ६हा
३४ ५ र र २ ३ ५ १
यि ॥(२) तुवꣳसुषाणऐ। चौऐहो२३४या। अद्रिभि
१ २ १ १ ऽ २
रै२चौऐ२चौ३या। अभियर्षकनिक्रदद२चौऐ२चौ३या।
१ २ २ १ ५ ४ ५
द्यूमान्नाꣳप्न ३ १ २ ३। आसो २ ३ ४ वा। भा५रो६चा
वि(३) ॥ १२† ॥ [२]

---

* ऊ० गा० ५प्र० २अ० ११सा० ।

† ऊ० गा० ५प्र० २अ० १२सा० ।

Digitized by Google

२१ ४र र ५

॥ द्वावसुनिधनम् ॥ तुव॑ꣳसो२३मासिधारयुर्द्दोउ ।

१ २र र १ २ १ २ २ १

मान्द्रओजि । ष्ठोआध्वा१रा२३यि । द्दोवा३द्दायि । प

२ १२ १ १ २ ५र

वास्वा१मा२३ । द्दोवा३द्दा । द्दयत् । रा२या२३४औ

र २१ ४र र ५ १ २र

द्दोवा ॥(१) तुव॑ꣳसू२३तोमदिन्तमोद्दाउ । दधन्वान्मत्स

१ २ १२ १ १ २

रायिन्ता१मा२३ः । द्दोवा३द्दायि । इन्दूःसा१त्रा२३ ।

१ १ २ १ २ ५र र २

द्दोवा३द्दा । जित् । स्तार२त्ता२३४औऔहोवा ॥(२) तु

१ ४र र ५ १ २ १ २

व॑ꣳसू२३षाणोअद्रिभिर्द्दोउ । अभियर्ष । कनायिक्रा१

१ २ २ १ २ १ २

दा२३तु । द्दोवा३हायि । द्यु मान्ता१ꣳशू२३ । होवा

२ १र २ ५र र २ २र १

३द्दा । धममा । भा२रा२३४औहोवा । ए३ । द्वाव

२१११ १

सू२३४५(३) ॥ १३* ॥ [३]

१ र २र १

॥ प्रतीचीनेडक्काशीतम् ॥ त्व॑ꣳसोमासि । धा२रयूः ।

२र र १ ७ ३र २ १

मान्द्रओजि । ष्ठोआध्वरा२३४यि । द्दाद्दोयि । पवस्व

---

* ऊ० गा० ५प्र० २ख० १२सा० ।



Digitized by Google

२ २ १ ४ ५ १ २
माꣳहा३यात्। रयायिः। औ२३होवा॥(१) त्वꣳसु

१र २ १ १प १ ०
तोम। दा२यिन्तमाः। दाधन्वाम्म। त्वरायिन्तमा२

१र २ १ २ २ १ २
३४ः। हाहोयि। इन्दुःसत्राजी३दा। स्तुता। औ३

४ ५ १ १र १ २
होवा॥(२) त्वꣳसुषाणः। आ२द्रिभायिः। आभियषो

१ ० ३र २ १ २ २
कनायिक्रदा२३४त्। हाहोयि। द्युमन्तꣳभूष्मा३मा।

१ २ ४ ५ ४ ५
भरा। औ३होवा। ई३डा(३)॥१४*॥[४]

१ र र र र १ २ १
॥हाविष्कृतम्॥ त्वꣳसोमासिधाहाउरायूः। मन्द्र

र र २ १
ओजायि। ष्ठोआध्वा२३रायि। पवा२हो१। स्वा२३

२ १ ३ ५र र २ र
मा। चयत्। रा२या२३४औहोवा॥(१) त्वꣳसुतोम

र र १ २ १ र २ १
दाहाउतामाः। दधन्वाम्मा। त्वरिन्ता२३माः। इन्दू

२ १ ३ ५र र
२र्हो१यि। सा२३त्रा। जिद्। स्ता२र्त्ता२३४औहो

१ र र र १ २ १
वा॥(२) त्वꣳसुषाणआहाउद्रायिभायिः। अभियषा।

---

* ऊ० गा० ५प्र० २अ० १४खा०।

२ २ १र
कनिक्रा२३दात्। द्युमा२श्चो१। ता२३ऌमू। यमा।
२ ५र५र २ १२११११
भा२रा३३४औहोवा। दविक्षु तेर२३४५(३) ॥१५*॥[५]१६

अथ तृचात्मके द्वितीय-सूक्ते—

प्रथमा।

१२ ३१२ ३२३ १ २ ३१२
पवस्वदेववीतयइन्दोधाराभिरोजसा।
२ ३२ १२
आकलशम्मधुमान्त्सोमनःसदः॥ १† ॥

हे "इन्दो" सोम! "देववीतये" देवानां भक्षणाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम!" "मधुमान्" मदकर-रसवान् त्वं "नः" अस्मदीयं "कलशं" द्रोणाभिधानम् "आसद" आसीद [ सदेर्लुङि रूपम् ] ॥ १ ॥

अथ द्वितीया।

१२३१ २३२३२ ३११२
तवद्रप्साउदप्रुतइन्द्रम्मदायवावृधुः।
२ ३ १ २ ३१ २३१२
त्वान्देवासोअमृतायकम्पपुः॥ २‡ ॥

* ऊ० गा० ५प्र० २ख० १५गा०।

† ऋ० षा० ६, २, ३, ६ (२भा० २१३ ४०) = ऋ० वे० ७, ५, १०, २।

‡ ऋ० वे० ७, ५, १०, ३।

Digitized by Google

"उद्प्रुतः" वसतीवर्य्याख्यमुदकं प्रति गच्छन्तः* [यद्वा, उदकस्य निर्गमयितारः] "तव" स्वभूताः "द्रप्साः" द्रुतगामिनो रसाः† "मदाय" मदार्थम् इन्द्रम् "वावृधुः" वर्द्धयन्ति । ततः "देवासः" देवा इन्द्रादयः "कं" सुखकरं‡ "त्वाम्" "अमृताय" अमरणार्थं "पपुः" पिबन्ति ॥ २ ॥

अथ तृतीया ।

१ २ ३ २ २ ३ १
आ नः सुतास इन्दवः पुनाना धावता रयिम् ।
२ १ २ ३ १ २
वृष्टिद्यावो रीत्यापः स्वर्विदः ॥ ३¶ ॥ १७

हे "सुतासः" अभिषूयमाणाः ! हे "इन्दवः" दीप्ताः पात्रेषु चरन्तो वा "रीत्यापः" येः पृथिवीं प्रति स्रवणशीला आपः, तादृशा हे सोमाः ! "पुनानाः" पूयमानाः यूयं "नः" अस्मभ्यं "रयिम्"§ "आ धावत" आगमयत । कीदृशाः ? "वृष्टिद्यावः"‖ वृष्टिमभि द्यौर्यैः क्रियते, वृष्ट्यभिमुख-द्युलोकवन्तः "स्वर्विदः" सर्वस्य लम्भकाः** ॥ ३ ॥ १७

---

* 'उद्प्रुतः—उदकेन प्लाविताः'—इति वि० ।

† 'द्रप्साः—द्रव्यभूताः सोमाः'—इति वि० ।

‡ 'कं—आतिभूतम् अथवा कम् उदकभूतम्—इति वि० ।

¶ ऋ० वे० ७, ५, १०, ४ ।

§ 'रयिं—सोमाख्यं धनम्'—इति वि० ।

‖ 'वृष्टिद्यावोरीत्यापः—यथा द्युलोके भवान् वृष्टिः रीतिभिः चङ्गातः'—इत्यादि वि० ।

** 'स्वर्विदः—स्वर्गस्य वेत्तारः'—इति वि० ।

२ २ २ १ १ २२
॥ वैश्वमनसम् ॥ पवस्वदेववीता३याथि। आयिन्दो

१२ ३ २ १ २ २ १ २ १ २२ ३ १ १ १ १
धारा२। भिरो३४५। जसआकलशम्मधुमान्सो२३४५।

१ १ ३ ५२२ २ २
मना२ः। सादा२आ२३४औहोवा ॥(१) तवद्रप्सोउदप्रु

२ १ २ १ ३ १ १ २ २ २२ १२
३ताः। आयिन्द्रम्मदा२। यवा३४५। वृधुरात्वान्देवा

२२ १ ३ १ १ १ १ १ १ ३ ५२ २
सोअमृता२३४५। यका२म्। पापूरा२३४औहोवा ॥(२)

२ २ २ १ २२ १२ ३ १ १
आनःसुतासइन्दा३वाः। पूमानाधा२। वता३४५। रयि

२ २ १ २ २२२ २ ३ १ १ १ १ १ ३
मावृष्ट्याबारीत्यापा२३४५ः। सुवा२ः। वोयिदा२आ२

५२ २ ३ १ १ १ १
पा२३४औहोवा। ऊ२३४५(३) ॥ १७* ॥ [१]

२ २ १ १ २ १
॥ सुज्ञानम् ॥ पवस्वदा। ववीतयाथि। इन्दोधा

२ १ २२ १
रा२। भिरोजसा। आकलाशा२म्। मधु। मा२

३ ५२ २ १ २ २
न्सो२३४औहोवा। मनःसदए३ ॥(१) तवद्रप्साः। उद्

१ २ १ २ १ २ २ १ २
प्रुताः। इन्द्रम्मादा२यिवावृधः। तुवान्दायिवा२। सा

---

* ऊ० गा० ५प्र० २ख० १७सा०।

१ २ ५र र १ २ २र
अ। मा२र्त्ता२३४औहोवा। तकम्पुरे३ ॥(२) आनः

१ २र १ र १
सुता। सइन्दवाः। पुनानाधा२। वतारयायियिम्।

२ १ २ १ ३ ५र र १ २
वृष्टिद्यावा२ः। रीति। ओ२पा२३४औहोवा। सुवर्वि

१ १ १ १ १
दए३उपा२३४५(३) ॥ १८* ॥ [२] १७

अथ तृचात्मके तृतीय-सूक्ते—

प्रथमा।

२ ३ १ २ ३ १र २र ३ १ २ ३ १ २
परित्यꣳहर्यतꣳहरिम्बभ्रुम्पुनन्तिवारेण।

१ ३ २उ ३ २उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳइत्परिमदेनसहगच्छति ॥ १† ॥

"हर्यतं" सर्वैः स्पृहणीयं "हरिं" हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्यं" तं सोमं "वारेण" वालेन पवित्रेण "परि पुनन्ति" परिशोधयन्ति "यः" सोमः "विश्वान्" एतत्सर्वानिन्द्रादीन् देवान् अनेन "मदेन" मादकेन रसेन "सह" "परि गच्छति" ॥ १ ॥

---

* ऊ० गा० ११प्र० २अ० १९सा०।

† ऋ० आ० ६, २, १, ८ (२भा० ११७४०) = पुनरिहैव ८, २, ८, ३ = ऋ० वे० ७, ४, २४, १।

अथ द्वितीया।

२उ ३ १२ ३ १२ ३ १ २
द्वियम्पञ्चस्वयशसꣳसखायोअद्रिसꣳहतम्।
३१र २र३ २ ३ ३ १२ ३ १ २
प्रियमिन्द्रस्यकाम्यम्प्रस्नापयन्तऊर्म्मयः॥ २* ॥

"द्विः पञ्च"† दश-सङ्ख्याकाः "सखायः" समान-ख्याना अङ्गुलयः ‡ "स्वयशसं" स्वभूत-यशस्कम् ¶ "अद्रिसंहतम्" ग्रावभिरभिषुतम् "इन्द्रस्य प्रियं" "काम्यं" सर्वैः काम्यमानम् "ऊर्मयः" § [ द्वितीयैकवचने प्रथमा-बहुवचनम् ] ऊर्मिं प्रभूततरं "यं" सोमं "प्र स्नापयन्ते" वसतीवरीभिः प्रकर्षेण सेवयन्ति [ यद्वा, ऊर्मय इत्यङ्गुलि विशेषणं प्रभूता इति ] ; तं सोमं पुनन्तीति पूर्वेण सम्बन्धः॥

"सखायः"-"स्वसारः"—इति पाठौ, "प्रस्नापयन्तऊर्मयः"-"प्रस्नापयन्त्यूर्मिणम्"—इति च॥ २॥

अथ तृतीया।

१ १ ३ १ २ ३ १र २र
इन्द्रायसोमपातवेवृत्रघ्नेपरिषिच्यसे।
१ २ ३ १ २ ३ १ २ ३ १ २
नरेचदक्षिणावतेवीरायसदनासदे॥ ३ ‖ ॥ १८

* ऋ० वे० ७, ४, १०, ६।

† 'द्विः—द्विःकृत्य। यं सोमं। पञ्च ऋत्विजः'—इति वि०।

‡ 'सखायः—ऋत्विजः'—इति वि०।

¶ 'स्वयशसं—स्वयशसा सम्पन्नम्'—इति वि०।

§ 'ऊर्मयः—उदक-सङ्घाताः'—इति वि०।

‖ ऋ० वे० ७, ४, २४, ४।

Digitized by Google

हे "सोम !" "वृत्रघ्ने" वृत्रस्य हन्त्रे "इन्द्राय" [ षष्ठ्यर्थे चतुर्थी ] इन्द्रस्य "पातवे" पानार्थं "परिषिच्यसे" परितः पात्रेषु सिच्यसे वसतीवरीभिर्वा । किञ्च "दक्षिणावते" ऋत्विग्भ्यो दक्षिणा-दानेन वर्तते, "वीराय" विक्रान्तायेन्द्राय हवींषि दातुं "सदनासदे" यज्ञ-यज्ञे सीदते,* "नरे"† मनुष्याय यजमानाय तस्मै फल-प्रदानार्थं परिषिच्यसे ॥

"वीराय"-"देवाय"—इति पाठौ ॥ ३ ॥ १८

५ २ २ ४ ५
॥ गौरीवितम्‡ ॥ परि । त्यꣳहा३ । र्यंतꣳहरायिम् ।
१ र र १ र र २ ४र
बभ्रुम्पुनन्तिवारेणार ३ । योदेवान्वा३१२३यि । श्वाꣳ
१र २ ४ ५ ४
श्चाऽयित्पराथि । मादेनसा३१२३ । हगोवा । क्षाऽतो
५ ५ ३ २ ५ १ र
ईहायि ॥(१) द्विर्यम् । पञ्चा३ । स्वयशमाम् । सखा
र १ २ ४
योअद्रिसꣳहता२३म् । प्रायमिन्द्रा३१२३ । स्यकाऽमि
१ र र ४ ५ ४ ५
याम् । प्रास्नापया३१२३ । तश्रोवा । माऽयोईहायि ॥(२)
५ र ३२ ४र५ १ र
इन्द्रा । 'यसो३ । मपातवायि । वृत्रघ्नेपरिषिच्यसा२३

---

* 'सदनासदं—यानि यज्ञे सदनानि द्रोणकलश-प्रभृतीनि, तेषु आसीदति ।' इति वि० ।

† 'नरे—नराकारे'—इति वि० । ‡ "महागौरीवितम्"—इति ख०-पु०-पाठः

Digitized by Google

यि। नारेघदा३१२३। श्रिणापूवतायि। वायिरायसा

३१२३। दनोवा। सा५दोई्हायि(३)॥ १८*॥ [१]

॥ निहवम्॥ आयिही३। आयिही। एहिया।

ओ२३४वा। हायि। परित्य९हर्यता३९हारा३यिम्।

हारायिम्। हरा। ओ२३४वा। हायि। बभ्रुम्पुन

न्तिवा३रेणा३। रेणा। रेणा। ओ२३४वा। हायि।

योदेवान्विश्वा९ई३त्पारा३यि। परायि। परा। ओ२३

४वा। हायि। मदेनसहगा३च्छाता३यि। च्छातायि।

च्छता। ओ२३४वा। हायि॥(१) दिव्यम्पञ्चसया३

भासा३म्। भासाम्। भसा। ओ२३४वा। हायि।

सखायोभद्रिसा३९हाता३म्। हाताम्। हता। ओ

२३४वा। हायि। प्रियमिन्द्रस्यका३माया३म्। मा

* ऊ० गा० ५प्र० २ख० १८सा०।



Digitized by Google

याम् । मिया । ओ२३४वा । हायि । प्रजापयन्त ऊ३र्म्मीयाउ: । मया । ओ२३४वा । हायि ॥(२) इन्द्रायसोमपा३तावा३यि । तावायि । तवा । ओ२३४वा । हायि । वृत्रघ्ने परिषी३च्यासा३यि । च्यासायि । च्यसा । ओ२३४वा । हायि । नरे चदक्षिणा३वाता३यि । वाता यि । वता । ओ२३४वा । हायि । वीरायसदना३सा द्वा३यि । सादायि । सदा । ओ२३४वा । हायि । आयिही३ । आयिही । एहिया । ओ२३४वा । हा ३४ । औहोवा । ई२३४५(३) ॥ १८* ॥ [२]

॥ यद्वाहिष्ठीयम् ॥ परित्यꣳहर्य्यतꣳहरिम् । परि त्यꣳहोवा । यंतꣳहरायिम् । बभ्रुम्पू२३ना । तिवारे णा । योदेवा२३न्वायि । श्वाꣳइत्परायि । मदेनार३

* ऊ० गा० ५प्र० २अ० १९षा० ।

२ १ २ १ २ १ २
सा। इगच्छा२३ता३४३यि ॥(१) दिव्यं म्पञ्चस्वयशसम्।
१ २ १ २ २
दिव्यं म्पञ्चोवा। स्वयशसाम्। सखायो२३पा। द्रि
१ २ १२ २
सं५हताम्। प्रियमा२३यिन्द्रा। स्यकामियाम्। प्रव्रा
१२ २ १ २ २ २ १२ १
पा२३या। तजर्म्मा२३या३४३ः ॥(२) इन्द्रायसोमपात
५ २ १ २ १२ २
वे। इन्द्रायसोवा। मपातवायि। वृत्रघ्ना२३यिपा।
१ २ २ १२ २ २
रिषिच्यसायि। नरेचा२३दा। क्षिणावतायि। वीरा
२ १२ २ १
या २ ३ सा। दनासा२३दा३४३यि। ओ २ ३ ४ ५ई।
डा(३) ॥ २०* ॥ [३]

१११ २ १
॥ आसिताद्यम् ॥ परित्य५हर्य्यताम्। हरायिम्।
२ २ १ १ २ १
बभ्रुम्पुनन्तिवारे२३णा। योदे२वान्वा२यि। श्वा५ह
१ १ २ १ ५ ४
त्परायि। मादे२नासा२। हगोवा३ओ२३४वा। च्छा
५ २ १ २ २
पूतोई३हायि ॥(१) दिव्यं पञ्चस्वया। शसाम्। सखायो

* ऊ० गा० ५प्र० २ख० २०सा०।

२ १ १ १२
अद्रिसᳩ हा२३ताम्। प्राया२मायिन्द्रा२। स्यकामि
१ १ २ १ ५ ४
याम्। प्राशा२पाया२। नमोवा३ओ२३४वा। मा५
५ १२ २२ १ २
योहायि॥(२) इन्द्रायसोमपा। तवायि। वृत्रघ्नेप
२ १ १ १२
रिषिच्या२३सायि। क्षारे२यादा२। शिणावतायि।
१ १ २ १ ५ ४
वायिरा२यासा२। हमोवा३ओ२ ३ ४ वा। सा५दो६
५
हायि(३)॥१*॥[४]

२ २ ४५२ ५ २१
॥साध्रम्॥ परित्या३ᳩ हर्य्यतᳩ हरायिम्। बभ्रुं
२१ २१ २ ४ १२१२१२ २२
पुना२। तिवा३४५। रे२३४णा। योदेवान्विश्वाᳩ
१२२११११ १२ २ १ १२२ ५
इत्परा२३४५यि। मादाओ२३४वा। नासाओ२३४वा।
४ ५ २ ४५४ ५ २१
हगा५कृतायि॥(१) दिर्व्यम्या३व्वयग्रसाम्। सखा
१२ १ २१ २ ५ ११ २ १२
योआ२। द्रिसा३४५। हा२३४ताम्। प्रियमिन्द्रस्यका
२ ११११ १२ २ ५ १२ २ ५
मिया२३४५म्। प्राशाओ२३४वा। पायाओ२३४वा।

* ऊ० गा० ९प्र० १अ० १गा०।

Digitized by Google

४ ५ ६ २ ४२ ५ ४२ ५ १ १ २२
तऊ५मंयाः ॥(२) इन्द्रायाइसोमपातवायि। वृत्राघ्न्पा
२ १ ३ ५ १ २ १ १ २२ १ ११
२। रिषा३४५यि। च्या२३४से। नरेषद्विषावता२३
११ १ २ ३ ६ १ २ ३ ५ ४
४५यि। वाविराओ२३४वा। यासाओ२३४वा। दना
४
५सदायि। चौ५ई। डा(३) ॥ २* ॥ [५]

॥ वसिष्ठस्याकूपारम् ॥ परित्या२३ऽर्य्य। तऽ
१ ५ १ १ १ २ १२ २२ २ १
हा२३४राविम्। बभ्रू२म्पुना। तिवारेणा। येदेवान्वा२
यि। श्वाऽइत्परायि। मदेवासा२३। हा२३गा३।
२ ५ २ १ ४ ५ २ ३
क्वा३४५तोईदायि ॥(१) दिर्य्यस्या२३स्वस्य। यश्वा२३४
५ ५ १२ १ १ २ १
साम्। सखा२योषा। द्रिसऽहनाम्। प्रियमायि
२ १ २२ १ १ ४
न्द्रा२। स्यंकामियाम्। प्रश्नापाया२३। ता२३जा३
२ ५ २ १२ ४२ ५ २२ ३
मा३४५योईदायि ॥(२) इन्द्राया२३सोम। पाता२३४
५ १ १२ २ १ २२ १
वायि। वृत्रा२घ्न्पा। रिषिष्यसायि। नरेषादा२षि

* ऊ० गा० ६प्र० १ख० १सा०।

२ १ १२ २ १ १ ४ २
पावतायि । वीरायासा२३ । दा२३ना३ । सा ३ ४ ५

५
दोईहायि(३) ॥ ३* ॥ [६]

३ १ २ ४ ५
॥ श्यावाश्वम् ॥ परा३१यि । त्या३१२ह । र्य्यतम् ।

२ ४ ५ १ १२
हा ३ रिम् । एहिया । बा । धुम्युनन्तायि । वा ।

१२ १२ २ २ १२ १ ४
रेघा२ । एहिया२ । योदेवान्वायिश्वा३१२श्वा३यित् ।

५ १२ १२ २ १
पा २ ३ ४ रायि । ऐहा२यि । एहिया२ । मदेनस

१ ४ १ ५ ३ १
हा३गा३ । च्छा ३ ४ ५ तो ६ हायि ॥(१) दिर्य्या३१ म् ।

२ ४ ५ २ ४ ५ १ २ २
पा३च । स्रय । आ३सम् । एहिया । सा । खायोषद्रा

२ १ १२ १ २ ४
यि । स । हना२म् । एहिया२ । प्रियमिन्द्रास्या३का

५ १२ १२ २ १
३ । मा२३४याम् । ऐहा२यि । एहिया२ । प्रस्वाप

२ ४ २ ५ ३ १ २
यान्ता३ऊ । मा३४५योईहायि ॥(२) इन्द्रा ३ १ । या३

४२ ५२ २ ४२ ५ १ २ २
सो । मपा । ता३वे । एहिया । वा । चघूपरायि । षि ।

---

* ऊ० गा० ६प्र० १अ० ३सा० ।

१ १र २१ २ ४
च्यसा२यि। एहिया२। नरेचदाक्षा३यिणा३। वा२

५ २र १र र र १ २ ४
३४तायि। ऐहा२यि। एहिया२। वीरायसादा३ना

२ ५
३। सा३४५दोई२हायि(३) ॥ १* ॥ [७]

१ २ १
॥ आन्धीगवम्॥ परित्य१ह्यर्य्यंता१ह्वारायिम्। ब

२ १ १र र २र १र
भ्रुम्पु। नन्ता२३यिवा। ऊम्मा२१५२। रेणयोदेवाब्धि

२र १ २ २ १ १ १ १ १ १ २ २ १
श्वा१हृत्यरा२३४५यि। मादा३उवा। ना२सा। हा२

२ १ २ ४ ५ २
३गा। ऋता। औ३होवा ॥(१) दिव्यं मच्चस्तया१ग्रा

२ १ र २ १ १
साम्। सखायः। भद्रा२३यिसा। ऊम्मा२१५२। ह

२ १ र २ १ १ १ १ १ २ २
तप्रियमिन्द्रस्यकामिया२३४५म्। प्राहा३उवा। पा२

१ २ १ २ ४ ५ २ र र
या। ता२३ऊ। मया। औहोवा ॥(२) इन्द्रायसो

२ १ र २ १
मपा१तावायि। वृत्रघ्ने। परा२३यिषा। ऊम्मा२१५२।

१ र र १ १ २र २ १ १ १ १ १ २
च्यसेनरेचदक्षिणावता२३४५यि। वायिरा३उवा। या२

* ऊ० गा० १९प्र० २ख० १सा०।

सा। हा२३ना। सदा। यौ३होवा। हो५इ।
डा(३)॥२*॥[८]

॥ आसिताद्यम्॥ इन्द्रायसोमपा। तवायि। वृत्र
घ्ने परिषिच्यार२३सायि। नारे२वादा२। चिणावता
यि। वायिरा२यासा२। हनोवा३ओ२३४वा। सा५
दो६हायि॥(१) तᳪसखायःपुरु। रुचाम्। वयंयूय
श्चसूरा२३याः। आश्या२मावा२ जगम्बियाम्। सा
ने२मावा२। जपोवा३ओ२३४वा। स्ता५योइहायि॥(२)
परित्यᳪहर्यताम्। हरायिम्। बभ्रुम्पुनन्तिवारे२३
णा। योदे२वान्वा२यि। श्वाᳪइत्परायि। मादे२ना
सा२। हगोवा३ओ२३४वा। क्का५तो६हायि(३)॥१६†॥[९]

---

* ऊ० गा० १२प्र० २ख० १सा०।

† ऊ० गा० १४प्र० २ख० १६सा०।

Digitized by Google

३ र २र १ ४र र ५
॥ ऐडकौत्सम् ॥ इन्द्राय्योया२३। सोमपातवइया।
१ १र १ र १ र १ १र २ १
वृत्रघ्ने परिषिच्यसि। नारेचद। क्षिणावार३ताथि। वा
२ २ १ २ २ १र २
यिरा३च्चा। यासा३च्चा। दनासार२३दा३४३यि॥(१)
३ २र १ ४ र ५ १ १ २र १ २र १ २
तᳲसखोखा२३। यःपुरुहूतमोया। वयंयूयञ्चसूरयः।
१ र २ र १ २ १ २ २ १ २
आश्यामवा। जगन्धा२३याम्। सानाइहाथि। मावा
२ १ २ ३ र २ १
३च्चा। जपस्ता२३या३४३म् ॥(२) परोच्चित्या२३म्।
४ ५ २ १ २ १र र १ १ र २र
हर्य्यतᳲहरिमोया। बभ्रुम्पुनन्तिवारेण। योदेवान्वि।
१ २ १ २ २ १ २ २ १
श्वाᳲइत्या२३राथि। मादा३च्चाथि। नासा३च्चा। च्चग
२ २
च्छा२३ता३४३यि। ओ२३४५ई। डा(३)॥ १७*॥ [१०]
१ र २र १र २१
॥ प्लुष्वाप्लुष्वीयाद्यम्॥ इन्द्रायसोमपातवाथि। वृत्र
र २ १ २ १र २ १र २ र
घ्ने परिषिच्या२३साथि। नरेचदक्षिणावार३ताथि। वी
१र २ १ २र २ ४र र २ १ १ १ १
राया२३सा३। दार। नासा३४ओहोवा। दा२३४५

* ऊ० गा० १४प्र० २ख० १७गा०।



Digitized by Google

१ २र १र११ र २१र २
यि ॥ (१) तꣳसखायःपुरूरुचाम् । वयंयूयञ्चसूरा२३याः ।
१र र११ २ १र १ १
अश्यामवाजगन्धा२३याम् । सनेमा२३वा३ । जा २ ।
१२ ५र र ११११ १२१ ११
पस्ता३४औहोवा । या२३४५म् ॥(२) परित्यꣳहर्य्यतꣳ
२१ २१र २ १रर र २र
हरायिम् । बभ्रुम्पुनन्तिवारे२३णा । योदेवान्विश्वाꣳ
१ २ १र २ १ २१ ५र
इत्परि२३रायि । मदेना२३सा३ । हा२ । गच्छा३४औ
र २ ११११
होवा । ता२३४५यि (३) ॥ १८* ॥ [११]

२र १र २र२र २
॥ क्रौञ्चाद्यम् ॥ इन्द्रायसौहो । मापातवायि । वृ
र १ २ ४ २र१र
त्रघ्ने पा३ । रायिषाइयिच्या५सा६५६यि । नरेचदौहो ।
१र १र २र र १ २ ४
चौणावतायि । वीरायसा३ । दाना३सा५दा६५६यि ॥(१)
२ १रर २र१र १ र १ २
तꣳसखायौहो । पूरूरुचाम् । वयंयूया३म् । चासूर
४ २ र १ र २र१ २ र
रा५या६५६ः । अश्यामवौहो । जागन्धियाम् । सन
१ २ ४ २ १ र
मया३ । जापा३स्ता५या६५६म् ॥(२) परित्यꣳहौहो ।

---

* ऊ० गा० १४प्र० १ख० १८गा० ।

२र १ २ १ २ ४
र्यातꣳस्वरायिम्। बभ्रुग्पुना३। तायिवा३रे५पणा६५६।
२र र १र र २र १ १ र १ २
योदेवान्वैः्चो। स्वाꣳदूत्परायि। मदेनसा३। हागा
४
३च्छा५ता६५६यि(३) ॥ १८* ॥ [१२]

२ र १ २ २ ऽ
॥ रयिष्ठम्॥ इन्द्रायसो। मपाता३वायि। औ३
२ २ १र २ ३ १११ १ २ र
हो३वा। वृत्रघ्ने परिषिच्यसा२३४५यि। वृत्रघ्ने पा। रि
१ २ २ ऽ २ २ १ र २ १ २र ३ ११
षायिच्या३सायि। औ३हो३वा। नरेचदक्षिणावता२३
११ २ र १ २ २ ऽ २ २
४५यि। नरेचदा। क्षिणावा३तायि। औ३हो३वा।
र १र २ र १ ३ ११११ २र र १ २ २
वीरायसदनासदा२३४५यि। वीरायसा। दनासा३दा
ऽ २ २ २ र १ ३ २ २
यि। औ३हो३वा ॥(१) तꣳसखायाः। पुरूरुचाम्।
ऽ २ २ १ २र १ २र१ ३ १११ १ २ र
औ३हो३वा। वयंयूयञ्चसूरया२३४५ः। वयंयूयाम्।
१ २ २ ऽ २ २ १ र २ १र २ २ १ १
चसूरा३याः। औ३हो३वा। अश्यामवाजगन्ध्यिया२ ३
११ २ र १ २ २ ऽ २ २
३५म्। अश्यामवा। जगान्ध्या३याम्। औ३हो३वा।

* ऊ० गा० १४प्र० २ख० १९गा०।

१ र २ १ र २ २ १ १ १ १ २ र १ २ २
सनेमवाजपस्त्रियार२३४५म्। सनेमवा। जपास्त्रा३याम्।
ऽ २ २ २ १ २ २
औ३हो ३ वा ॥(२) परित्यꣳहा। यंताꣳहा३रायिम्।
ऽ २ २ १ २ १र र २ १ १ १ १ २
औ३हो३वा। बभ्रुम्पुनन्तिवारेणार२३४५। बभ्रुम्पुना।
१ २ २ ऽ २ २ १र २र १र २र १ २ २ १ १
तिवारे३णा। औ३हो३वा। योदेवान्विश्वाꣳइत्परार२३
१ १ १र र र र १ २ २ ऽ
४५यि। योदेवान्वायि। श्वाआयित्पा३रायि। औ३
२ २ १ र २ १ २ २ १ १ १ १ २र
हो३वा। मदेनसहगच्छतार२३४५यि। मदेनसा। ह
१ २ २ ऽ २ २ ऽ २ २ ऽ २
गाच्छा३तायि। औ३हो३वा। औ३हो३वा। ई३या।
ऽ २ ५ २ २
ई३या३४। हा। हाउवा३। ऊ२३४पा(३) ॥२०*॥[१३]
४ ३ ४ २ ४र
॥ यज्ञायज्ञीयम्॥ इन्द्राऽ५य। सो३मा३पाता
५ १ र २ १ २ २ १ १
वायि। वात्रघ्नपा। री३षायिच्चा३सायि। नरे२च।
२ १ २ २ १ र
दक्षा२३यिणा। ऊम्मायि। वा३तायि। वायिरायस
२ २ १ २ १ र र र
दना२सदाउ ॥(१) दायिताम्। सखाय:पुरुहूचंवयंयू

---

* ऊ० गा० १४प्र० २ख० २०सा०।

१ १२ २ १ १ र २
यामू। चा३सूरा३याः। अ्रा२म। वाजा२३गा।
१ २ २ १ र र २ २
ऊर्म्मायि। धा३याम्। सानेमवाजपा२स्तियाउ॥(२)
१ २ १ २ १ २ २
यामा। रित्य(ँ)द्दर्शतँ(ँ)रिम्बभ्रुम्पुना। ती३वारे३णा।
१र १र २ १ २ २
योदे२वान्। विश्वा(ँ)२३श्वा। ऊर्म्मायि। पा३रायि।
१ र ३ २
मादेनसद्दगा२च्छताउ(३)॥ २१* ॥ [१४]

१ २ १ २ १ २ १
॥ ऊर्द्ध्वत्वाष्ट्रीसाम ॥ परित्य(ँ)द्दर्यत(ँ)हरायिम्। बा
१ ३ २ २ ५ १र २र १र २र
भ्रू२म्बुना२। तिषा३४५। रे२३४णा। योदेवान्विश्वाँ
१२ ३ १ १ १ १ २ र २ १ २ १ २
इत्परा२३४५यि। मदेनसा। हगच्छा२३ता३४३यि॥(१)
१ २ १ २ १ १ १र ३ २
द्विर्य्यम्पञ्चस्वयशसाम्। साखा२योभा२। द्रिसा३ ४ ५।
२ ५ २ १ २ १र ३ १ १ १ १ ३ र २
हा२३४ताम्। प्रियमिन्द्रस्यकामिया२३४५म्। प्रस्नाप
१ २ १र २ १ र २ र १र २ १
या। तऊर्म्मा२३या३४३ः॥(२) इन्द्रायसोमपातवायि।
१ १र ३ २ २ ५ १ र २ १
वार्त्रा२घ्नेपा२। रिषा२३४यि। च्या२३४से। नरेचद

* ज० गा० १४प्र० २ख० २१सा०।

चिणावतार३४५यि । वीरायसा । दनासार३दा३४३यि ।
ओ२३४५ई । डा(३) ॥ ८* ॥ [१५]

॥ यज्ञायज्ञीयम् ॥ परा५यित्यम् । चार्या३त
चारायिम् । बाभ्रुम्पुना । ती३वारे३णा । योदे२वान् ।
विश्वं२३चा । ऊम्मायि । पा३रायि । मादेनसचगा
२च्छताउ ॥(१) नायिद्वायिः । यम्यम्बवयग्रसंसखा
योचा । द्रो३सां३हा३ताम् । प्रिया२मि । द्रक्षा २ ३
का । ऊम्मायि । मा ३ याम् । प्राचापयन्तऊ २ म्म
याउ ॥(२) याचायि । द्रायसोमपातवेवृत्रघ्नेपा । रौ३
चायिच्या३सायि । नरे२च । दचा२३यिणा । ऊम्मा
यि । रा३तायि । वायिरायसदना२सदाउ । वा ३४५ (३)
॥ ८† ॥ [१६]

---

* क० गा० १७प्र० १अ० ८सा० ।

† क० गा० १७प्र० १अ० ९सा० ।

२ १ ४
॥ आसितोत्तरम्॥ परायित्यार२३ऽ ह्यर्यं त ऽ हरिऽ
५ १ र १ १ २ २
श्चाउ। बभ्रुम्पुनन्तिवारे २ ३ णा। . योदेवा३न्वा ३ यि।
१ २ १ ५ १ २ २ २ १ ५
श्वाऽइत्पार२३४रायि। मदेना३सा३। च्छगोर२३४वा।
४ ५
श्चा५तोई्द्दायि(३) ॥ २* ॥ [१७]

२ १ २
॥ वाङ्निधनक्रौञ्चम्॥ परायित्याऽ द्दा३१२३४। र्यं
५ २ १ २ १ २ ५र ३र
तम्। हरा३यिम्। बभ्रुम्पुना३१२३४। तिवा। रे
२ १र १ २ र ५ ३ २
णा३। योदेवान्वा३१२३४यि। श्वाऽइत्। परा३यि।
२ १ २ ४ २ १ १
मदेनामा३१२३। च्छगापूञ्छताउ ॥(१) दिर्यम्याञ्चा३
५ ३ २ २ १र र १
१२३४। स्वय। ग्रसा३म्। सखायोम्ना३१२३४। द्रि
५ ३ १ २ १ २ ५र ३
स। हता३म्। प्रियामायिन्द्रा३१२३४। स्यका। मि
२ २ १ २ ४
या३म्। प्रख्तापाया ३ १ २ ३। तऊ५म्मं याउ ॥(२)
२ १ २ ५र ३ २ २ १ र २
इन्द्रायासो३१२३४। मपा। तवा३यि। वृत्रघ्नेपा३१२

* ऊ० गा० १७प्र० २ख० १सा०।

५ २ १ २ १ २ ५र
३४। रिषि। च्यसा३यि। नरेचादा३१२३४। विणा

३ १ २र १र २ ४
वता ३ यि। वीरायासा ३ १ २ ३। दना ५ सदाउ।

वा(३) ॥ ४* ॥ [१८] १८

अथ तृचात्मके चतुर्थ-सूक्ते—

प्रथमा।

१ २ १ २उ १ २ १ १ ३ २ ३ १र २र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ १† ॥

हे "सोम!" "अश्वो न" अश्व इव "निक्तः" वसतीवरीभिरद्भिर्निर्णिक्तः,‡ "वाजी" वेगवान् त्वं "महे" महते "दक्षाय" बलाय¶ "धनाय" धनार्थं "पवस्व" क्षर॥

"महे"-"क्रत्वे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ १
प्रतेसोतारोरसम्मदायपुनन्तिसोमम्महेद्युम्नाय ॥ २§ ॥

---

* ऊ० गा० २०प्र० २ख० ४सा०।

† छ० आ० ५, १, ५, ४ (१भा० ८७४ पृ०) ऋ० वे० ७, ५, २०, १०।

‡ 'अश्वो न निक्तः—न-शब्द उपमार्थीयः अश्व इव स्नापितः'—इति वि०।

¶ 'दक्षाय—समर्धये अथवा दक्षिणे प्रौढ़कर्मणे यजमानाय'—इति वि०।

§ ऋ० वे० ७, ५, २१, १।

"सोतारः" अभिषोतारः ऋत्विजः, हे सोम! "ते" तव स्वभूतं "रसं"* "मदाय" मदार्थं "पुनन्ति"। तदेवोच्यते—"मह" महते "द्युम्नाय" ["द्युम्नं द्योततेर्यशो वान्नं वेति (निरु० नै० ५,५) यास्कः] अन्नाय यशसे वा पुनन्ति सोमं शोधयन्ति यद्वा, सोममभिषूयमाणं रसं पुनन्तीति एकवाक्यतया योजनीयम्॥

"प्रते"-"तन्वे"—इति पाठौ ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र
शिशुञ्जज्ञानꣳहरिम्मृजन्ति

३ १ ३ १ २ ३ २ ३ १ २
पवित्रेसोमन्देवेभ्यइन्दुम् ॥ ३† ॥ १९

"शिशुम्" एषां पुत्रभूतं‡ "जज्ञानं" जायमानं "हरिं" हरितवर्णम् "इन्दुं" दीप्तं सोमं "देवेभ्यः" "पवित्रे"¶ "मृजन्ति" ऋत्विजा मार्जयन्ति ॥ ३ ॥ १९

२र २ र २ र १
॥ विधर्म्मम् ॥ ओहोइवा। ओहोइवा। ओहो

* 'रसं—वीर्यम्'—इति वि०।

† ऋ० वे० ७, ५, २१, १।

‡ 'शिशुं—प्रशंसनीयम्'—इति वि०।

¶ 'पवित्रे—वाक्यमये'—इति वि०।



Digitized by Google

२वा२३४ओहोइवा। पवस्वसोममहेदक्षायाय २ ३ ४ ५।

अश्वोननिक्तोवा२जीधना२या२३४५। प्रतेसोनारोरसम्म

दाया२३४५। पुनन्तिसोमम्महेद्युम्नाया२३४५। शिशु

ञ्जज्ञानꣳहरिम्मृजन्ती२३४५। पवित्रेसोमदेवेभ्यइन्दू२३

४५म् ॥(१) पवस्वसोमा२३४५। महेदक्षाया२ ३ ४ ५।

अश्वोननिक्ताः। वाजीधना२या२३४५। प्रतेसोनारा

२३४५ः। रसम्मदाया२३४५। पुनन्तिसोमा२३४५म्।

महेद्युम्नाया२३४५ ॥(२) शिशुञ्जज्ञाना१म्। हरिम्मृज

न्ती२३४५। पवित्रेसोमा२३४५म्। देवेभ्यइन्दू२३४५म्।

ओहो३वा। २। औहो२वा२३४ओहोइवा। ए३। विध

र्मा२३४५(३) ॥ ४* ॥ [१] १९

---

* ऊ० गा० ६प्र० १अ० ५सा०।

अथ त्र्यचात्मके पञ्चम-सूक्ते—

प्रथमा।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १र २र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्दुन्देवाअयासिषुः॥ १* ॥

"जातम्" प्रादुर्भूतम् "अप्तुरं" वसतीवरीभिः प्रेरितम् "भङ्गं" शत्रूणां भञ्जकम् "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् "इन्दुं" सोमं "देवाः" इन्द्रादयः "उपायासिषुः" उपगच्छन्ति॥ १॥

अथ द्वितीया।

१र २र ३ १ २ ३ २ ३ १ २
तमिद्वर्द्धन्तुनोगिरोवत्सꣳसꣳशिश्वरीरिव।
१र २र ३ १ २
यइन्द्रस्यहृदꣳसनिः॥ २† ॥

"यः" सोमः "इन्द्रस्य" "हृदंसनिः"‡ हृदयस्य सम्भक्ता भवति "तमित्" तमेव सोमं "नः" अस्माकं "गिरः" स्तुतिरूपा वाचः "संवर्द्धन्तु" संवर्द्धयन्तु। तत्र दृष्टान्तः—"वत्सं"

* ऋ० सा० ६, १, ३,१ (२भा० ४३ पृ०)=इहैव १, २, १८, २ (३भा०२६३ पृ०) = ऋ० वे० ७, १, २०, २।

† ऋ० वे० ७, १, २०, ४।

‡ 'हृदंसनिः -हृदिसंभः स्थितः'—इति वि०।

वालं "शिश्वरीरिव" यथा शिश्वर्यो वहपयस्कामातरो वत्सं सम्यक् वर्द्धयन्ति तद्वदित्यर्थः ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २ ३ २ ३ १ २
अर्षा नः सोम शङ्गवे धुक्षस्व पिप्युषीमिषम्।
१ २ ३ १ १
वर्द्धा समुद्रमुक्थ ॥ ३* ॥ २०

हे सोम !" त्वं "नः" अस्माकं† "गवे" "शं" सुखम्‡ "अर्ष" चरण। अपिच "पिप्युषीम्" प्रवृद्धाम्§ "इषम्" अन्नं ‖ "धुक्षस्व" प्रपूरय**। किञ्च हे "उक्थ्य" प्रशस्य ! †† "समुद्रम्" ‡‡ "वर्द्ध" ¶¶ वर्द्धय ॥

"अर्षा नः"-"अर्षाणः"—इति पाठौ, "उक्थ्य"-"उक्थ्यम्"—इति च ॥ ३ ॥ २०

---

* ऋ० वे० ७, १, २०, ५।

† 'नः अस्माकम्'--इति वि०।

‡ 'शंगवे—गवां सुखार्थम्'—इति वि०।

¶ 'अर्ष—गच्छ द्रोणकलशम्'—इति वि०। मूले त्वर्षेति दीर्घान्तः पाठः "ऋचोऽतस्तिङः (६, ३, १३५)"—इति तत्र दीर्घः।

§ 'पिप्युषीं—प्याम-समर्थाम्'—इति वि०।

‖ 'सोमलक्षणं'—इति वि०।

** 'धुक्षस्व—दुग्धम्'—इति वि०।

†† 'उक्था—उक्थानि सामानि'—इति वि०। एवञ्च "उक्था"—इति विवरण-पाठो गम्यते परं तत् प्रामादिकम् एव संहिता-पद-पुस्तकेषु तथा पाठादर्शनात्।

‡‡ 'समुद्रं—द्रोणकलशम्'—इति वि०।

¶¶ "वर्द्धा"—इति संहितायां दीर्घः।

Digitized by Google

१ र १ १र १
॥ अध्यम् ॥ उपोषुजा २तम्। अप्तुरोवा। गोभि
२ १ २ ३ २ १ २र १र
र्भङ्गाम्। परिष्कृताम्। इन्दुर्देवाअ। या२३। सि
२ १र १ र १
षाउवा। अूधिया२ ॥(१) तमिद्वर्धा२न्तु। नोगिरो
२ १ २ १ २ ३र १ १ २ १
वा। वत्सं॒संशायि। स्वरोरिवा। यइन्द्रस्यव। दा
२ १र १र
२३म्। सनाउवा। अूधिया२ ॥(२) अर्षानःसो२म।
१ २ १ २ १ २ ३र २ १ र २
शङ्गवोवा। धुक्षस्वपायि। प्युषोमिषाम्। वर्धासमु
१ २ १र २
द्रम्। उ२३। क्थ्ययाउवा। अूधिया२। ए२३हिया
१
३४३। औ२३४५ई। डा(३) ॥ ५* ॥ [१]

१ र २ र
॥ प्रतीचीनेडक्काशीतम् ॥ उपोषजातम्। अ२
१ २ १ ० ३र २
प्तुराम्। गोभिर्भङ्गम्। परायिष्कृता२३४म्। वाशो
१ र २ २ १ ४ ५
यि। इन्दुर्देवाआ३या। सिषूः। औ२३होवा ॥(१)
१ २ १ २ १
तमिद्वर्धन्तु। नो२गिराः। वात्सं॒संशि। स्वरायि

* ऊ॰ गा॰ ६प्र॰ १ अ॰ ५ खा॰ ।

७ ३र २ १ २ २ १
रिवा२३४। हाहोयि। यइन्द्रस्याहा३ह्रीम्। सनायिः।
४ ५ १ र २ र १
औ२३होवा॥(२) अर्षानःसोम। आ२ङ्कवायि। भूष
२ १ ७ ३र १ १ र
खपि। प्युषायिमिषा२३४म्। हाहोयि। वर्द्धामम्
२ २ १ २ ४ ५ ४ ५
द्रा३म्। क्रियया। औ३होवा। ईडा(३)॥ ११* ॥[२]२०

इति सामवेदार्थप्रकाशे उत्तरायन्यस्य दशमस्याध्यायस्य-
एकादशः खण्डः† ॥ ११ ॥

---

अथ द्वादश-खण्डे‡—

आघायेग्निमिति द्वचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
आघाये अग्निमिन्धते स्तृणन्ति बर्हिरानुषक्।
२ ३ २ ३ २ ३ १ २
येषामिन्द्रो युवा सखा॥ १¶ ॥

---

* ऊ० गा० १९प्र० १ख० ११गा०।

† 'यज्ञायज्ञीयमग्निष्टोमसाम'—इति वि०।

‡ 'इहागोमुक्थानि'-इति वि०।

¶ छ० आ० २, १, ४, ९ (१भा० ७२० पृ०) = ऋ० वे० ८, ६, ४२, १ = य० वे० ७, ३२।

"ये" ऋषयः "आ घा" आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति, येषाञ्च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति, ते "आनुषक्" आनुपूर्व्येण "बर्हिः स्तृणन्ति" ॥ १ ॥

अथ द्वितीया ।

बृहन्निदिध्म एषाम्भूरिशस्तं* पृथुः स्वरुः ।

येषामिन्द्रोयुवासखा ॥ २† ॥

"एषाम्" ऋषीणाम्‡ "इध्मः"¶ "बृहत् इत्"§ महान् खलु, "भूरि" बहु "शस्त्रं" स्तोत्र-स्वरूपञ्च "पृथुः" महान् । शिष्टमन्यत् ॥ २ ॥

अथ तृतीया ।

अयुद्ध इद्युधा वृतं शूर आजति सत्वभिः ।

येषामिन्द्रोयुवासखा ॥ ३ ‖ ॥ २१

---

* "शस्त्र"—इति ऋ०-पाठः ।

† ऋ० वे० ६, ३, ४१, २ ।

‡ 'येषां—यजमानानाम्'—इति वि० ।

¶ 'इध्मः—इन्धनार्थीयः'—इति वि०

§ 'इत्—इति पदपूरणः'—इति वि० ।

‖ ऋ० वे० ६, ३, ४१, ३ ।

"युवा इन्द्रः येषां सखा।" तेष्वन्तर्भूतः कश्चित् "अयुध इत्" प्राग्योद्धेव सन् "युधावृतं" योद्धृभिर्भटैरावृतं शत्रुं "सत्वभिः" आत्मोयैर्बलैः "शूरः" सन् "आजति"* नमयति ॥ ३ ॥ २१

॥ ऐध्मवाहाद्यम् ॥ आघायेअग्निमिन्धानायि। त्र्या

ग्निर्वर्हिरानुषाक् ॥(१) वृद्धन्तिद्दिधाआयिषाम्। भूरिश्च

त्वकपृथुःस्वरुः ॥(२) अयद्धड्युधावात्तीम्। शूरआज

तिसत्वभायिः। येषामिन्द्रोयुवाइथा। जवायि। ऊ

वो२३४। वा। सा५खोई६हायि(३) ॥ ६† ॥ [१] २१

अथ यएकइति द्व्यात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

यएकइद्विदयतेवसुमर्त्तायदाशुषे।

ईशानोअप्रतिष्कुतइन्द्रोअङ्ग ॥ १‡ ॥

---

* 'आजयंपश्च'—इति वि० ।

† ऊ० गा० ६प्र० १ख० ६सा० ।

‡ ऋ० आ० ४, २, ५, ८ ( १भा० ७९८ पृ० ) = ऋ० वे० १, ६, ६, १ ।

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे" हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति "अङ्ग" [—इति क्षिप्र-नाम (निघ० नै० ५, १७) ]"अप्रतिष्कुतः" परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहित इत्यर्थः । एवम्भूतः स "इन्द्रः" क्षिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ १ ॥

अथ द्वितीया ।

२ २ १ २ ३१ २ ३ २ ३ १ २ ३ १ २
यश्चिद्धित्वाबहुभ्यआसुतावाꣳआविवासति ।

३ १र २र ३ २ ३ १ २ ३ २
उग्रन्तत्पत्यतेशवइन्द्रोअङ्ग ॥ २* ॥

"बहुभ्यः" मनुष्येभ्यः सकाशात् "यः चित् हि"† यएव खलु यजमानः "सुतावान्" अभिषुत-सोम-युक्तः सन् । हे इन्द्र ! "त्वा" त्वाम् "आ विवासति" परिचरति [ विवासतिः परिचरणकर्म्मा (निघ० ३. ५, १० ) ] "तत्" तस्मै यजमानाय "उग्रम्" उद्गूर्णं "शवः" बलम् "इन्द्रः" "अङ्ग" ‡ क्षिप्रं "आ पत्यते" आपतयति प्रापयति ॥ २ ॥

---

* ऋ० वे० १, ६, ६. ४ ।

† 'चित्-हि—इति पदपाठौ'—इति वि० ।

‡ 'अङ्गशब्दः पुनर्वाची'—इति वि० ।



Digitized by Google

अथ तृतीया ।

१ १२ १२ ३ १ २ ३ १२ ३१२
कदामर्त्तमराधसम्पदाक्षुम्पमिवस्फुरत् ।
३ १ २ ३ २ ३ १ २ ३ २
कदानःशुश्रवद्गिरइन्द्रोअङ्ग ॥ ३* ॥ २२

"अराधसं" हविर्लक्षणेन राधसा धनेन रहितमयष्टार-मित्यर्थः† । एवंविधं "मर्त्तं" मनुष्यम् "इन्द्रः" "पदा" पादेन "क्षुम्पमिव" अहिच्छत्रमिव‡ "कदा" वा "स्फुरत्" स्फुरिष्यति बधिष्यति ? यथा अहिच्छत्रं मण्डलाकारेण गयानं कश्चिद्‌ना-याषेन हन्ति एवमिन्द्रोऽपि कदास्मच्छत्रून् हनिष्यतीत्यर्थः [ स्फुरति-स्फुलतीति बध-कर्म्मसु ( निघ० २,१९,१५-१६ पठि-तत्वात् ) ]। "नः" अस्माकं यष्टृणां "गिरः" स्तुति-लक्षणा वाचः "इन्द्रः" "कदा" कस्मिन् काले "अङ्ग" क्षिप्रं "शुश्रावत्" श्रोष्य-तीति वितर्क्यते [ अथ निरुक्तम्—"क्षुम्पमहिच्छत्रकम्भवति यत् क्षुभ्यते ** * कदा मर्त्तमनाराधयन्तं पादेन क्षुम्पमिवावस्फुरि-ष्यति कदा नः श्रोष्यति गिर इन्द्रो अङ्ग ( निरु० नै० ५, १७ )" -इति क्षिप्र-नामैतत् ॥ ३ ॥ २२

१२ २ ३ १
॥ त्रैककुभम् ॥ यएकइद्विवायाऽतायि । वासुमर्त्ता
२ ३ १ ३ ५ १ २२ २ १ २
याऽदा । ऊम् । प्रू२३४षाम् । आयिशानोअप्रति

* ऋ० वे० १, ६, ६, ३।

† 'यस्य यज्ञार्थं राधसधनं न भवति, सोऽराधाः'—इति वि० ।

‡ 'क्षुम्पम् प्रर्त्तपत्तीयं कुर्वन्तं यत्, यथा मर्द्दन्ति बलिनः'—इति वि० ।

Digitized by Google

१ १र १र २१ ३ ५
ष्कुतः। च्चायिम्रा। नोम्रप्रतायि। ष्कू२३४ताः॥(१)
२ र १ १रर २ २ १
यम्बिम्बित्वा। वज्रभ्या३षा। सुताबा॒आवी३वा। ऊम्।
२ ५ २१ २र१२ १२ ३ २ १
सार३४तायि। उग्रन्तत्यत्यतेश्रवः। ऊग्रम्। तत्यत्यता
३ ५ १र र २ १र
यि। स्रा२३४वाः॥(२) कदामर्त्तमराधा३साम्। पदा
२ २ १ ३ ५ ११र २
क्षुम्पामी३वा। ऊम्। स्फू२३४रात्। कदानःशुश्रव
१ १ २र ३ २१ २ ५ १
द्गिरः। कादा। नःशुश्रवात्। गा२३४यिराः। चा
२र १ ३ ५र र ३
यिन्द्रोष्प। गा२। या२३४ यौहोवा। ई२३४
५
न्द्राः(३)॥ ७* ॥ [१] २२

अथ गायन्तीति-त्र्यचात्मकं सूक्तं तृतीयम्†,

तत्र प्रथमा।

१ २ ३ १२ २र ४ १ ६ १ २
गायन्तित्वागायत्रिणोर्चन्त्यर्कमर्किणः।
३ १ २ ३१३ १ २
ब्रह्माणस्त्वाशतक्रतउद्वंशमिवयेमिरे॥ १‡ ॥

---

* ऊ० गा० ६प्र० १ख० ७सा०।

† 'तृतीयमनुवाकम्'—इति वि०।

‡ छ० आ० ४, २, १, १ (१भा० ६९४ पृ०) = छ० सं० १, १, १९, १।

Digitized by Google

हे "शतक्रतो" बहुकर्मन् बहुयज्ञ वा इन्द्र! "त्वा" त्वाम् "गायत्रिणः" उद्गातारः "गायन्ति" स्तुवन्ति; "अर्किणः" अर्चन-हेतु-मन्त्र-युक्ता होतारः "अर्कम्" अर्चनीयम् इन्द्रम् "अर्चन्ति" स्तोत्र-शस्त्र-गतैर्मन्त्रैः प्रशंसन्ति; "ब्रह्माणः" ब्रह्म-प्रभृतयः इतरे ब्राह्मणाः "त्वाम्" "उद्येमिरे" उन्नतिं प्रापयन्ति। तत्र दृष्टान्तः—"वंशमिव" यथा वंशाग्रे नृत्यन्तः शिल्पिनः प्रौढं वंशमुन्नतिं कुर्वन्ति, यथा वा सन्मार्गवर्त्तिनः स्वकीयं कुल-मुन्नतं कुर्वन्ति, तद्वत्। एतामृचं यास्क एवं व्याचष्टे—"गायन्ति त्वा गायत्रिणः प्रार्चन्ति तेऽर्कमर्किणो ब्रह्माणस्त्वा शतक्रत उद्ये-मिरे वंशमिव। वंशो वनशयो भवति वनाच्छ्रूयत इति वेति" (निरु० नै० ५,५)। अर्क-शब्दञ्च बहुधा व्याचष्टे—"अर्को देवो भवति यदेनमर्चन्त्यर्को मन्त्रो भवति यदनेनार्चन्त्यर्कमन्नं भवत्य-र्चति भूतान्यर्को वृक्षो भवति संवृतः कटुकिम्ना (निरु० नै० ५,४"—इति ॥ १ ॥

अथ द्वितीया।

२उ ३ १र २र३ १र २र ३ १ २
यत्सानोस्सान्वारुहोभूर्यस्पष्टकर्त्वम्।
२उ ३ १ २ ३ १ २ ३ १ २
तदिन्द्रोअर्थञ्चेततियूथेनवृष्णिरेजति ॥ २* ॥

"यद्" यदा "सानोः सानु" यजमानः सानोः सानु, सोम-वल्ली-समिदाद्याहरणाय पर्वतप्रदेशम् "आरुहः" आरूढवान्।

* ऋ० वे० १, १, १९, २।

तथा "भूरि" बहुकर्म यागरूपम् "अस्रष्ट" सृष्टवान् उपक्रान्तवानित्यर्थः। "तत्" तदानीम् "इन्द्रः" "अर्थं" यजमानस्य प्रयोजनं "चेतति" जानाति। ज्ञात्वा च "वृषा" कामानां वर्षिता सन् "यूथेन" मरुद्गणेन सह* "एजति" कम्पते,† अस्य स्थानात् यज्ञभूमिमागन्तुमित्यर्थः॥

"सानोःसान्वारुहः"-"सानोः सानुमारुहत्"—इति पाठो ॥२॥

अथ तृतीया।

२ ३उ   १ २ ३ १ २ १ १   २ १
युक्ष्वाहिकेशिनाहरीवृषणाकक्ष्यप्रा।
१ २   ३ १र २र
अथानइन्द्रसोमपगिरामुपश्रुतिञ्चर ॥ ३‡ ॥ २३

हे "सोमपाः" सोम-पान-युक्तेन्द्र! "हरी" त्वदीयावश्वौ "युक्ष्व¶ हि" § सर्वथा संयोजय। "अथ" अनन्तरं "नः" अस्मदीयानां "गिरां" स्तुतीनाम् "उपश्रुतिं" समीपे श्रवणमुद्दिश्य "चर" तत्प्रदेशे गच्छ। कीदृशौ हरी? "केशिना" स्कन्ध-प्रदेशे लम्बमान-केश-युक्तौ, "वृषणा" सेचन-समर्थौ युवानौ,

* 'यूथेन—देवसङ्घातेन'—इति वि०।

† 'एजति—आगच्छति'—इति वि०।

‡ ऋ० वे० १, १, १९, १=य० वे० ८, ३४।

¶ संहितायां "युक्ष्वा"—इति दीर्घान्तः तत्र "द्व्यचः (६,३,१३५)"—इति दीर्घः।

§ 'हीति पदपूरणः'—इति वि०।

Digitized by Google

"कक्ष्यप्राः" अश्वस्योदर-बन्धन-रज्जुः कक्ष्यः,तस्य पूरकौ पुष्टाङ्गावित्यर्थः॥

"युञ्जा"-"युक्ष्वा"—इति पाठौ॥

युङ्क्ष्वा—इति णित्त्वेन प्रत्यय-स्वरः (३, १, ३) शिष्यते, "द्व्यचोऽतस्तिङः (६, ३, १३५)"—इति संहितायां दीर्घत्वम्। केशिना—प्रशस्ताः केशाः अनयोः सन्तीति मत्वर्थीय इनि-प्रत्ययः, "सुपांसुलुगित्यादिना (७, १, ३९) द्विवचनस्याकारादेशः। वृषणा—वृषु वृषु सेचने (भ्वा० प०) "कनिन्यु-वृषि-तक्षि-राजि-धन्वि-द्यु-प्रति-दिवः"—इति कनिन्,"ञ्नित्यादिर्नित्यम् (६, १, १९७)"—इत्याद्युदात्तः, "वासपूर्वस्य निगमे (६, ४, ९)"—इति उपधायाः पक्षे दीर्घाभावः, पूर्ववदाकारः (७, १, ३९)। कक्ष्यप्राः—कक्ष्ययोर्भवं कक्ष्यं सूत्रं तत् प्रातः पूरयतः पुष्टत्वादिति कक्ष्यप्रौ, प्रा पूरणे (अदा० प०), "आतोऽनुपसर्गे (३, २, ३)"—क-प्रत्ययः, कृदुत्तरपद-प्रकृतिस्वरेणान्तोदात्तत्वम् (६,२,१३९)"—आकारः पूर्ववत् (७, १, ३९)। अथा—"निपातस्य च (६, ३, १३६)"—इति संहितायां दीर्घः। नः—"अनुदात्तं सर्वमपादादौ (८, १, १८)"—इत्यनुवृत्तौ "बहुवचनस्य वस्नसौ (८, १, २१)"—इति नसादेशोऽनुदात्तः। इन्द्र!—सोमपा!—इत्युभौ "आमन्त्रितस्य च (८, १, १९)"—इति सर्वानुदात्तौ। गिरां—"सा-

वेकाचस्तृतीयादिर्विभक्तिः ( ६, १, १६८ )"—इति विभक्ति-दात्ता। उप—शब्दो निपातत्वादाद्युदात्तः ( फि० ४, १२ ), स्तुति-शब्देन प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तादौ-चनितिकृत्यचो इति तु वर्जिततादि-परत्वात् गतेः प्रकृतिस्वरः पर-निपातः॥ ३ ॥ २३

१र २ र र १ २ १
॥ उद्वंशीयम् ॥ गायन्तित्वागायत्रिणाश्चा। अर्च
२ १र
न्त्यर्क्कमर्क्का२३यिणाः। ब्रह्माणस्त्वा२हो१यि। शतक्रा२
२ १ २ २ २ २ ४
३ताउ। उद्वंशमिवया१यिमी३रे। उद्वंशा२३४मी।
१ ५ २ २ १ २ १ र
वायाइउवा३। उप्। माऽयिरो३५हायि॥(१) यत्सा
२र र र २ १ र २ १
नोस्सानुमारुहपा। भूर्य्यस्पष्टकर्त्तू२३वाम्। तदिन्द्रा
र २ र १र २ २
२हो१यि। अर्थंचेता२३तायि। यूथेनवृष्णिरे१यिजा२
२ र र ३ ५ १ ऽ २ २ १
ताथि। यूथेमा२३४वृ। ष्णायिरा३उवा३। उप्। जा
२ २ १र २र १ २र १ २र १ र
ऽ२तो३५हायिः॥(२) युक्ष्वाहिकेशिनाहरीश्वा। वृषणा
२ १ र र २
कक्षिया२३प्रा। अथानो२हो१यि। इन्द्रासोमा२३पाः।

Digitized by Google

१२ २ २ १ २ १ ५ १ ऽ
गिरामुपश्रुता१यिश्वा३रा। गिरामू२३४पा। सूता३उ
१ २ १ २
वा३। उप्। षा५२रो३५हायि(३) ॥ ८* ॥ [१]

॥ हिरण्यस्तस्त्वाष्ट्रीसाम ॥ गाय। तित्वा३। हा३
५र ३ २ २
२ १२ ११ ५ ३ २ २ २
हा। गायत्रायिणा२३४:। अर्च। तिया३। हा३हा।
३ २ १ ५र ३ २ २ २
कमर्कायिणा२ ३ ४:। ब्रह्मा। णस्त्वा३। हा३हायि।
३ २ १ ५ ३ २ २ २ १
शतक्राता२३४उ। उद्द। यमा३यि। हा३हायि। व
२ १ ५ ४ ५ ५ र १र
या३हो२३४। वा। मा५यिरो६हायि ॥(१) यत्सा। नो
२ २ २ ३ १२ १ ५ र ३ २
स्मा३। हा३हा। नुवाहहा२३४:। भूरि। अस्या३।
२ २ ३ २ १ ५ १२ २ २
हा३हा। ष्टकर्त्तूवा२३४म्। तदि। द्रोषा३। हा
२ ३ १२ १ ५र ३ २ २ २
३हा। थच्चेताता२३४यि। यूथे। नवा३। हा३हा।
३ २ १ ५ ४ ५ ५ र
णिरा३हो२३४। वा। जा५तो६हायि ॥(२) युक्ष्वा।

* ऊ० गा० ६प्र० १अ० ८सा०।

Digitized by Google

हिका३। हा३हायि। भिनाहारा२३४यि। वृष। णा

का३। हा३हा। च्चियाप्रा२३४। अथा। नभा३।

हा३हायि। द्रसोमापा२३४ः। गिराम्। उपा३। हा

३हायि। श्रुता३यिंहो२३४। वा। चा५रो६हा

यि(३)॥१*॥[२]

॥ गौरीवितम्॥ गाय। तित्वा३। गायत्रिणाः। अ

र्चन्त्यर्कमर्किणा२३ः। ब्रह्माणस्त्वा३१२३। शतक्रता

उ। उद्वंशमा३१२३यि। वयोवा। मा५यिरो६हा

यि॥(१) यत्सा। नोःसा३। नुवारुहाः। भूर्य्यस्पष्ट

कर्त्तुवा२३म्। तादिन्द्रोऽर्था३१२३। यचेतताथि।

यूथेनवा३१२३। वृष्णिरेवा। जा५तो६हायि॥(२) युक्ष्वा।

हिका३यि। भिनाहरायि। वृषणाकच्चियप्रा२३। आ

* ऊ० गा० २२प्र० १ख० १सा०।



Digitized by Google

र    २        ४        १  र  २
यानषा३१२३यि । इसो५मपाः । गायिरामुपा३१२३ ।
४  ५    ४    ५
श्रुतोवा । चा५रोईहायि(३) ॥ ५* ॥ [३) २३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य दशमस्याध्यायस्य
द्वादशः खण्डः† ॥ १२ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ५ ॥

॥ इति पञ्चमः प्रपाठकः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे दशमोऽध्यायः‡ ॥ १० ॥

---

* ऊ० गा० १२प्र० १अ० ५गा० ।

† 'द्वादशखण्डस्य नवममन्त्र षट्चत्वारिंशत्सौमिकम्—इति वि० ।

‡ 'पञ्चमः प्रपाठकः समाप्तः' इति वि०, मूल-पदग्रन्थादिष्वप्येतन्नास्ति ।

Digitized by Google

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ ११ ॥

## ॥ अथैकादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथम-खण्डे—

सुषमिद्ध इति चतुर्ऋचं प्रथमं सूक्तम्,†

तत्र प्रथमा ।

१ २       ३ १ २ ३ १    २ २ १ २
सुषमिद्धो‡न आवह देवाँ अग्ने हविष्मते ।
१ २     ३ १ २
होतः पावक यक्षि च ॥ १¶ ॥

हे "अग्ने !" "सुसमिद्धः"§ एतन्नामकस्त्वं "नः" अस्म-

---

* इदानीं दशममहरस्त्वग्निष्टोमः । * * * । तत्र वक्ष्यमाणानां द्वितीय-प्रभृतीनां पञ्चानामह्नामनुरूपं * * * नवर्चं सर्वं नवराद्धीतवत्,—इति वि० ।

† इदानीं सुषमिद्धो नआवह इति इध्माख्यानि भवन्ति—इति वि० ।

‡ "सुषमिद्धो"—इति ऋ०-पाठः ।

¶ ऋ० वे० १, १, २४, १ ।

§ 'सुष्ठु समिद्धः सुषमिद्धः'—इति वि० । छन्दोदोष-पाठ मवलम्ब्यैवाय प्रतीक-मचरं कृतं सायणेन सुषमिद्ध इति, मूलपाठस्तु मूर्द्धन्य-मध्यः; सुषमिद्ध इति "पूर्वपदात् (८, ३, १०६ )"—इति च तत्र मतम् ।

Digitized by Google

द्दीयाय"* "हविष्मते" यजमानाय तदनुग्रहार्थं "देवान्" "आवह"। हे "पावक" शोधक! "होतः" होमनिष्पादकाग्ने! "यक्षि च" यज च†॥ [सुसमिद्धः—सम्यः क्रियाविशेषणत्वेन गति-सञ्ज्ञकत्वात् प्रादिसमासः, शोभन-वाचिनः सु-शब्दस्य तु "वि-शेषणं विशेष्येण बहुलम् (२, १, ५७)"—इति समिद्ध पदेन कर्मधारयः समासः, सु-शब्दः प्रातिपदिक-स्वरेणान्तोदात्तः, "कर्मधारयेऽनिष्ठा (६,२,४६)"—इति पूर्वपदप्रकृतिस्वरत्वं, क्रि-या-विशेषणत्वे हि सु-शब्दस्य गतित्वात् प्रादिसमासे "गतिरनन्तरः (६, २, ४९)" इति "समो यदुत्तर इति समो यदुत्तरत्वं तदेव कृदुत्तर-प्रकृति-स्वरत्वेन (६, २, १३९) स्यास्यतीति सु-शब्दो-ऽनुदात्तः स्यात्। देवाँ अग्ने—"दीर्घादटि समानपादे (८, ३, ९)"—इति नकारस्य रुत्वम्, "अत्रानुनासिकः पूर्वस्य तु वा (८, ३, २)"—"आतोऽटि नित्यम् (८, ३, ३)"—इत्यनु-नासिकः। हविष्मते—हविरस्यास्तीति मतुप्, "तसौ मत्वर्थे (१,४,१९)"—इति भत्वेन पदत्व-बाधितत्वात् रुत्वम्। होतः—पावक—एतच्छब्दयोरामन्त्रितयोः पृथक् पृथगेव क्रियान्वये परस्पर-सामर्थ्यात् पराङ्गवद्भावाभावाच्च तन्निबन्धनमैकस्वर्यम् नच द्वितीयस्यामन्त्रितस्याष्टमिक-(८, १, १९)—निघातेनैकस्वर्यम् "आमन्त्रितं पूर्वमविद्यमानवद् (८, १, ७२)"—इति पूर्वस्या-विद्यमानत्वेन पदादपरत्वात् पादादित्वाच्च परस्य सामानाधि-करण्येऽपि होतरित्यस्य विशेषत्वे समानमेवाविद्यमानवत्वम्,

---

* 'नः—चतुर्थ्यम्'—इति वि०।

† 'यक्षि च—यज भजस्व, देवानावह भजय च'—इति वि०।

अतएवाविद्यमानवत्त्वात् सामर्थ्येऽपि न पराङ्गवद्भाव,—इति नैक-स्वर्य-सिद्धिः, अतो होतरिति विशेष्यम्; अतः पुनातीति पावकः—इत्यवयव-प्रसिद्ध-स्वीकारेण विशेषणत्वाद्धोतरिति विशेष्यम्, तच्च सामान्यवचनम् इति "नामन्त्रिते समानाधिकरणे (८, १, ७३)"—इत्यविद्यमानवत्त्व-प्रतिषेधात् पदात्परत्वादपादादित्वाच्च द्वितीयामन्त्रितस्याष्टमिक-निघातेन वा पराङ्गवद्भावे सति शेष-निघातेन वा सर्वानुदात्तत्व-सिद्धिः। यक्षि—यजेर्लोपः सिपि बहुलञ्छन्दसि (२, ४,७३)"—इति शपो लुक्, व्रश्चादिना (८, २, ३६) षत्वम्. "षढोः कः सि (८, २. ४१)"—इति कत्वम्, सेर्ह्यादेशश्छान्दसत्वान्न भवति, सिपः पित्त्वेनानुदात्तत्वाद्धातुस्वरएव (६, १, १६२) शिष्यते, न च "तिङ्ङतिङः (८, १,२८)"—इति निघातः पूर्वस्य पावकेत्यामन्त्रितस्य विद्यमानवत्त्वेन पदादपरत्वात्, अतएव तस्याव्यवधायकत्वे होतरित्यपेक्ष्य निघातः स्यादितिचेत् न, यक्षि-पदापेक्षया होतरित्यस्यापि पूर्वत्वेनाविद्यमानत्वात्; ननु "नामन्त्रिते समानाधिकरणे (८,१, ७३)"—इति तस्य नित्यमविद्यमानत्त्वम्, न च पावक-पदस्याविद्यमानवत्त्वेन समानाधिकरण-परत्वाभावः; यक्षि-पदस्यैव हि कार्यं प्रति पावक-पदं पूर्वत्वादविद्यमानवत् स्यात्, होतः-पदमविद्यमानवत्त्व-प्रतिषेधं प्रति तु परत्वाद्विद्यमानवदेवेति भवत्येव होतरित्यस्याविद्यमान वत्त्व-प्रतिषेधः, अतस्तस्याविद्यमानवत्त्वात्तदपेक्षया यक्षीति निघातः प्राप्नोत्येव? सत्यम्;——अत्र यक्षीत्यस्य च-शब्द-परत्वात् "चादिषु च (८, १, ५८)"—इति निघात-प्रतिषेधो भविष्यतीत्यदोषः] ॥ १ ॥

Digitized by Google

अथ द्वितीया ।

१ २          १ २ ३ १ २

मधुमन्तन्तनूनपाद्यज्ञन्देवेषु नः कवे ।

३ १ २    ३ १२

अद्या कृणुह्यूतये ॥ २* ॥

हे "कवे" मेधाविन्नग्ने! "तनूनपात्"†—एतन्नामकस्त्वम् "अद्य" अस्मिन् "नः" अस्मदीयं "मधुमन्तं" रसवन्तं "यज्ञं" यजनीयं हविः "देवेषु" "कृणुहि" कुरु प्रापयेत्यर्थः। किमर्थम्? "ऊतये" अस्मद्रक्षणाय ॥

"ऊतये"-"वीतये"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

२ ३ १    २ ३ २ ३ २ ३ १   ३ १र   २र

नराशꣳसमिह प्रियमस्मिन्यज्ञ उपह्वये ।

१ २        ३ १ २

मधुजिह्वꣳ हविष्कृतम् ॥ ३‡ ॥

"इह" देवयजन-देशे "अस्मिन्" वर्त्तमाने यज्ञे "नराशं-

---

* ऋ०वे० १, १, २४, २ ।

† "तनूनपादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयं निर्णततमा भवति गौरत्र तनूरुच्यते तता अस्यां भोगास्तस्याः पयो जायते पयस आज्यं जायते। अग्निरिति शाकपूणिरापोऽत्र तन्व उच्यन्ते तता अन्तरिक्षे ताभ्य ओषधिवनस्पतयो जायन्त ओषधिवनस्पतिभ्य एष जायते। * * *।"—इति निरु० दै० २, ५-६।

‡ ऋ० वे० १, १, २४, ३।

Digitized by Google

सम्”*—एतन्नामकमग्निम् “उपह्वये” आह्वयामि । कीदृशम् ? “प्रियं” देवानां प्रीति-हेतुं, “मधुजिह्वं” मधुर-भाषि-जिह्वोपेतं माधुर्य्य-रसास्वादक-जिह्वोपेतं वा, “हविष्कृतं” हविषो निष्पादकम् ॥ ३ ॥

अथ चतुर्थी ।

१ २ ३ १ २ ३ १ २ ३ १   २ ३ १र   २र
अग्नेसुखतमेरथेदेवाँ२ईडितआवह ।
२ ३ २ ३ १ २
असिहोतामनुर्हितः ॥ ४† ॥ १

इडं-शब्दाभिधेय हे “अग्ने !” “ईडितः” अस्माभिः स्तुतः सन्‡ “सुखतमे” अतिशयेन सुख-हेतौ कस्मिंश्चित् “रथे” “देवान्” स्थापयित्वा कर्म-भूमौ “आ वह” [ इट्-शब्दाभिधेयत्वमत्र सूचयितुमीडित इति विशेषणम् ] । “मनुर्हितः” ‘मनुना’ मन्त्रेण मनुष्येण वा यजमानादि-रूपेण ‘हितः’ अत्र स्थापितः त्वं “होता” देवानामाह्वातासि ॥ ४ ॥ १

* “नराशंसो यज्ञ इति कात्थक्यो नरा अस्मिन्नासीनाः शंसन्ति । अग्निरिति शाकपूणिर्नरैः प्रशस्यो भवति”—इत्यादि निरु० दै० २, ६-७ ।

† ऋ० वे० १, १, २४, ४ ।

‡ ‘ईडितः—प्रीणितः’—इति वि० ।

अथ यदद्येति तृचात्मकं द्वितीयं सूक्तम्,*

तत्र प्रथमा।

२ ३ १ २ उ ३ २ ३ १ १ २ ३ १ २ ३ १ २
यदद्यसूरउदितेनागामित्रोअर्यमा।
३ १ २ ३ १ र २ र
सुवातिसविताभगः॥ १†॥

"यत्" धनं "नः" अस्माकम् अपेक्षितं "तत्" "अद्य" अस्मिन् काले "सूरे" "उदिते" सति प्रातःसमये "अनागाः" पाप-हन्ता, "मित्रः", "अर्यमा", "सविता", "भगः" च—एतत् प्रत्येकं "सुवाति" प्रेरयतु [अथवा अनागा मित्रो अर्यमा भवतु, तदीप्सितं भगो भजनीयः सविता सुवाति प्रेरयतु] ॥ १ ॥

अथ द्वितीया।

३ १ २ ३ २ उ ३ १ र २ र
सुप्रावीरस्तुसक्षयःप्रनुयामन्त्सुदानवः।
२ ३ १ २ ३ १ २
येनोअꣳहोतिपिप्रति ॥ २‡ ॥

"सक्षयः" स-निवासः "सुप्रावीरस्तु" सुष्ठु प्रकर्षेण रक्षितास्तु [प्र-शब्द आदरार्थः]। "प्र" प्रकर्षेण "नु" क्षिप्रं भवत्विति शेषः। कदा? इत्युच्यते— हे "सुदानवः" सुदानाः! युष्माकं

* 'मैत्रावरुणमाज्यम्'—इति वि०।

† ऋ० वे० ५, ५, ८, ४।

‡ ऋ० वे० ५, ५, ८, ५।

Digitized by Google

"यामन्" यामनि गमने सति, कीदृशानां गमने ? ये यूयमागत्य "नः" अस्माकम् "अंहः" पापम् "अति पिपर्त्ति" अतिपारयथ, तेषां गमनइति ॥ २ ॥

अथ तृतीया ।

१२ ३ १२ ३ १ २ ३ १ २ ३ २ ३ २
उतस्वराजोअदितिरदब्धस्यव्रतस्ययेे ।

३ १ २ ३ २
महोराजानईशते ॥ ३ * ॥ २

"उत" अपिच "ये" मित्रादयस्त्रयः "स्वराजः" सर्वस्य स्वामिनः "अदितिः"† येषाञ्च माता, सन्ति ; ते "अदब्धस्य" अहिंसितस्य रक्षकस्य "महः" महतः‡ "व्रतस्य" अस्य कर्मणः¶ "राजानः" स्वामिनः, ते "ईशते" समर्था भवन्ति अभिमतं दातुमिति शेषः । [ अथवैवं योज्यम्—'ये' मित्रादयोऽदितिश्च 'अदब्धस्य' व्रतस्य 'स्वराजः' ईश्वरास्ते "महः" महतः अस्मदभिमतधनस्य "राजानः" स्वामिनः सन्तः "ईशते" अस्मभ्यं दातुम् ॥ ३ ॥ २

---

* ऋ० वे० ४, ५, ९, १ ।

† 'अदितिः—अदीनत्व-सम्पन्नाः-इति वि० ।

‡ 'महः—अभिमान-सम्पन्नाः'—इति वि० ।

¶ 'व्रतस्य—कर्मणः अन्नस्य वा'—इति वि० ।



Digitized by Google

उत्त्वेति त्वचात्मकं प्रथमं सूक्तम्,*

तत्र प्रथमा ।

१ २ ३ १ २ ३१र ३र
उत्त्वामन्दन्तुसोमाःकृणुष्वराधोअद्रिवः ।
१ २ ३ १ २
अवब्रह्मद्विषोजहि ॥ १ † ॥

हे इन्द्र ! "त्वा" त्वां "सोमाः" "उत्" उत्कृष्टं "मन्दन्तु" मादयन्तु । हे "अद्रिवः !" वज्रवन्निन्द्र ! त्वं "राधः" धनं "कृणुष्व" अस्मभ्यं कुरु । किञ्च "ब्रह्मद्विषः" ब्राह्मण-द्वेष्टॄन् "अव जहि" ॥

"सोमाः"–"सोमा"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

:३२ ३२ ३ ३ २३ १२ ३१ २
पदापणीनराधसोनिबाधस्वमहाँ असि ।
१उ ३ २ ३ १ २
नहित्वाकश्चनप्रति ॥ २ ‡ ॥

"पणीन्" लुब्धान्¶ "अराधसः" यष्टव्य-धन-रहितान् केवल-धनान् "पदा" पादेनातिक्रम्य "निबाधस्व" नितरां

* 'ऐन्द्रमाख्यम्'—इति वि० ।

† ऋ० चा० ३, १, १, १ ( १ भा० ४२१४० ) = ऋ० वे० ६, ४, ४२, १ ।

‡ ऋ० वे० ६, ४, ४२, २ ।

¶ 'पणीन्—पणनस्वभावान्'—इति वि० ।

बाधस्व । हे इन्द्र ! त्वं "महान् असि" "त्वा" त्वया "प्रति" प्रतिनिधि-सदृशः "कश्चन" कश्चिदपि देवोऽसुरो मनुष्यो वा "न हि" नास्ति खलु ॥

"पणीनराधसः"-"पणीरराधसः"—इति पाठौ ॥ २ ॥

अथ तृतीया ।

१ २        ३ १ २ ३  १ ३ १र  २र
त्वमीशिषे सुतानामिन्द्रत्वमसुतानाम् ।
२उ     ३ १ २
त्वꣳराजाजनानाम् ॥ ३ * ॥ ३

हे "इन्द्र !" "त्वं" "सुतानाम्" अभिषुतानां सोमानाम् "ईशिषे" ईश्वरो भवसि, तथा "त्वम्" "असुतानाम्" वर्त्तमानानाञ्च ईशिषे, किञ्च "त्वं" सर्वेषां "जनानां" "राजा" भवसि ॥ ३ ॥ ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य प्रथमः खण्डः† ॥ १ ॥

---

* ऋ० वे० ६, ४, ४३, ३ ।

† 'इन्द्राग्नी आगतमित्यच्छावाकशस्त्रम्'—इति वि० अतः परं व्यवहार्यमिति शेषः । 'उक्तं प्रातःसवनम्'—इति च वि० ।

अथ द्वितीय-खण्डे*—

आजागृविरिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१र २र३ १ २ ३ १ २ ३ १र
आजागृविर्विप्रऋतम्मतीनाꣳ
२र ३ १ २ ३ १ २
सोमःपुनानोअसदच्चमूषु।
१ २ ३ १ २ ३ २ ३ १ २
सपन्तियम्मिथुनासोनिकामा
३ १ २ ३ १ २ ३ १ २
अध्वर्यवोरथिरासःसुहस्ताः॥ १ †॥

"जागृविः" जागरणशीलः "ऋतम्" ऋतनां सत्य-भूतानां "मतीनां" स्तुतीनां "विप्रः" ज्ञाता स "सोमः" "पुनानः" पूयमानः सन् "चमूषु" चमसेषु "आ सदत्" आसीदति, "मिथुनासः" परस्परं सङ्गताः, "निकामाः" नितरां कामयमानाः "रथिरासः" यज्ञ-नेतारः "सुहस्ताः" कल्याण-पाणयः "अध्वर्यवः" पवित्रेण "यं" सोमं "सपन्ति" स्पृशन्ति [सप समवाये (भ्वा० प०)। 'सपतिः स्पृशति-कर्म्मा'—इति नैरुक्ताः‡]॥

"ऋतम्"-"ऋता"—इति पाठौ॥ १॥

---

* 'इदानीं माध्यन्दिनं सवनमभिधीयते'—इति वि०।

† ऋ० वे० ७, ४, १८, १।

‡ 'सपति'—इति परिचरण-कर्मसु (३, ५) स्पर्शति-कर्मसु च (२, १४) पठ्यते निघण्टौ।

Digitized by Google

अथ द्वितीया।

१ १ २ १उ २ ३ २ १ २ २
सपुनानउपसूरेदधान

१र २र ३ १ २ ३ १र २र
ओभेअप्रारोदसीवीषआवः।

२ २ ३ १ २ ३ १ २ ३ १
प्रियाचिद्यस्यप्रियसासऊती

३ १र २र ३ २ ३१र १र
सतोधनङ्कारिणेनप्रयंसत्॥ २ *॥

"पुनानः" पूयमानः "दधानः" यज्ञादि-कर्म-धारकः "सः" सोमः "सूरे" प्रेरके इन्द्रे "उप" गच्छति। किञ्च "उभे रोदसी" द्यावा-पृथिव्यौ "आ अप्राः" स्व-महिम्ना आ पूरयति। तथा "सोमः" "आवः" स्व-तेजसा मां विवृणोति [वृणोतेः "मन्त्रे घसेति (२, ४, ८१) च्लेर्लुक्," "छन्दस्यपि दृश्यते (६, ४, ७३)" —इत्यडागमः। "पूर्वपदात् (८, ३, १०६)"—इति स-इत्यस्य सांहितिकं षत्वम्] "प्रिया" [षष्ठ्या आकारः (७, १, ३९)] प्रियस्य "यस्य" "सतः" विद्यमानस्य सोमस्य [यद्वा, 'प्रिया' प्रियाणि प्रयच्छतः सोमस्य] "प्रियसासः" अत्यन्त प्रियतमा धाराः "ऊती" ऊत्यै रक्षणाय भवन्ति "सः" सोमः "नः" अस्मभ्यम् "धनं" "प्रयंसत्" प्रयच्छतु [यच्छतेर्लेटि सिप्यड़ागमः]। तत्र दृष्टान्तः—"कारिणे न" यथा कारिणे भृतकाय भृतिं प्रयच्छति तद्वत्।

* ऋ० वे० ७, ४ १८, २।

"दधानश्रोभे"-"दधानोभे"—इति पाठौ, "सतोधनं"-"सतूधनम्"—इति च ॥ २ ॥

अथ तृतीया।

१ २ ३ १२ २र ३ १ २ ३
सवर्द्धितावर्द्धनःपूयमानः

१ २ ३ २ ३ १ २ ३ १ २
सोमोमीढ्वाꣳअभिनोज्योतिषावीत्।

१ २ ३ १ २ ३ १ २ ३ १
यत्रनःपूर्वपितरःपदज्ञाः

३ १ २ ३ १र १र ३ २
स्वर्विदोअभिगाअद्रिमिष्णान् ॥ ३ * ॥ ४

"वर्द्धिता" देवानां स्व-कला-प्रदानेन वर्द्धयिता "वर्द्धनः" स्वयं वर्द्धमानः "पूयमानः" पवित्रेण पूयमानः "मीढ्वान्" कामानां सेक्ता "सः" सोमः "नः" अस्मान् "ज्योतिषा" स्व-तेजसा "अभ्यावीत्" अभिरक्षतु "यत्र" यस्मिन् सोमे प्रसन्ने सति "पदज्ञाः" पणिभिरपहृतानां गवां पदानि जानन्तः "स्वर्विदः" सर्वज्ञाः स्वयं जानन्तो वा "नः" अस्माकं "पूर्वे" चिरन्तनाः "पितरः" अङ्गिरसः "गाः" पशून्† लब्धुम् "अद्रिम्" शिलो-च्चयम् "अभि" लक्ष्य गन्तुम् "इष्णान्" ऐच्छन् ॥

"यत्रनः"-"येनानः"—इति पाठौ, "इष्णान्"-"षान्"—इति च ॥ ३ ॥ ४

---

* ऋ० वे० ७, ४, १८, ४।

† 'गाः-उदकानि रश्मयो वा'—इति वि०।

॥ गौरीवितम् ॥ आजा । गृवा३यिः । विप्रजूताम् ।
मतीनाꣳसोमःपुनानोअसदच्चमूषू२३ । सापन्तिया ३ १
२३म् । मिथुनासोनिकामापूर्व्यां । वोरथिरा३१२३ ।
सःसोवा । हा५स्तोई हायि ॥(१) सपु । नाना३ः । उ
पसूरायि । दधानःओभेअप्रारोदसीवीषआवार२३ः । प्रा
याचिद्या३१२३ । स्यप्रियसासजतीसा५तोधा । नाङ्का
रिणा३१२३यि । नप्रोवा । या५ꣳसोई हायि ॥(२) सव
र्हिता३ । वर्द्धनःपू । यमानःसोमोमीढाꣳअभिनोज्यो
तिषावा२३यित् । याचनःपू३१२३ । र्वंपितरःपदत्वाःस्व५
र्वायि । दोअभिगा३१२३ः । षद्रोवा । षा५यिष्मो
ई हायि(३) ॥ १४ * ॥ [१]

॥ अघ्नम् ॥ आजा । गृविर्विप्रजूताम् । मती२

---

* ऊ० गा० ६प्र० १ख० १४सा० ।

२ २ १ २ १ २ १ २ ३ ४ ५ १
नाम । सोमःपुना । नो३भस । द्वमूषु । सपन्ति

२ ० १ १ २ १ १ १ २
यन्मिथुनासो । निका२३माः । अध्वर्य्यवो । रथिरा ।

२ २ ४ १ २ १२ २
सा३४३ः । सुहृवा५स्ता६५६ः ॥(१) सापू । नानउपसू

२ २ २ १२ २ १ २ १ २ २ ३ ४
रे । दधाइना: । योभेअप्राः । रो३द्सी । वीषभा

५ १ २ ० २ १२ २ १
बाः । प्रियाचिद्यस्यप्रियसा । सक्ष२३तो । सतोधनाम् ।

१२ १ २ २ २ ४ १ २
कारिणे । ना३४३ । प्रा३या५ऌसा६५६त् ॥(२) सावा ।

१ २ २ २ २ १२ १२ १ २ १
धितावर्द्धनःपू । यमाइनाः । सोमोमीढ़ा । अभि

२ २ ४ ५ १ १ २ १ ० २
नः । ज्योतिषावीत् । यत्रनःपूर्वंपितराः । पदा२३ज्ञाः ।

१ २ १ २ १ २ २ २ ४
स्वर्विदो । अभिगाः । आ३४३ । द्रा३यिमा५यिष्णा

६५६म् ३) ॥ ५ * ॥ [२]

४२ ३ ४ २ ३
॥ यज्ञायज्ञीयम् ॥ आजा५पृष्ट । वा३र्वा३यिप्रश्न

५ १ २ २ २ २ २ २ १ २ २
ताम । मातीनाऌसोमःपुनानोषसा । दा३द्धामू३षू ।

---

* ऊ० गा० १०प्र० २ख० ५सा० ।

Digitized by Google

१ १ र र र २ १
सपा२न्तियन्मिथुनासोनि। कामार३श्रा। ऊम्मायि।
२ २ १ र २ र १ १ १ र
छ्वा३र्ष्या। वोरथिदासःसू२श्वन्ताउ ॥(१) तासाः। पुना
र र र र र र र २ १ २ २
नउपश्वरेदधानश्रोभेश्रप्रारोदसी। वी३षाश्रा ३ वाः।
१ १ र र २ १
प्रिया२चिद्यस्यप्रियसासः। ऊती२३सा। ऊम्मायि।
२ २ १ र र २ १ २ १
तो३धा। नाक्कारिणेनप्रा२यःउ ॥(२) साव्वाः। वह्नि
र र र र र र र २ १ २ २
तावन्नःपूयमानःसोमामीढ्वांश्रभिनो। ज्यो३तीषा३वी
१ १ र र २ १
त्। यत्रा२नःपूर्वेपितरःप। दश्रार३ःसू। ऊम्मायि।
२ २ १ र ३ २ ११
वा३र्वायि। दोश्रभिगाश्रद्रा२यि। मिष्णाउ। वा२३
११
४५(३) ॥ १३* ॥ [३]

३र ४र ३ ४ ५ ३ १ १
॥ गोष्ठक्रम् ॥ श्राजागृविर्विप्रः। कृता३म्। मा
र ५र र ४ ५ १र र
२३४। तीनांसोमः। पूना। नोश्रसदच्चमूषुसपन्ति
र र १ १ र
यन्मिथुनासोनिकामा२ध्वर्या२। घा२जजवायि। वोरा

* ऋ० मा० १९म० २ष० १२वा०।



Digitized by Google

२ २ १ ५ ४ ५
यि। रासःसोवा३ओ२३४वा। हा५स्तो ६ हायि ॥(१)
३ ४ ३र ४ ५ ३र २ १ र ५ र र
सपुनानउप। हरा३यि। दा२३४। धानयोभेअ।
४ ५ १ र र र र र र र १र
प्रारो। दसीवीषवावःप्रियाचिदस्यप्रियसासऊतोसा२सो
१ र १ १ ५
धा२। हा२ऊऊवायि। नह्वारिणेनप्रोवा३ओ२३४वा।
४ ५ ३ ४ ३र४ ५ ३ २ १
या५ꣳसो६हायि ॥(२) सवर्हिताव२। नःपू३। या२३
र ५ र र र ४ ५ १ र र र र
४। मानःसोमोमी। द्वाꣳचा। भिनोज्योतिषावीद
र र र १ १
अनःपूर्वेपितरःपदज्ञाःस्व२रवर्वा२यि। हा२ऊऊवायि।
र र २ १ ५ ४ ५
दोअभिगाअद्रीवा३ओ२३४वा। आ५ यिषुणो६हा
यि(३) ॥ १०* ॥ [४] ४

अथ माचिदन्यद्विति प्रगाथात्मके द्वितीयसूक्ते—

प्रथमा।

१ २ ३ १ २र ३ १ २ ३ १ २
माचिदन्यद्विशꣳसतसखायोमारिषण्यत।
२ ३ १ १ ३ १ २ ३ १ २ ३ १ २र ३ १ २
इन्द्रमित्स्तोतावृषणꣳसचासुतेमुहुरुक्थाचशꣳसत ॥१†॥

* ऊ० गा० १३प्र० २खा० १०सा०।

† छ० आ० ३, १, ५, १० (१भा० ५०० पृ०) = ऋ० सं० ५, ७, १०, १।

Digitized by Google

हे "सखायः" समान-ख्याताः स्तोतारः! इन्द्र-स्तोत्रात् "अन्यत्" स्तोत्रं "मा चित् विशंसत" मैवोच्चारयत, "मा रिष-ण्यत" मा हिंसिता भवत अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत, "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रम् इत्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह "स्तोत" स्तुत। हे प्रशास्त्रादयः! "उक्था च" उक्थानि शस्त्राणि च इन्द्रविषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" ॥१॥

अथ द्वितीया।

२ १ २ ३ १ २ ३ १ २ ३ १ २र ३ १ २

अवक्रक्षिणंवृषभंयथाजुवङ्गान्नचर्षणीसहम्।

३ १ २ ३ १ २ ३ १ २र ३ १ २

विद्वेषण७संवननमुभयङ्करंमंहिष्ठमुभयाविनम् ॥२*॥५

"वृषभं यथा" वृषभमिव "अवक्रक्षिणम्" अवकर्षणशीलं शत्रूणां हिंसितारं "जुवं" शीघ्रकारिणं "गां न" गामिव वृष-मिवं† "चर्षणीसहम्" मनुष्याणां शत्रुभूतानामभिभवितारं, "विद्वेषणं" विद्वेष्टारं शत्रूणां, "संवननं" सम्यक् सम्भजनीयं स्तोतृभिः "उभयङ्करं" निग्रहानुग्रहयोरुभयोः कर्त्तारं "मंहिष्ठं" दातृतमम् "उभयाविनं" दिव्य-पार्थिव-लक्षणेन उभय-विधा-नेनोपेतम् [यद्वा, स्थावर-जङ्गम-रूपेण द्विप्रकारेण रक्षितव्ये-नोपेतम्। अथवा उभयविधैः स्तोतृभिर्हविर्भिश्चोपेतम्]—एवं विध मिन्द्रमितस्तोतेति पूर्वेणान्वयः॥

* ऋ० वे० ६, ७, १०, २।

† 'गां न—न-शब्द उपमार्थीयः। गामिव पृथिवीमिव'—इति वि०।

Digitized by Google

"जुवं"-"जुरं"—इति पाठो, "संवननं"-"संवनना"—इति च॥ २॥ ५

॥ मैधातिथम्॥ माचिदन्यदोहायि। विशा३ंसाता। सखाया२होश्यि। माऔ३हो। रायिषाउवा। एयाताउवा। इन्द्रमित्स्तोतावृषणाऔ३हो। साचाउवा। सुताउवा। मुहुरुक्थाऔ३हो। चशा। औहो। वाहोर३४वा। सा५तो६हायि॥(१) मुहुरुक्थोहायि। चशा३ंसाता। मुहुरु३हो१। क्थाऔ३हो। चाशाउवा। साताउवा। अवक्रक्षिणंवृषभाऔ३हो। याथाउवा। जूवाउवा। गान्नचाऔ३हो। षणा। औहो। वाहोर३४वा। सा५हो६हायि॥(२) गान्नचोहायि। षणा३यिसाहाम्। गान्ना२होश्यि। चाऔ३हो। षाणाउवा। साहाउवा। विद्वेषणा३ंसंवननमाऔ३हो।

१ २  १ २  १ २  १  २
भायाउवा । काराउवा । काराउवा । मꣳहिष्ठमाऔ

२  १  २र १  २र  ५  ४
३हो । भया । औहो । वाहो२३४वा । वा५यिनो ।

५
६हायि(३) ॥ १५* ॥ [१] ५

अथ उदुत्यइति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ १र २र  २ १ २ १  २
उदुत्येमधुमत्तमागिरःस्तोमासईरते ।

२  १ २  ३ १र  १र  २ ३ २ १ २
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥ १† ॥

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरा" स्तुति-रूपया वाचा "स्तोमासः" त्रिवृदादि-स्तोमाश्च "उदीरते" हे इन्द्र ! त्वामुद्दिश्य उद्गच्छन्ति ऊर्द्ध्वं प्रसरन्ति [ईर गतौ आदादिकः ( आ० ) ] । तत्र दृष्टान्तः—"सत्राजितः" सहैव शत्रून् जयन्तः "धनसा" धनानि सम्भजन्तः [वन षण सम्भक्तौ (भ्वा० प० ), "जन-सन-खन-क्रम-गमो विट् ( ३, २, ६७ ), "विड्वनोरनुनासिकस्यात् ( ६; ४, ४१ )"—इत्यात्वम्, "अक्षितोतयः" अक्षिताः क्षय-रहिताः ऊतयो रक्षा येषां ते तथोक्ताः [क्षियो भावे निष्ठा, "निष्ठायामण्यदर्थे ( ६, ४, ६० )"—इति

---

* ऊ० गा० ६प्र० १ख० १५गा० ।

† छ० आ० ३, २, १, ९ ( १भा० ५१९ पृ० ) = ऋ० वे० ५, ७, १७, ५ ।

Digitized by Google

पर्युदासाद्दीर्घाभावः अतएव "च्छियो दीर्घात् (८, २, ४६)" —इति निष्ठा-नत्वाभावश्च "वाजयन्तः" वाजमन्नमिच्छन्तः, वाचि "न छन्दस्यपुत्रस्य (७, ४, ३५)"—इतीत्व-दीर्घयोः प्रतिषेधः ], एवङ्गुणविशिष्टाः "रथाइव" ते यथा विविधमितस्ततः उत्तिष्ठन्ति तद्वदुदीरत इत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ ३१ २ ३ १ २ ३ १ २ ३ २ ३ १२
कण्वाइवभृगवःसूर्य्याइवविश्वमिद्धीतमाशत।
१ २ १ २ ३१ २ ३१२ ३१२
इन्द्रꣳस्तोमेभिर्महयन्तआयवःप्रियमेधासोअस्वरन्॥२*॥६

"कण्वाः" कण्व-गोत्रोत्पन्ना ऋषयः "इव" सुवन्तः "भृगवः" भृगु-गोत्रोत्पन्ना ऋषयः† "धीतम्" आध्यातम् "विश्वमित्"‡ व्याप्तं तमेव "इन्द्रम्" "आशत" आनशिरे "सूर्य्याइव" यथा सूर्य्य-रश्मयः सर्वं जगद् व्याप्नुवन्ति, तद्वत्। अपिच "प्रियमेधासः" प्रिययज्ञाः एतत्संज्ञका वा¶ "आयवः" मनुष्याः तमेवेन्द्रं "महयन्तः" पूजयन्तः "स्तोमेभिः" स्तोत्रैः "अस्वरन्" अस्तुवन् [ स्वृ शब्दोपतापयोः भौवादिकः (प०) ॥ "आशत"-"आनशुः"—इति पाठौ ॥ २ ॥ ६

---

* ऋ० वे० ५, ७, २८, १।

† अत्राह यास्कः—"अर्चिषि भृगुः सम्बभूव भृगुर्भृज्यमानो न देहे"—इति निरु० नै० ३, १७। 'भृगवः—भर्जनकराः सूर्य्याइव यथा आदित्य-रश्मयः'—इति वि०।

‡ 'इत्—इति पाद-पूरणः'—इति वि०।

¶ अत्राह यास्कः—"प्रियमेधः प्रिया अस्य मेधाः"—इति निरु० नै० ६, १७।

Digitized by Google

५ ४ २ ४ ५ ४ ५ १
॥ अभीवर्त्तम् ॥ उदू३त्ये३माधुमत्तमोवा। गायिर

२र र १ २ १ र २
स्स्तोमा। सआयिरा१ता२यि। सात्राजितौ३१२३४।

२ ४र ५ २ १ २ र १ २ २ २
धनसाअ। क्षितोता१या२ः। वाजाया१न्ता२ः। रथाइः।

१ २ १ १ १ १ ५र ४ २ ४ ५र ४
आ२३४५यि। वा२ ३ ४ ५ ॥(१) वाजा३रा३न्तोरथाइवो

५ १ २ १ २ १ र २
वा। वाजयन्तः। रथाआ१यिवा२। काण्वाइवा३१२३

३ ४ ५र २ १ २ १ २
४। भृगवःसू। रियाआ१यिवा२। विश्वामा१यिद्धी२।

२ २ १ २ १ १ १ ११ ५ ४ २ ४
तमा३। आ२३४५। ता२३४५ ॥(२) विश्वा३मा३यिद्धी

५र ४ ५ १ २ र १ २ १
तमाअतोवा। वायिश्वमिद्धी। तमाआता२। आयिन्द्रꣳ

र २ २ ४५ २ १ २ १
स्तोमा३१२३४यि। भिर्महय। तआया१वा२ः। प्रिया

२र २ १ २ १ १
मा१यिधा२। सोआ३। स्वा२३४५। रा२३

१ १
४५न्(३) ॥ १६* ॥ [१] ६

* ऊ० गा० ६प्र० १ख० १६सा० ।

Digitized by Google

अथ पर्यूष्विति तृचात्मकं चतुर्थं सूक्तम्—

तत्र प्रथमा।

२ ३ १ २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
पर्यूषुप्रधन्ववाजसातयेपरिवृत्राणिसक्षणिः।
३ २ ३ १ २ ३ १ २
द्विषस्तरध्याऋणयानईरसे॥ १* ॥

हे सोम! "सु" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि प्रधन्व" परितः प्रगच्छ [यद्वा, "वाजसातये" अन्नस्य लाभाय सङ्ग्रामं प्रगच्छ]। किञ्च "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् परिगच्छ। तदेवोच्यते—"नः" अस्माकम् "ऋणया" ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै" तरीतुं हन्तुम् "ईरसे" परिगच्छति।

"ईरसे"-"ईयसे"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अजीजनोहिपवमानसूर्यंविधारेशक्मनापयः।
१ २ ३ १ २ ३ १ २
गोजीरयारंहमाणःपुरन्ध्या॥ २† ॥

हे "पवमान" सोम! त्वं "पयः" पयस उदकस्य "विधारे" विधारके अन्तरिक्षे "शक्मना" सामर्थ्येन बलेन "सूर्यम्"

* छ० आ० ५, १, ५. २ (१ भा० ८७१ पृ०)=ऋ० वे० ७, ५, २२, १।
† ऋ० वे० ७, ५, २२, २।

"अजीजनः हि"* उत्पादितवान् भवसि खलु। कीदृशः? "गोजीरया" स्तोतृभ्यो गवां प्रेरकेण स्तोतॄणां प्रेरित-पशुकेमेत्यर्थः, तादृशेन†; "पुरन्ध्या" बहुविध-प्रज्ञानेन युक्तः‡ "रंहमाणः" वेगं कुर्वाणस्त्वं सूर्य्यमजीजनः॥ २॥

अथ तृतीया।

१ २ १ २ ३ १ १ ३ १ २
अनुहित्वासुतꣳसोममदामसि॥ ३ ¶॥ ७

—इति तृतीयाया ऋचः प्रतीकमिदम्। सा चान्यत्र (५,१, ५, ६=१भा० ८७७पृ०) व्याख्याता॥ ३॥ ७

३ २ २ ४ ५ २
॥ श्यावाश्वम्॥ परा३१यि। ऊ३ष्। प्रध। न्वा
४र ५ र र २ १ १र
३वा। एहियाजा। सातयेपा। रि। वृत्रा२। एहि
१ २ ४ ५ २र
या२। पासच्वणायिर्द्दा३यिषा३ः। ता२३४रा। ऐहा
१र र १ २ ४ २
२यि। एहिया२। धियाक्षणयाना३ई३। रा३४पुसो
५ ३ २ २ ४ ५ २ ४र
६हायि॥(१) अजा३१यि। जा३नो। हिप। वा३मा।

---

* 'हि-इति पद-पूरणः'—इति वि०।

† गोजीरया रंहमाणः—गोजीरेव संयुक्तया दध्ना वा मिश्रया. रंहमाणः वेगेन गच्छमानः—इति वि०।

‡ 'पुरन्ध्या—उदकेन'—इति वि०।

¶ ऋ० चा० ५, १, ५, ६ (१ भा० ८७७पृ०)=ऋ० वे० ७, ५, २२, २।



Digitized by Google

५ १ १ २र १र १र
एहिया। ना। हरियंवायि। धा। ऐश्रा२। एहिया
र १ २ ४ ५ २र
२। क्ननापृषोगो३जी३जी३। रा२३४या। ऐहा२यि।
१र १र २ ४
एहिया२। र९हमाणाःपू ३ रा ३ म्। धा ३ ४ ५ यो ६
४ ३ २ २ ४ ५ २ ४
वायि॥(२). मनु३१। हा३यित्वा। सुतम्। सो३म।
५ १ र २र १ १र
एहिया। षा। दामभिमा। वे। समा२। एहिया
र १ २ ४ ५ २र
२। यंराजिये वा३जा९३। आ२३४भी। ऐहा२यि।
१र १र ५
एहिया२। पवमानाप्रा ३ गा ३। हा ३ ४ ५ सो ६हा
यि(३) ॥ १८ * ॥ [१]

२ र १ १ र
॥ आन्धीगवम्॥ पर्य्युषुप्रधा१न्वावा। जसात।
र २ १ १र २ १ २१२३११
येपा२३री। ऊम्मा२१ऽ३। वृत्राणिसत्त्वणिर्द्धिषस्तरा२३
११ १ र २ १ २ १ १
४५। धारया३उवाणी२या। ना२३ई। रसा। औ
४ ५ २ र र २ २
३होवा॥(१) अजीजनोहिपा१वामानहरि। षंवा २ ३

* ऋ० मा० ६प्र० १अ० १८वा०

यिधाऊम्मा२१ऽ२ । रेभक्कनापयेगोजीरया२ ३ ४ ५ । रा२हा३उवा । मा२पगम् । पू२३राम् । धिया । औ३होवा ॥(२) अनुच्छित्वासुतां१२सोमा । मदाम । इ मा२३चे । ऊम्मा२१ऽ३ । समर्याराज्येवाजा२अभीर२३ ४५ । पावा३उवा । मा२ना । प्रा२३गा । इसा । औ३होवा । हो५ई । डा(३) ॥ १८* ॥ [२]

॥ विराट्सुवामदेव्यम् ॥ पाऽ५रि । जघू३ प्रा३ध न्वावा । जा । सातयेपरिवृत्राणिसक्षणिर्द्विषस्त । रा । औ३होहायि । जा । सातयेपरिवृत्राणिसक्षणिर्द्विषस्त । रा । औ३होहायि । धियार२३क्णाया: । नऔहो३ । ऊम्मा२ । राऽ२सो३५हायि ॥(१) आऽ५जी । जनो३ यिपवमा । ना । इरियं विधारेभक्कनापयोगोजीर ।

* ऊ॰ गा॰ ६प्र॰ १ख॰ १८गा॰ ।

२ र२ १ र रर र र र
या। औ३होवायि। ना। ऋयिंविधारे शक्मनापयोगो

२र१ २ र२ १ र२ २र
जीर। या। औ३होवायि। र९हा२३माणः। पुरी

२ १ १ २ २
हा३। ऊम्मा२। धा२यो३५हायि ॥(२) आ५नु।

४ २ ४ ५ १ र२ र १र २र
हित्वा३ह्व३त९सोमा। मा। दामसिमहेसमर्य्यराज्ये

१र२र १ २ र२ १ र र
वाजा९ष। भा। औ३होवायि। मा। दामसिमहेसम

र र र २र १ २ र२ १ र
र्य्यराज्येवाजा९ष। भा। औ३होवायि। पवा२३मा

र२ २र र १ १ २
माना। प्रगौहो३। ऊम्मा२। हा२सो३५हा

यि(३) ॥ ८* ॥ [३]

५ २र र ४ र ५ १ र
॥ गौरीवितम् ॥ परि। जमू३। प्रधन्वावा। जसा

र १ २ ४
तयेपरिवृत्रा२३। णायिसत्त्वणा३१२३यिः। द्विषा५स्तरा।

१ २ ४ ५ ४ ५
ध्याऋणया३१२३ः। नओवा। रा५सोहायि(१) ॥ ५† ॥ [४]

---

* ऊ० गा० ६प्र० २खं० ८सा० ।

† ऊ० गा० १०प्र० १खं० ५सा० ।

Digitized by Google

५ ४ १ २र ४ ५ २ १
॥ ओकोनिधनम्॥ अजा३यिजनोह्विपवमा। नसू।
र र १ र १
रियंविधारेभक्षना २पाया २ः। गोजा२यिराया२।
१ ५ २ १ २ ५र र ५र
र७हमा२३४णाः। पुरम्। धा२या२३४औहोवा। औ
र २ ५
होवा। ओ२३४काः(२)॥ ६ *॥ [५] ७

अथ परिप्रधन्वेति-तृचात्मकं पञ्चमं सूक्तम्—

तत्र प्रथमायाऋचः

२ ३ १ ३
परिप्रधन्व॥ १ †॥

—इति प्रतीकमिदम्। सा चान्यत्र (५, १, ५, १—२भा० ८६८पृ०) व्याख्याता॥ १॥

अथ द्वितीया।

३ १र २र ३ १र २र ३
एवामृताय महे क्षयाय
२ २ १ २ ३ २ ३ १ २
सशुक्रोअर्षदिव्यःपीयूषः॥ २ ‡॥

* ऊ० गा० २०प्र० २ख० ६सा०।

† ऋ० आ० ५, १ ५, १ (२भा० ८६८पृ० )=ऋ० वे० ७, ५, २०, १।

‡ ऋ० वे० ७, ५, २०, २।

Digitized by Google

हे सोम! "शुक्रः" दीप्तः "दिव्यः" दिवि भवः "पीयूषः" देवैः पातव्यः "सः" त्वम् "अमृताय" अमरत्वाय "महे" महते "क्षयाय" निवासाय च "एव अर्ष" एवं पवस्व क्षर ॥ २ ॥

अथ तृतीया।

१ २ ३ १ २ २
इन्द्रस्तेसोमसुतस्यपेयात्

३ १ २ ३ २ ३ १ २ १ २
क्रत्वेदक्षायविश्वेचदेवाः ॥ ३ * ॥ ८

हे "सोम!" "सुतस्य" अभिषुतस्य "ते" तव सम्भूतं (रसमिति शेषः) "इन्द्रः" "पेयात्" पिबतु [पिबतेराशीर्लिङि रूपम्]। किमर्थम्? "क्रत्वे" क्रतवे प्रज्ञानाय "दक्षाय" बलाय "च" किञ्च, अमी "विश्वे" सर्वे "देवाः" च त्वदीयं रसं पिबन्तु ॥

"पेयात्"-"पेयाः"—इति पाठौ ॥ ३ ॥ ८

१ २ १
॥ वाङ्गिन्धनंसौहविषम् ॥ प। येपारी। प्रधन्वा।

१ २ र र २ १ २र १
होवा३होयि। इन्द्रायसोमा। होवा३होयि। स्वादु

र २ १ र र १ ४ ५
र्म्मिंचाया। होवा३हो२३यि। पूष्णोवाओ२३४वा। भ

* ऋ० वे० ७, ५, २०, २।

गा५याउ ॥(१) एव। एष्मायिवा। एव। एषायिवा।
अमृताया। होवा ३ होयि। मर्त्त्ययाया। होवा ३
होयि। सम्भुक्तोमर्षा। होवा३हो२३यि। दिव्यौवा
ओ२३४वा। पीयू५षाउ ॥(१) इन्द्रः। एष्मायिन्द्राः।
इन्द्रः। एषायिन्द्राः। तेसोमा। होवा३होयि। सु
तस्यपेयात्। होवा३होयि। क्रत्वेदचाया। होवा ३
हो २ ३ यि। विश्वौवाओ २ ३ ४ वा। वदा५यिवाउ।
वा(३) ॥ २०* ॥ [१]

॥ वारवन्तीयम् ॥ परिप्रधाओहोहायि। ष्वाई२३४
न्द्रा। यसोमा२३४हायि। स्वादुर्मित्रा३३। औहोवा।
इहा२३४हायि। उऊवा२३४या। पू। ष्णायिभगा३४।
औहोवा। इहा२३४हायि। औहो३१२३४। या। ए

* ऊ० गा० ६प्र० १ख० २०ना०।

हियाईहा ॥(१) एवाम्हताऔहोहायि । यामा२३४हे । अयाया२३४हायि । मघूक्रोआ३४ । औहोवा । इहा २३४हायि । उक्रवा२३४र्षा । दिव्याःपीयू३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । षाः । एहिया ईहा ॥(२) इन्द्रस्तेसोऔहोहायि । माह२३४ता । अ पेया२३४हायि । क्रत्वेदक्षा३४ । औहोवा । इहा २३ हायि । उक्रवा२३४या । वि । श्वायिचष्टा३४ । औहो वा । इहा२३४हायि । औहो३१२३४ । वा । एहियाई हा । होपुई । डा ३) ॥ १०* ॥ [२]

॥ सफम ॥ परिप्रा३धान्वाई२३४न्द्रा । यसोमा२३ । स्वा३२३४दूः । मित्रा । यपूष्ण३मा३ । गा३४५योईहा यि(३) ॥ ८ † ॥ [३]

---

* क० गा० ६प्र० २ख० १०मा० ।

† क० गा० १०प्र० १ख० ८मा० ।

Digitized by Google

२ १ २ ५ १
॥ वाजदावर्यम् ॥ परिप्रधा। न्वार२इ२३४द्रा। या

२ ५ १ १
२सो२ ३ ४ मा। स्वा २ दुः। मा २ ३ यित्रा। या

१ २र १ ५ ४ ५ २र र
२पू। च्छोभो२३४वा। गा५योऽ६वायि ॥(१) एषामृता।

१ २ ५ १ २ ५ १
या२मा२३४चे। चा२या२३४या। सा२भ्रू। क्तो २ ३

२ १ १ २ १ ५ ४ ५
श्रा। षा२दायि। व्य:पो२३४वा। यू५षोऽ६वायि ॥(२)

२ र १ २ ५ १ २ ५
इन्द्रस्तेसा। मा२सू२३४ता। स्या२पे२३४यात्। क्रा२

१ २ १ २र १ ५ ४
त्वे। दा२३त्त्वा। या२वायि। र्श्वं चो२३४वा। दा५

५
यिवोऽ६हायि(३) ॥ ७* ॥ [४]

२ १ १ २ ५ २ २
॥ स्वर्निधनम् ॥ परी३हायि। प्रधा२३४न्वा। इन्द्रा

१ २ ५ २र २ १ २
३ यो। यसो २ ३ ४ मा। स्वादू ३ वौयि। मित्रा

५ १र २ १ २ ५ ४र ५र
२ ३ ४ या। पूष्णा ३ वौयि। भगा २ ३ ४ या। पूष्णा

४र ५ २र २ २ २ ४
भगाय। पूष्णा३ ४३। वो३४३यि। भा३गा५या६

* क० गा० १२प्र० १ख० ७गा०।



Digitized by Google

५६ ॥(१) एवा३होयि । अमृता२३४या । मर्त्ये३होयि ।
ष्वया२३४या । सम्रा३हो । क्रोषा२३र्षा । दिव्या३हो
यि । पीयू२३४षाः । दिव्यःपीयूषः । दिव्या३४३: ।
हो३४३यि । पी३यू५षा६५६: ॥(२) इन्द्रा३हो । तेसो
२३४मा । सुता३हो । स्यपे२३४यात् । क्रत्वे३होयि ।
दक्षा२३४या । विश्वे३होयि । चदा२३४यिवाः । विश्वे
चदेवाः । विश्वे३४३ । हो३४३यि । चा३दा५यिवा६५
६: । ए३ । सुवर्व्वति२३४५(३) ॥ ४* ॥ [५]

॥ वाजजित् ॥ परिप्रधन्वा । होवा३होयि । इन्द्रा
यसोमा । होवा३होयि । स्वादुर्म्मित्राया । होवा३
होयि । पूष्णेभगाया । होवा३होर । वा२३४औ
होवा ॥(१) एवामृताया । होवा३होयि । मर्त्येष्वया

* ऊ० गा० १४प्र० १ख० ४सा० ।

या। होवा३होयि। सघ्य्क्रोऽमर्षा। होवा३होयि।
दिव्यःपीयूषाः। होवा३होर२। वा २ ३ ४ औहोवा॥
इन्द्रस्तेसोमा। होवा३होयि। सुतस्यपेयात्। होवा
३होयि। क्रत्वेदक्षाया। होवा३होयि। विश्वेचदेवाः।
होवा३होर२। वा२३४औहोवा। वाजीजिगीवाविश्वाध
ना२नौ२३४५(२)॥ ६*॥ [६]

॥ पौष्कलम्॥ परिप्रा३ध। न्वाइ२३४न्द्रा। यसो।
मास्वा२३४दूः। मित्रा। या२३४५। पू६५६। ष्णा
गाया२३४५(१)॥ १९†॥ [७] ८

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य
द्वितीयः खण्डः॥ २॥

---

* ऊ० गा० १७प्र० २ख० ६गा०।

† ऊ० गा० ११प्र० १ख० १९गा०।

अथ तृतीय-खण्डे—

सूर्य्यस्येवेति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २
सूर्य्यस्येव रश्मयो द्रावयित्नवो

३ १ २ ३ १ २ ३ १ २
मत्सरासः* प्रसुतः साकमीरते।

१ २ ३ २उ ३ १ २ ३ १ ३
तन्तुं ततं परि सर्गास आशवो

१ २ ३ २ १ ३ १ २ २ ३ २
नेन्द्रादृते पवते धाम किञ्चन॥ १†॥

"सूर्य्यस्य" सर्वस्य प्रेरकस्य सुवीर्यस्यादित्यस्य "रश्मय इव" सर्वतो व्यापकाः किरणा इव "द्रावयित्नवः" सर्वत्र द्रवणशीलाः "मत्सरासः" मदकराः "प्रसुतः" प्रकर्षेण सुताः अभिषुताः [एकवचनं छान्दसम् (३, १, ८५)] "आशवः" यज्ञेषु चमसेषु च व्याप्ताः "सर्गासः" सृज्यमानाः सोमाः "ततं" विस्तृतं "तन्तु" तन्तुभिः कृतं वस्त्रं दशापवित्रं "साकं" सह युगपत् "परि-ईरते" परितो गच्छन्ति। ते सोमाः "इन्द्रादृते" इन्द्रं वर्ज-यित्वा अन्यत् "किञ्चन धाम"‡ देव-शरीरं लक्षीकृत्य "न पवते"

* "प्रसुवः"—इति ऋ०-पाठः।

† ऋ० वे० ७, २, २२, १।

‡ 'इन्द्रं मुक्त्वा नान्यत् सोमस्य स्थानमस्ति'—इति वि०।

न गच्छन्ति ॥ [इन्द्रस्य धाम्नो यष्टव्यत्वञ्च "अयामीन्द्रस्य प्रियधामानि"—इति मन्त्र-वर्णादवगम्यते ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ ३ १ १ २ २ ३ १ १ २
उपोमतिःपृच्यतेसिच्यतेमधु

२ १ २ ३ २ ३ १ २
मन्द्राजनीचोदतेअन्तरासनि ।

१ २ ३ १ २ ३ १ २ ३
पवमानःसन्तनिःसुन्वतामिव

१ २ ३ १उ ३ १ २
मधुमान्द्रप्सःपरिवारमर्षति ॥ २* ॥

अस्मिन् परिवाद-रूपे स्तोत्रे इन्द्रे "मतिः" स्तुतिरूपा "पृच्यते" स्तोतृभिः संयोज्यते [ पृची सम्पर्के ( द्वि० आ० ) ]। तथा "मधु" मद-करः सोमः इन्द्रार्थं "सिच्यते" अद्भिर्यव-सक्तुभिश्च सिक्तो भवति, ततः "मन्द्राजनी" [अज गति-क्षेपणयोः ( भ्वा० आ० )—इत्यस्य ल्युटि ङीपि रूपम्] मदकरस्य रसस्य प्रेरयित्री सोमधारा तस्येन्द्रस्य "आसनि" आस्ये "अन्तर्" मध्ये "चोदते" प्रेर्य्यते [ आस्य-शब्दस्य "पद्दन्नोमासित्यादिना ( ६, १, ६३ ) आसन्नित्यादेशः ] । किञ्च "सन्तनिः" यज्ञादिषु सम्यक् विस्तृतः"सुन्वताम्"अभिषुतवतां यजमानानां सम्बन्धिनी,

---

* ऋ० वे० ७, २, २१, २ ।

† 'सन्तनिः—सन्ततिः, सुन्वतामिव—यथा सुन्वतां सन्तनिः कर्म-सन्ततिः एवं सोमस्य धारयेति'—इति वि० ।

Digitized by Google

"पवमानः" पूयमानः सोमः "द्रप्सः" द्रुत-गमन-शीलः "वारम्" अवि-वालमयं पवित्रं "परि" परितः "अर्षति" गच्छति। "इव" —इति पाद-पूरणः॥

"सुन्वतामिव"—"प्रन्नतामिव"—इति पाठौ॥ २॥

अथ तृतीया।

१ १ २ ३ १ २ ३ १ २
उक्षामिमेतिप्रतियन्तिधेनवो।
३१ २ ३ १२ ३२ ३ २
देवस्यदेवीरुपयन्तिनिष्कृतम्।
१ २ ३ १ २ ३ १ २ ३ २ ३
अत्यक्रमीदर्जुनंवारमव्यय
३ १ २ ३ २उ ३ १ २
मत्कन्ननिक्तम्परिसोमोअव्यत॥ ३*॥ ८

"उक्षा" रेतसः सेक्ता वृषभः पुरतो "मिमेति" शब्दायते [माङ् माने शब्दे च (जु॰ आ॰) तं वृषभं "धेनवः" गावः† "प्रति यन्ति" अनुगच्छन्ति। तथा "देवस्य" द्योतमानस्य संस्कृतं स्थानं "देवीः" देव्यः स्तुतयः "उप यन्ति" उपगच्छन्ति [अनेनाहित-सोमः स्तुतिभिरभिधीयते। सोमो हि द्रोणकलशाभिगमन-काले शब्दं करोति, तमनु धेनवः प्रीणयित्र्यः स्तुतयः परियन्ति देवस्य स्थानं स्तुतयोऽभि गच्छन्ति। तथा सोऽयं

* ऋ॰ वे॰ ७, २, २१, ४।

† 'धेनवः—धेट् पाने (भ्वा॰प॰), पिबन्त्युदकानि आदित्य-रश्मयः। अथवा * * *'— इति वि॰।

Digitized by Google

सोमः "अर्जुनं" श्वेतवर्णम् "अव्ययम्" अविमयम् अवेः स्वभूतं "वारं" वालं पवित्रम् "अत्यक्रमीत्" "अतिक्रामति [अतिक्रम्य पात्राणि गच्छतीत्यर्थः]। किञ्च सोमः "अत्कं न" आत्मीय-कवचमिव "निक्तम्" उज्ज्वलं अग्रय-द्रव्यम् "परि अव्यत" परितः संवृणोति ॥

"मिमिति"–"मिमाति"—इति पाठौ ॥ ३ ॥ ९

॥ वाजजित् ॥ सूर्य्यस्येवा। रश्मयोद्रा। वायित्न वाः। होवा३होयि। मत्सरासाः। प्रसुतःसा। का मीरतायि। होवा३हायि। तन्तुन्तताम्। परिसर्गा। साआश्रवाः। होवा३होयि। नन्दोहतायि। परतेधा। माकिञ्चना। होवा३होर। वा २३३ औहोवा ॥(१) उ२ामतायिः। पृच्यतेसायि। च्यातेमधू। होवा३हो यि। मन्द्राजनायि। चोदतेया। तारासनायि। हो वाहोयि। पवमानाः। सन्तनिःमू। न्वातामिवा। हो वा३होयि। मधुमान्द्रा। पः‌परिवा। रामर्षतायि।

२ १ ३ ४र र २र १
होवा३होर। वा२३४औहोवा॥२) उच्चामिमायि।
२१ २र१र २ १ २र १
तिप्रतिष्ठा। तोधेनवा:। हौवा३होयि। देवत्सदायि।
२र १ २र १ २ १ १
वीरुपया। तीनिष्कृताम्। होवा३होयि। मत्यक्र
२ १ २र१ र १
मायिन्। मर्ज्जुनन्वा। रामव्ययाम्। होवा३होयि।
२ १ १ २र १ २ १
मत्कक्मनायि। क्रम्परिसो। मोमव्यता। होवा३हो
३ ४र र २र१र २र १र २र ३ १ १
२। वा२३४औहोवा। वाजीजिगीवाविश्वाधना२नौ२ ३
१ १
४५॥२१*॥[१]

२र १ र र २ १
॥कावम्॥ हव्योवा। स्रोवरस्मयेद्रा। वसिन्ना
१ र २ र १
वा२:। मत्सरास:। चसुतःसा। कमीराता२यि।
१ २ र १ १ २ ४ ५
तन्तुन्ततम्परिसर्गा। सस्राम्रावा२३:। नेन्द्रा३दार्त्ता
२ १ १ २ ४
यि। पवतायिधा२३। माका३यिश्चा५ना ६ ५ ६॥(१)
२ १ र २ र १ १ र
उपोवा। मतिःपृच्यतेसायि। च्यतेमाध२। मद्राज

---

* ऋ० सा० ६प्र० १ख० २१सा०।

र र र २ र १ १ र
नीचोदतेश्रा। तरामाना२यि। पवमानःसन्तनिःस्र।

२ र १ १ २ ४ ५ २ १
न्वतामायिवा२३। माधू३मान्द्रा। स्तःपरायिवा २ ३।

२ २ ४ १ १ र
रामा३र्षापूता६५६यि ॥(२) उच्चोवा। मिमेतिप्रतिया।

२ र १ १र र र २ १
तिधेनवा२ः। देवस्यदेवीरूपया। तिनिष्कार्त्ता२म्।

१ र २ १ १ २ ४ ५
अत्यक्रमीदज्जनम्वा। रमव्याया२३म्। आत्का३न्नानी।

२ १ १ २ ४
क्तम्परायिसो२३। मोआ३व्यापूता६५६(३) ॥११*॥ [२]९

अग्निनर इति त्र्यचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

२ २उ ३ १ १ २ ३ २ ३
अग्निन्नरोदीधितिभिररण्यो

१ २ ३ २
र्हस्तच्युतञ्जनयतप्रशस्तम्।

३ १ २ ३ १ २ ३ २
दूरेदृशङ्गृहपतिमथर्व्युम् ॥ १‡ ॥

---

* ऊ० गा० ९प्र० २ख० ११सा०।

† 'अग्निन्नः—एतदग्निष्टोमसाम। वामदेव्यम्'—इति वि०।

‡ छ० आ० १, २, २, १० (१भा० २१५ पृ०) = ऋ० वे० ५, १, २३, १।



Digitized by Google

हे "नरः" नेतार ऋत्विजः! यूयं "प्रशस्तं" प्रकर्षेण स्तुतं "दूरेदृशं" दूरे दृश्यमानं दूरे पश्यन्तं वा "गृहपतिम्" गृहाणां पालकम् "अथव्युम्" अगम्यम् अतनवन्तं वा "अग्निम्" "अरण्योः" सकाशात् "हस्तच्युतं" हस्तगतं "दीधितिभिः" अङ्गुलिभिः "जनयन्त" उत्पादयन्त॥

"हस्तच्युतञ्जनयन्त"-"हस्तच्युतोजनयन्त"—इति पाठौ, "अथव्युम्"-"अथर्य्युम्"—इति च॥१॥

अथ द्वितीया।

२ ३ १ २ उ ३ १ २ १ उ २ र
तमग्निमस्तेवसवोन्यृण्वन्
३ २ ३ १ २ ३ १ २
सुप्रतिचक्षमवसेकुतश्चित्।
३ २ ३ १ २ उ ३ २ ३ १ २
दक्षाय्योयोदमआसनित्यः॥२*॥

"यः" अग्निः "दमे" गृहे गृहे "दक्षाय्यः" पूजनीयो हविर्भिः समर्द्धनीयो वा "नित्यः" अजस्रः "आस" बभूव "तं" "सुप्रतिचक्षं" सुप्रतिदर्शनम् "अग्निं" "कुतश्चित्" सर्वस्मादपि भयहेतोः "अवसे" रक्षणाय "वसवः" वासकाः वसिष्ठाः स्तोतारः "अस्ते" गृहे "न्यृण्वन्" न्यदधुः॥२॥

---

* ऋ० वे० ५, १, १२, २।

† विवरण-नये आसनित्य इत्येकं पदम्, तथाहि—'आसनित्यः—आसमासनं नित्यं यजमान-गृहे यस्य'—इति तद्व्याख्यानम्। विवदन्तैतत् पदकारादीनाम
१ २र १ २र
'आस। नित्यः"—इति दर्शनात् बहुव्रीहि-स्वराश्रुतेश्चेति विचार्यम्।

अथ तृतीया।

१ २ ३ १र २र ३ १र
प्रद्धो अग्ने दीदिहि पुरो नोऽजस्रया सूर्म्या यविष्ठ।
१र २र ३ १ २ ३ १ २
त्वांशश्वन्त उपयन्ति वाजाः॥ ३* ॥ १०

हे "यविष्ठ" युवतमाग्ने! "प्रेद्धः" प्रकर्षेण समिद्धः त्वम् "अजस्रया" अमरणशीलया "सूर्म्या" ज्वालया "नः" अस्मदर्थं "पुरः" पुरस्तात् आहवनीयायतने "दीदिहि" दीप्यस्व। "त्वां" "शश्वन्तः" बहवः "वाजाः" अन्नानि हवींषि "उपयन्ति" उपगच्छन्ति† ॥ ३ ॥ १०

---

* ऋ० वे० ५, १, २३, २ = य० वे १७, ७६।

† अत्रेयं महीधर-व्याख्या—"हे 'यविष्ठ!' [अतिशयेन युवा यविष्ठः। अतिशायने तमबिष्ठनौ, स्थूलदूरयुवेत्यादिना व-लोपे पूर्वगुणः] हे युवतम! हे 'अग्ने!' त्वं 'नो'ऽस्माकं 'पुरो' अग्रे 'दीदिहि' दीप्यस्व [दीव्यतेर्विकरण-व्यत्ययेन जुहोत्यादित्वात् शपः श्लौ द्वित्वम्, तुजादीनामिति पूर्व-दीर्घः]। किम्भूतस्त्वम्? 'अजस्रया' अनुपक्षीणया 'सूर्म्या' समित्काष्ठेन 'प्रेद्धः' प्रकर्षेण दीप्तः [सूर्मी शब्दः काष्ठ-वाचकः; यद्वा, लोहमयी शृङ्गन्ती स्थूणा सूर्मी। अजस्रया सूर्म्या सूर्मी-समानया ज्वालया दीदिहि। सूर्मी-शब्दो ज्वालोपलक्षकः]। हे अग्ने! यतः शश्वन्तो निरन्तर-भाविनो वाजाः अन्नानि हवींषि त्वामुपयन्ति प्राप्नुवन्ति अतो दीप्यस्वेत्यर्थः"—इति।

आयङ्गौरिति तृचात्मकं तृतीयं सूक्तम्,*

तत्र प्रथमा।

१र २र ३ १ २ ३ १ २ ३ २
आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः।
३ १ २ ३ १ २
पितरञ्चप्रयन्त्स्वः॥ १† ॥

"गौः" गमनशीलः "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः "अयं" सूर्य्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्व्वस्यां दिशि "मातरं" सर्व्वस्य भूतजातस्य निर्मात्रीं भूमिम् "असदन्" आसीदति प्राप्नोति [सदेश्छान्दसो लुङ्, लृदित्त्वात् च्लेरङादेशः। ततः "पितरं" पालकं द्युलोकं "च"-शब्दादन्तरिक्षञ्च "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः शोभन-गमनो भवति [यद्वा, पितरं स्वर्द्युलोकं प्रयन् वर्त्तते] ॥ १ ॥

---

* 'उक्रमग्निष्टोमसाम। इद्दानौं मानसं स्तोत्रं भवति। * * *। मनसाभिष्टुरोति। मनसोद्गायति। मनसा प्रतिहरति। मनसा निधनमुपयन्ति। एतन्मानसं येनात्यग्निष्टोमायङ्गौः पृश्निरक्रमीदिति'—इति वि०।

† ऋ० सा० प० ३, ५, ४ (१भा० ३४३ पृ०) = ऋ० वे० ८, ८, ४७, १ = य० वे० ३, ६।

Digitized by Google

अथ द्वितीया।

२ १ २    ३ २उ   ३ १ २   ३ २
अन्तश्चरति रोचनास्य प्राणादपानती।
१र २र   ३ १र   २र
व्यख्यन्महिषो दिवम्॥ २*॥

"अस्य" सूर्य्यस्य "रोचना" रोचमाना दीप्तिः "अन्तः" शरीर-मध्ये मुख्य प्राणात्मना "चरति" वर्त्तते। किङ्कुर्वती? "प्राणादपानती" मुख्य-प्राणस्य प्राणाद्या वृत्तयः, तत्र प्राणनं नाड़ीभिरूर्द्ध्वं वायोर्निर्गमनम्, तथाविधात् प्राणात् प्राणनात् अनन्तरम् अपानती, अपानं तन्नाड़ीभिरवाङ्मुखं वायोर्नमनं तत् कुर्वती, [अप-पूर्व्वादनितेः लटः शतृ, अदादित्वाच्छपोलुक्, "उगितश्च (४, १, ६)"—इति ङीप्, "शतुरनुमः (६, १, १७३)"—इति नद्यनुदात्तत्वम्। यद्वा, 'अन्तर्' द्यावापृथिव्योर्मध्ये 'अस्य' सूर्य्यस्य 'रोचना' रोचमाना दीप्तिः 'चरति' गच्छति। रुच दीप्तौ (भ्वा॰ आ॰), "अनुदात्तेतश्च हलादेः (३, २, १४९)"—इति युच्। किङ्कुर्वती? 'प्राणात्' प्राणनात् उदयादनन्तरम् 'अपानती' सायं समये अस्तं गच्छतीति। ईदृश्या दीप्त्या युक्तः] अतएव "महिषः" महान् सूर्य्यः "दिवम्" अन्तरिक्षम् उदयास्तमययोर्मध्ये "व्यख्यन्" विचष्टे प्रकाशयति॥ महिषः—महेः "अविमह्योष्टिषच् (उ॰ १, ४५)"—इति

---

* छ॰ आ॰ प॰ १, १, ५ (२भा॰ ३, ४६) = ऋ॰ वे॰ ८, ८, ४७, २ = य॰ वे॰ ३, ७।

Digitized by Google

औणादिकः ष्टिषच् प्रत्ययः । व्यत्ययन्—"चविङः स्याज् ( २, ४, ५४ )", छान्दसे लुङि "अस्यतिवक्ति ( ३, १, ५२ )"—इत्यादिना च्ले रङादेशः ॥ २ ॥

अथ तृतीया ।

१ २उ ३ १ २ ३ १ २ ३१ २
त्रिꣳशद्धामविराजतिवाक्पतङ्गायधीयते ।
२ ३ १ २ ३ १ २ ३ १ २
प्रतिवस्तोरहद्युभिः ॥ ३* ॥ ११

"त्रिंशत्" "धाम" धामानि स्थानानि [ वचन-व्यत्ययः ( ३, १, ८५ ) ] "वस्तोः" वासरस्याहोरात्रस्यावयवभूतानि "अह" [ अह्नोऽवधारणे ] "द्युभिः" सूर्य्यस्य दीप्तिभिरेव "वि राजति" विशेषेण दीप्यन्ते [ व्यत्ययेनैकवचनम् ( ३, १, ८५ ) । मुहूर्त्तान्येव धामान्युच्यन्ते ; पञ्चदश रात्रेः, पञ्चदशाह्नः ] । "पतङ्गाय" [ पतन् गच्छतीति पतङ्गः सूर्य्यस्तस्मै ] सूर्य्याय, स्तुतिरूपा "वाक्" "प्रति धीयते" प्रतिमुखं धीयते प्रतिमुखं स्तोतृभि विधीयते क्रियते [ यद्वा, 'वस्तोः' अहनि 'त्रिंशद्धामानि' घटिकाभिप्रायमेतत्, त्रिंशत् घटिकाः ; "अत्यन्त-संयोगे द्वितीया ( २, ३, ५ )" । एतावन्तं कालं 'द्युभिः' दीप्तिभिः असौ सूर्य्यो 'वि राजति' विशेषेण दीप्यते, तस्मिंश्च समये 'वाक्' त्रयीरूपा 'पतङ्गाय' 'प्रतिधीयते' प्रतिमुखं धीयते तं सूर्य्यं सेवत

---

* ऋ० सा० प० ३, ५, ९ ( २भा० ३४९ पृ० ) = ऋ० वे० ८, ८, ४७, ३ = य० वे० ३, ८ ।

इत्यर्थः । श्रूयते हि—"ऋग्भिः पूर्वाह्ने दिवि देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः"—इत्यादि ॥ ३ ॥ ११

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य एकादशस्याध्यायस्य

तृतीयः खण्डः* ॥ ३ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ ११ ॥

॥ इति षष्ठस्य प्रथमोऽर्द्धप्रपाठकः ॥ ६ * ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे एकादशोऽध्यायः ॥ ११ ॥

——000——

---

* 'समाप्तश्चायं द्वादशाहः सत्रात्मकोऽहीनात्मकश्च' —इति वि॰

† 'षष्ठस्य प्रपाठकस्य प्रथमोऽध्यायः समाप्तः'—इति वि॰।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्
निर्म्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ द्वादशोऽध्याय आरभ्यते* ॥

तत्र

प्रथमखण्डे उपप्रयन्त इति चतुर्ऋचं प्रथमं सूक्तम्†—

तत्र प्रथमा ।

३ १ २ ३ १र २र ३ १ २
उपप्रयन्तो अध्वरम्मन्त्रं वोचेमाग्नये ।

३ २ ३ १ २ ३ २
आरे अस्मे च शृण्वते ॥ १‡ ॥

---

* 'इदानीं गवामयनं संवत्सरं सत्रमुच्यते । तत्रादौ ज्योतिष्टोमोऽतिरात्रः पुनः प्रायणीयमहरं तदुक्थम् । पुनश्चत्वारोऽभिप्लवाः । पृष्ठः षडहः समाप्तः । स द्वितीयः तृतीयः स चतुर्थः स पञ्चमः त्रयोऽभिप्लवाः षडहाः पृष्ठः षडहस्त्रयस्त्रिंशारम्भश्चत्वारोऽभिप्लवाः समाप्ताः । स द्वितीयः स तृतीयः स चतुर्थः त्रयोऽभिप्लवाः षडहः आयुश्च गौश्च द्वे अहनी द्वादशाहानि महाव्रतश्चातिरात्रश्च संवत्सरस्यैतद् ब्राह्मणम् । अनाकाशं परिणामं सषष्ठ्यानि यौनि शतानि । एकादशाष्टषष्ठाः पञ्चचत्वारिंशदभिप्लवाः अभिजित् तत्राहं आयन्तौ आयुषी द्वादशाहस्य दशाहानि अतिरात्रः । चतुर्विंशत्या सह षष्ठोमासः पूर्वस्मिन् पक्षसि व्रतातिरात्राभ्यां प्रथम उत्तरास्मिन् गवामयने अतिरात्रमीरितम् अध्याय-परिसमाप्तेः ब्राह्मणेनोक्तानि आर्षच्छन्दोदैवतानि। इदानीं तेषां साम्नां स्तोत्रीयाः ते यष्टव्या इत्येवमारभ्यते—इति वि०।

† 'आग्नेयमाज्यम्'—इति वि० ।

‡ ऋ० वे० १, ५, ९, १ = य० वे० ३, ११ ।

Digitized by Google

"अध्वरं" हिंसा-प्रत्यवाय-रहितम् अग्निष्टोमादि-यज्ञम् "उप प्रयन्तः" उपेत्य प्रकर्षेण यन्तो गच्छन्तः प्रातविच्छेदेन सम्यगनुष्ठितवन्तइत्यर्थः। तादृशा वयम् "अग्नये" अङ्गनादि-गुण-युक्ताय देवाय "मन्त्रं" मनन-साधनमेतत् सूक्तरूपं स्तोत्रं "वोचेम" वक्तारो भूयास्म इत्याशास्यते। कीदृशायाग्नये? "अस्य अस्मे च शृणुते" च-शब्दोऽप्यर्थे आरे-शब्दात् परो द्रष्टव्यः आरे च दूरेऽपि स्थित्वास्माकं स्तुतीः शृणुते अस्मासु प्रीत्यतिशयेन सर्वत्र विद्यमानोऽग्निः अस्मदीयमेव स्तोत्रं शृणोतीति भावः। [वोचेम—ब्रुवोवचिः (२, ४, ५३), लिङ्याशिष्यङ्, "वचउम् (७, ४, २०)"—इत्युमागमः। शृणुते—"शतुरनुमः (६, १, १७३)"—इति विभक्तेरुदात्तत्वम्॥ १ ॥

अथ द्वितीया।

१र    २र    २ १   २    २ १   १ २   १ २

यःस्नीहितीषुपूर्व्यःसञ्जग्मानासुकृष्टिषु।

१ २   २ २ २ १ २

अरक्षद्दाशुषेगयम्॥ २* ॥

"पूर्व्यः" चिरन्तनः "यः" अग्निः "स्नीहितीषु" बधकारिणीषु "कृटिषु" शत्रुरूपासु प्रजासु "जग्मानासु" सुसङ्गतासु सतीसु "दाशुषे" हवींषि दत्तवते यजमानाय "गयं" धनम् "अरक्षत्" रक्षति†। तस्मै मन्त्रं वोचेमेति पूर्वेण सम्बन्धः। [स्नीहितीषु—

* ऋ० वे० १, ५, २१, २।

† 'गयं प्राणम् यद्यपि सर्वासु मनुष्यजातिषु अन्तर्हृदयान्तःस्थितं ज्योतिः तथापि ये यजमानाः तेषां गयान् प्राणान् रक्षति'—इति वि०।

णिह खेहने चुरादिः ; "खेहयति"—इति वध-कर्मसु (निघ० २, १९, १३) पठितम् ; खिह्यन्ते हिंस्यन्ते प्रजा आभिरिति स्नोहितवः करणे "तितुत्रेष्वग्रहादीनाम् (७, २, ९ वा०)"—इति वचनात् निगृह्णीतिर्निपतितिवदिड़ागमः व्यत्ययेनैकारस्य ईकारः, त्रिमीदीर्घश्च ; नित्त्वादाद्युदात्तत्वम्। सञ्जग्मानाः —"समोगमि (१, ३, २९)"—इत्यात्मनेपदम्, लिटः कानच्, गमहनेत्यादिनोपधालोपः। अरक्षत्—"छन्दसि लङ्लुङ्लिटः (३, ४ ६)"—वर्त्तमाने लङ्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सनोवेदोअमात्यमग्नीरक्षतुशन्तमः।
३ २उ ३ १ २
उतास्मान्पात्वंहसः॥ ३*॥

"सः" अग्निः "नः" अस्माकं "वेदः" धनम् "अमात्यम्"† अन्तिके भवं सहभूतं वा "रक्षतु" शत्रोः सकाशात् पालयतु। कीदृशः? "शन्तमः" सुखतमः "उत" अपिच "अस्मान्" वसिष्ठान् "अंहसः" पापात् "पातु" रक्षतु॥

"शन्तमः"—"विश्वतः"—इति पाठो॥ ३॥

---

* ऋ० वे० ५, १, १८, ३।

† 'अमत् प्राणः, प्राइत्वं हृदयावस्थितं ज्योतिः'—इति वि०।

Digitized by Google

अथ चतुर्थी।

२ ३ १ २    ३ २ ३ २ ३ १ २ ३ १ २   २
उतब्रुवन्तुजन्तवउदग्निर्वृत्रहाजनि।
३   १२   १२
धनञ्जयोरणेरणे॥ ४* ॥ १

"अग्निः" "उदजनि" अरण्योः सकाशात् उत्पन्नः "उत" अनन्तरं "जन्तवः" जाताः सर्वे ऋत्विजः ब्रुवन्तु तमग्निं स्तुवन्तु। कीदृशोऽग्निः? "वृत्रहा" वृत्राणामावरकाणां शत्रूणां हन्ता "रणे रणे" सर्वेषु सङ्ग्रामेषु "धनञ्जयः" शत्रु-धनानां जेता† ["संज्ञायां (३, २, ४६)"—इति खच्, "अरुर्द्विषदजन्तस्य (६, ३, ६७)"—इति मुम्, चित्स्वरेणान्तोदात्तः। रणेरणे—रणन्ति दुन्दुभयोऽस्मिन्निति रणः सङ्ग्रामः ["वशिरण्योरुपसङ्ख्यानम् (३, ३, ५८ वा०)"—इत्यप्, "नित्यवीप्सयोः (८,१,४)"—इति द्विर्वचनम्, आम्रेडितानुदात्तत्वम्॥ ४ ॥ १

अथाग्नेयुङ्क्ष्वाहीति हृचात्मकं द्वितीयं सूक्तम्‡,

तत्र प्रथमा।

१ २ ३ १२    ३१२    ३ १ २
अग्नेयुङ्क्ष्वाहियेतवाश्वासोदेवसाधवः।
२ ३ १ २ ३ १ २
अरंवहन्त्याशवः॥ १¶ ॥

---

* ऋ० वे० १, ७, ११, ३।

† 'धनञ्जयः—धनिधनानां जेता'—इति वि०।

‡ 'अग्निष्टोम साम'—इति वि०।

¶ छ० आ० १, १, ३, ५ (१ आ०१३३७०)=ऋ० वे० ४, ५, २८, २।

Digitized by Google

हे "देव" द्योतमानाग्ने ! तान् अश्वान् "युङ्क्ष्व" आत्मीये रथे योजय। "ये" "तव" त्वदीयाः "साधवः" साधकाः सुशीला वा "अश्वासः" अश्वाः "आशवः" शीघ्रगामिनः सन्तः "अरम्" अलम् पर्य्याप्तं त्वदीयं रथं वहन्ति "हि" खलु। तानश्वान् रथे युङ्क्ष्वेत्यर्थः ॥

"युङ्क्ष्व"-"युङ्क्ष्वा"—इति पाठौ, "आशवः"-"मन्यवः" —इति च ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ १र २र ३ १ २
अच्छानोयाह्यावहाभिप्रयाꣳसिवीतये।
२ ३ १र २र
आदेवाꣳत्सोमपीतये ॥ २* ॥

हे अग्ने ! "नः" अस्मान् "अच्छ" आभिमुख्येन "याहि" आगच्छ, तथा "प्रयांसि" हविर्लक्षणान्यन्नानि "अभि" लक्ष्य "देवान्" "आवह"। किमर्थम् ? "वीतये" तेषां हविर्भक्षणार्थं, तथा "सोमपीतये" सोमपानार्थञ्च ॥ २ ॥

अथ तृतीया।

१ २ ३ १र २र ३ १ २
उदग्नेभारतद्युमदजस्रेणदविद्युतत्।
२ ३ १ २
शोचाविभाह्यजर ॥ ३† ॥ २

* ऋ० वे० ४, ५, २९, ४।

† ऋ० वे० ४, ५, २९, ५।

Digitized by Google

हे "भारत" हविषां भर्त्तरग्ने ! * "उत् शोच" उन्नततरं दीप्यस्व। तदेव विवृणोति— हे "अजर" जरा-रहिताग्ने ! "द्रविद्युतत्" भृशं द्योतमानस्त्वं "द्युमत्" द्युमता दीप्तिमता सुपांसुलुगिति (७, १, ३९) तृतीया-लुक् "अजस्रेण" अविच्छेदेन "तेजसा" "वि भाहि" विशेषेण प्रकाशयस्व [ यद्वा, भाति र्न्तर्णीत-ण्यर्थः। त्वं प्रथममुद्दीप्यस्व पश्चादात्मीयेन तेजसा सर्वं जगत् प्रकाशयेति योजनीयम् ] ॥ ३ ॥ २

अथ प्रसुन्वानायेति तृचात्मकं तृतीयं सूक्तम्।†

तत्र प्रथमा।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र

प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।

२ ३ १ २ ३ १ २ २ १ २ १र २र

अपश्वानमराधसꣳहतामखन्नभृगवः॥ १‡ ॥

"सुन्वानाय" सुन्वानस्याभिषूयमाणस्य "अन्धसः" अदनीयस्य सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तः" मारकः कर्म-विघ्नकारी श्वा "न वष्ट" [वश कान्तौ (अदा० प०) —इति धातुः] न कामयतां न शृणोत्विति यावत्। तथा, हे स्तोतारः ! "राधसं" साधक-धर्म-रहितं "श्वानम्" "अपहत"।

* 'भारत—भरतामनुष्याणां निर्मथिताग्ने'—इति वि०।

† रतामीमाभिन्नविक्रमुच्यते'—इति वि०।

‡ छ० आ० ६, २, १, ९ (२ भा० १९८ पृ०) = पुनरत्रैव पुरस्तात् १, २, ११, २ (३ भा० २९० पृ०) = ऋ० वे० ७, ५, २, २।

तत्र दृष्टान्तः—"मखं न" यथा पुरा अपराद्धं मखं एतन्नामानं "भृगवः" अपहृतवन्तः तथा अपहृतेत्यर्थः॥

"सुन्वानाय"-"सुन्वानस्य"—इति पाठौ, "वष्ट"-"वृत"—इति च॥ १॥

अथ द्वितीया।

२ ३ १र २र १२उ ३ २ ३ २र
आजामिरत्के अव्यत भुजे न पुत्र ओण्योः।
१ २ ३ १र २र ३ १र २र ३ १ २
सरज्जारो न योषणां वरो न योनिमासदम्॥ २*॥

"जामिः" बन्धुभूतो देवानां † सोमः "अत्के" आच्छादके पवित्रे "आ अव्यत" आवृणोति सम्बन्धो भवति। तत्र दृष्टान्तः— "भुजे न" यथा "ओण्योः" रक्षकयोः मातापित्रोः भुजे "पुत्रः" आवृणोति, तद्वत्। ततः सोऽयं सोमो "योनिं" स्व-स्थानभूतं कलशम् "आसदं" आसत्तुं "सरत्" सरति। तत्र दृष्टान्तद्वयम् —"जारो न" यथा जारो "योषणा" असतीं स्त्रियं प्राप्तुं सरति, यथा वा "वरः" कन्यां प्राप्तुं गच्छति, तद्वत्॥ २॥

अथ तृतीया।

२ ३ १ २ ३ १ १ ३ १उ ३ २ ३ १ २
सवीरो दक्षसाधनो वि यस्तस्तम्भ रोदसी।
१ २ ३ १ २ ३ १र २र ३ १ २
हरिः पवित्रे अव्यत वेधा न योनिमासदम्॥ ३‡॥ ३

---

* ऋ० वे० ७, ५, ३, ४।

† जामिः—सोमस्य भगिनी'—इति वि०।

‡ ऋ० वे० ७, ५, ३, ५।

"वृषसाधनः" बल-साधनः "सः" सोमः* "वीरः" समर्थो भवति, "यः" सोमः "रोदसी" द्यावापृथिव्यौ "वि तस्तम्भ" स्व-तेजसा व्यस्तत्वात् आच्छादयदित्यर्थः। किञ्च "हरिः" हरित-वर्णः सोमः "वेधा न" यथा विधाता यजमानः स्व-गृहमासीदति, तद्वत् "योनिं" स्व-स्थानं कलशम् "आसदम्" आसत्तुं पवित्रे "अव्यत" आवृणोत् सम्बद्धो भवति ॥ ३ ॥ ३

५ २र १ ४ ५
॥ महागौरीवितम् ॥ प्रसु। न्वाना३। यमन्धसाः।
१ र १ र १ ४
मर्त्तानवष्टतद्वचा२३ः। आपस्वाना३१२३म्। अराऽध
१ र २ ४ ५ ४
साम्। हातामखा३१२३म। नभोवा। गा५वो६
५
हाइ(१) ॥ १७† ॥ [१]

५ २र २र ३ ४ ५ १ १ २
॥ गौतमम् ॥ प्रसुन्वानायमन्धसाः। मर्त्तोनवो।
२ १ १ २ ३र ४ १र र १ २
ष्टतद्वचा२ः। अपा। औहो२३४वा। श्वानमराधसा

---

* 'सः—सोमः प्रजापतिः नृपो वा' —इति वि०।

† ऊ० गा० १प्र० २ख० १७मा०।

१ १११ ३ १ १र ५ ३ १ ३र
२३४५म्। हता। औहो२३४वा। मखा। औहोर३

५ ४ ४
४वा। नभृ५गवाः। होइ। डा(१)॥१८*॥[२]

५ ३र २ ४ ५
॥ महागौरीविंतम्॥ प्रस्तु। न्वाना३। यअन्धसाः।

१ र १ र १ ५
मर्त्तोनिवष्टतद्वचा२३ः। आपश्वाना३१२३म्। अरा५ध

१ र २ ४ ५ ४ ५
साम्। हातामखा३१२३म्। नभोवा। गा५वो६हा

५र र ३ १ ४र ५ १ र
यि॥(१) आजा। मिरा३। त्के भव्यता। भुजेनपुत्र

र १ र २ ४ १ र
ओणियेर३ः। सारन्झारा३१२३ः। नयो५षणाम्। वारो

२ ४ ५ ४ ५ र
नयो३१२३। निमोवा। सा५दो६हायि॥(२) सबौ।

३र २ ४ र ५ १ र
रादा३। त्तसाधनाः। वियस्तस्तम्भरोदसा २ ३ यि।

१ २ ४र १ र २
हारिःपवा३१२३यि। च भा५व्यता। वायिधानयो३१२३।

४ ५ ४ ५
निमोवा। सा५दो६हायि(३)॥१७†॥[३]

---

* ऊ० गा० १प्र० १अ० १८सा०।

† ऊ० गा० ६प्र० २अ० १७सा०।

Digitized by Google

५२ ४ १ १ ४२ ५ १ १
॥ ओकोनिधनम्॥ आजा३मिरत्केअव्यता। भुजा

१ १ २ २ १
यि। नपुत्रओ२णायो ३ः। सरञ्जारोनयो२णाणा२

१२ ५ १ १२ १ ५२ २
म्। वरोना२३४ये। निमा। सा२दा२३४औहोवा।

१ ५
ओ२३४का:(२)॥ १८* ॥ [४]

१ १२२ १ १ २ १
॥ औदलम्॥ सवोरोदा। चासा२धनाः। वियस्ता

१ १ २ २ ५ १ २
स्ता३। भारोदा२३४मायि। हरिःपवायि। चेआ२

१ २२ १२ २ १ ४ २
व्यता। वेधाना२३यो३। ना२३यिमा३। सा३४५द्दो

५
६हायि(३)॥ १९† ॥ [५]

५ २ ४२ ५ ४ ५ १ १२ २ १
॥ साध्रम्॥ प्रस्तुन्वा३नायअन्धसाः। मर्त्तोनवा२।

२ २ २ ५ १ १ १२ २२ १२ १ १ १ १
ष्टता३४५त्। वा२३४चाः। अपश्वानमराधसा२३४५म्।

१ २ २ १ १ २ २ ५ ४
हाताओ२३४वा। माखाओ२३४वा। नभृ५गवाः॥(१)

५२ २ २ ४ ५२ ४ ५ २ १ २ १ २ २
आजामा३यिरत्के अव्यता। भुजायिनपू२त्। चओ३

* ऋ० सं० ६म० २ख० १८वा०।
† ऋ० सं० ६म० २ख० १९वा०।

३ ५ १ २र १र र ० ११११ १
४५। णौ२३४यो:। संरज्जारोनयोषणा२३४५म्। वा
२ ३ ५ १ २ ३ ५ ४
राओ२३४वा। नायाओ२३४वा। निमा५सदाम्॥(२)
५ र र ४ ५ ४र ५ २ १ २ १ १ २ ३
सवीरोइदचसाधनाः। वियास्तस्तार। भरो३४५। दा
५ १ १ १ र २ १ ११११ १ २ ३
२३४सी। हरि:पवित्रेअव्यार२३४५। वायिधाओ२३४
५ १ २ ३ ५ ४ ४
वा। नायाओ २ ३ ४ वा। निमा५सदाम्। चो५ई।
डा(३) ॥ २०* ॥ [६]

५र र ३ २ ३र ४ ५ २ १ २१
॥ गौतमम् ॥ आजामिरत्केअव्यता। भजायिनपूत्।
२ र १ ३ २ ३र ५ २र १र र
चओणियोर:। सरा। औहो२३४वा। जारोनयोष
२ १ १ १ १ १ २ ३र ५ ३ १ ३र
णा२३४५म्। वरा। औहो२३४वा। नाया। औहो
५ ४ ४
२३४वा। निमा५मदाम्। हो५ई। डा(२)॥ २१† ॥ [७]

३ २ २ ४ ५ २ ४
॥ श्यावाश्वम् ॥ प्रसू३१। न्वा३ना। यच। धा३स:।
५ १ र २ १ १र
एहिया। मा। तोनवस्ता। तत्। वचार:। एहियार।

---

* ऊ० गा० ६प्र० २ऋ० २०सा०।

† ऊ० गा० ९प्र० १ऋ० १सा०

१र २ ४ ५ २र १र
अपस्वानामा३रा३। धार२३४साम्। ऐद्दा२यि। एद्दि

र १ २ ४ २ ४
या२। छ्नामखान्ना३भूर३। गा३५वो६हायि॥ २*॥ [८]

१२ र १ १ २ १र
॥ औद्लम्॥ प्रसुन्वाना। याआ२न्धसाः। मर्त्तो

२ १ २ ३ ५ १ २ र १
नवा३। ष्टानद्दा२३४चाः। अपस्वानाम्। आरा२ध

१ २१र २ १ ४ २
साम्। छ्नामा२३खा३म्। ना२३भूर३। गा३४५वो६

५ १र २र १ १ २ १र २
हायि॥१) आजामिरा। त्केआ२व्यता। भुजेनपू३

१ २ ३ ५ १ २ र १ १
त्। चाओणा२३४योः। सरजारा:। नायो२षणाम्।

२ १र २ १ ४ २ ५
वरोना२३योर३। ना२३यिमा३। सा३४५दो६हायि॥(२)

१ २र र १ १ २ १ २ १ २ ३
सवीरोदा। चासा२धनाः। विग्रस्तस्ता३। भारोदा

५ १ २ १ १ २र१र
२३४सायि। हरिःपवायि। त्रेआ२व्यना। वेधाना२३

२ १ ४ २ ५
यो३। ना२३यिमा३। सा३४५दो६हायि(३)॥३†॥ [९]

* ऊ० गा० ११प्र० २श्व० २मा०।

† ऊ० गा० ११प्र० २ख० ३मा०।

॥ गौतमम् ॥ प्रसुन्वानायअन्धसाः । मर्त्तोनिवा । ष्टतद्दचाऽरः । अपा । औहोऽ२३४वा । श्वानमराधसा२३४५म् । हता । औहोऽ२३४वा । मखा । औहोऽ२३४वा । नभृ५गवाः ॥(१) आजामिरत्केअव्यता । भुजायिनपूत् । श्वओणियोऽरः । सरा । औहो २ ३ ४ वा । जारोनयोषणा२३४५म् । वरा । औहोऽ२३४वा । नया । औहोऽ२३४वा । निमा५सदाम् ॥(२) सवीरोदक्षसाधनाः । वियास्तस्ता । भरोदसाराय । हरा । औहो२३४वा । पविचेअव्यता२३४५ । वधा । औहोऽ२३४वा । नया । औहो २ ३ ४ वा । निमा५सदाम् । हो५ई । डा(३) ॥ १३* ॥ [१०]

॥ आकूपारम् ॥ प्रसुन्वा२३नाय । अन्धा२३४साः ।

---

* ऊ० गा० ११प्र० २ख० १९सा०

Digitized by Google

मर्त्ती२नवा । छृतद्यचाः । अपश्वाना२म् । अराध-
साम् । हतामाखा२३म् । ना२३भू३ । गा३४५वो६हा
यि ॥(१) आजामा२३यिरत्के । अव्या२३४ता । भुजा
रयिनपूत् । अश्रोणियोः । सरआरो२ । नयोषणाम् ।
धरोनायो२३ । ना२३यिमा३ । सा३४५दो६हायि ॥(२)
सवीरो२३दक्ष । साधा२३४नाः । विया२स्तस्ता । भरो
हसायि । हरिःपावा२यि । चे अव्यता । वेधानायो
२३ । ना२३यिमा३ । सा३४५दो६हायि (३) ॥ १६* ॥ [११]

॥ दैवोदासोत्तरम् ॥ प्रा४सुन्वाना । द्यो । यअन्ध
सा६ए । मर्त्तानवष्टतद्यचोअपश्वानमराधा३साम् । हता
मखा३४ । औहोवा । ना२ ३ ४भू । गवो२३४५ई ।
डा(३) ॥ १४† ॥ [१२]

---

* ऊ० गा० १५प्र० १ख० १६सा० ।

† ऊ० गा० १६प्र० १ख० १४सा० ।

१ २र र १ २ १ र
॥ भृगुद्वाभृगुद्वीयम् ॥ प्रसुन्वानायअन्धसा: । मर्त्ता

२ १ २ १ र २ २१र २ १र
नवष्टतद्वार२३चा: । अपश्वानमराधार२३साम् । हताम

२ १ ३ २ ५र र २ १ १ १ १
२३खा३म् । ना२ । भृगा३४औहोवा । वा२३४५: ॥(१)

१र १र १ २र १ २ १ र २ १र २ १
आजामिरत्केअव्यता । भुजेनपुत्रओणा२३यो: । सर

र र २ १र २ १र २ १
आरोनयोषा२३णाम् । वरोना२३यो३ । ना२३यो

१ २र २ ५र र २ १ १ १ १
३। ना२यिम् । आसा३४औहोवा । दा२३४५म् ॥(२)

१ २र १र १ १र २ १ २ १र २ १
सवीरोदक्षसाधना: । वियस्तम्भरोदा२३सायि । हरि:

२र १ २ र १र १ १ २र
पवित्रेअव्या२३ता । वेधाना२३यो३ । ना२यिम् । आ

२ ५र र ३ १ १ १ १
सा३४औहोवा । दा२३४५म् (३) ॥ १७* ॥ [१३]

३ ४ र र ३ १ ५ २ ३
॥ वैश्वामित्रम् ॥ प्रसुन्वानायअन्धस: । मर्त्तोना२३४

५ २ १ २ २ १ २ र १ २ १
वा । ष्टा३ताद्वा३चा: । आपश्वाना२३९हा३यि । अरा

३ ५ १ १र ३ ५ ४
२धा२ ३ ४साम् । हतामाखौवाओ२ ३ ४वा । नभृपुग

* ऊ० गा० १८प्र० १ख० १७गा० ।

३र ४र ३र ४ ५ २ ३ ५
वाः ॥(१) आजामिरत्के अव्यत । भुजायिनार ३ ४पू ।
२ १ २ २ १ २ र १ २ १ ३
च्चा३ओणा३योः । सारञ्जारा२३द्वा३ । नयोरषार ३ ४
५ १ २र ३ ५ ४
णाम् । वरो । नायोवाओ२३४वा । निमा५सदाम् ॥(२)
३४ र १र ४ ५ २ १ ५ २ १ २ २
सवीरोदच्चसाधनः । वियास्ता२३४स्ता । भा३रोदा३सा
१ २ १ २ १ ३ ५
यि । द्वारिःपवा२ ३यिद्धा ३ यि । चे आरव्यार ३ ४ता ।
१ २र ३ ५ ४ ४
वेधाः । नायौवाओ२३४वा । निमा५सदाम् । द्वो५
ई । डा(३) ॥ १८* ॥ १४

२ र र २ १ र
॥ स्वारकौत्सम् ॥ प्रसुन्वानाया३अन्धसाः । मर्त्तान
२ २ २ र २ १ २ २
वष्टता१द्वा३चाः । अपश्वाना३म् । आ३राधा३साम् ।
१ र ३ ५ २ १ ४
आऽ२यि । हतामखो२३४द्वायि । नभृ३गा५वा६५६ ॥(१)
२र र २ १ र २ २ १
आजामिरत्के३अव्यता । भुजेनपुत्र ओ१णा३योः । सर
र २ १ २ २ १ र ३
ञ्जारो३ । ना३योषा३णाम् । आऽ२यि । वरो नयोर३

---

* ज० गा० १९प्र० २ख० १९गा० ।

४ह्वायि । निमा३सा५द्दा६५६ ॥(२) सवीरोदचा३साध

ना: । वियस्तस्तम्भरो१दा३सायि । ह्वरि: । पवा३यि ।

चे३अव्या३ता । मा२यि । वेधानयो२३४ह्वायि । नि

मा३सा५द्दा६५६म्(३) ॥ २०* ॥ १५

॥ उरुत्त्वयम् ॥ प्रत्नुंवानायअन्धसाः । मर्त्तोनवष्ट

तद्वा२३चाः । अपश्वानमराधा२३साम् । ह्वतामखा२

म् । ना२भृ । गा२ । या२३४औह्वोवा । वा२३४औ

ह्वोवा । वा२३४५: ॥(१) आजामिरन्केअव्यता । भुजे

नपुत्त्रओणा२३योः । सरज्जारोनयोषा२३णाम् । वरोन

यो२ । ना२यिमा । सा२ । या२३४औह्वोवा । दा

२३४५म् ॥(२) सवीरोदक्षसाधना: । वियस्तस्तम्भरो

दा२३सायि । हरि:पवित्रेअव्या२३ता । वेधानयो२ ।

---

* ऋ० सा० १८प्र० १ख० २०सा० ।

१ १ २ ५र र २ १ १
नाऽ २ यिमा । साराया २ ३ ४ औहोवा । हा २ ३
१ १
४ ५म्(३) ॥ २१* ॥ [१६]

१र १र १र १ २ १ २ १र
॥ काण्वरथन्तरम्॥ प्रास्त्वानायमन्धसः । मर्त्तानवा ।
२ १ २ २ र र २ ५र २ १र
ष्टा३ताद्दा३चाः । अपस्वानमराधसा२३४मैही । हता
५ २ १ २ २ २ २
मा२३४खाम् । नभू३ आउवा२३ । ए३ । गवआ ॥(१)
१र र १ २ र १ २ १ २१र २ १ २ २
आजामिरत्केअव्यता । भुजेनपूत् । चा३मोणा३योः ।
र र र २ ५२ २ १र ५ २
सरत्आरोनयोषणा२३३मैही । वरोना२३४यो । निमा३
२ २ २ २ २र र १र २ १र २ १
१उवा२३ । ए३ । सदमा ॥(२) सावीरोदक्षसाधनाः ।
२ १ २ २ १ २ र २
वियस्तस्ता । भा३रोदा३सायि । हरिःपवित्रेअव्यता
५र २र १र ५ २ २
२३४ऐही । वेधाना२३४यो । निमा३१उवा२३ । ए३ ।
२ २ २
सदमा(३) ॥ ७† ॥ [१७] ३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
प्रथमः खण्डः ॥ १ ॥

* ऊ० गा० १८प्र० २ख० २१सा० ।
† ऊ० गा० २२प्र० २ख० ७सा० ।



Digitized by Google

अथ द्वितीय-खण्डे—

अभ्रातृव्यइति प्रगाथात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २र ३ २ २ ३ १ २
अभ्रातृव्यो अनात्वमनापिरिन्द्रजनुषासनादसि।
१ २ ३ १ २
युधेदापित्वमिच्छसे॥ १*॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४, १, १४५)"—इति व्यन् प्रत्ययः] सपत्न-रहित इत्यर्थः, "अना" अनेतृकः [ "ऋतश्छन्दसि (५, ४, १५८)"-इति कपः प्रतिषेधः ] अनियन्तृक इत्यर्थः, "अनापिः" बन्धु-वर्जितश्च, "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि, यत्र त्वया "आपित्व" बान्धवम् "इच्छसे" इच्छसि, तत्र "युधेत्" युद्धेनैव युद्धं कुर्वन्नेव स्तोतृणां सखा भवसि॥ १॥

अथ द्वितीया।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ २र
नकीरेवन्तꣳसख्यायविन्दसेपीयन्तितेसुराश्वः।
३ २ ३ १ २ ३ १ २र ३ २ ३ १ २
यदाकृणोषिनदनुꣳसमूहस्यादीत्पितेवहूयसे॥ २†॥४

* ऋ० भा० ५, १, २, १ (१भा० ८२१४०)=ऋ० वे० ६, २, २, ४।
† ऋ० वे० ६, २, २, ५।

Digitized by Google

हे इन्द्र! "रेवतं" केवल-धनवन्तं यागादि-रहित मयष्टार मातृ मन्यं मानवं "सख्याय" सखिभावाय "न किः विन्दसे" न लभसे माश्रयसीत्यर्थः। अयष्टारो जनाः किं सन्ती त्यतआह—"सुराश्वः" [ टु ओ श्वि गति-वृद्धयोः ; सुरया वृद्धाः तद्वत् ] प्रमत्त-नास्तिकाः। "ते" त्वां "पीयन्ति" [ पीयति हिंसा-कर्मा ] हिंसन्ति तवाश्रयतीत्यर्थः। "यदा" त्वं "नदनु" [ नद अव्यक्ते शब्दे (भ्वा० प०)] यं स्तोतारं "कृणोषि" मदीयोऽयमिति यदा भावयसि, तदानीं संवहसि धनादिकं तस्मै वहसि। "आदित्" अनन्तरमेव तेन लब्ध-धनेन स्तोत्रा "पिता इव" पालयिता जनक इव "हूयसे" स्तुतिभिराह्वयसे स्तूयस इत्यर्थः॥ २॥ ४

५ र २ ४र २
॥ उक्ष्यामदीयवम्॥ अभ्रातृ३व्योअनातुवाम्। अ

१ २ १ र १ १२र र १
नापा१यिरा२यि। इजनुषासना२३दसायि। यूधेदापा

२ ५ र १ ४ ५
यि। त्वमा२३यिच्छसाउ। वा३॥(१) युधेदा३पित्वमि

२ १ २ १ र
च्छसायि। नकायिरा१यिवा२। नण्सखियायवा२३यि

२ १ २ १ २
न्दसायि। पायियन्तितायि। सुरा २ ३ श्रुवाउ। वा

५र २ ४ र ५र २ १ २ २
३॥(२) पीयन्ता३यितेसुराश्रुवाः। यदाकार्णो२। षि

१ १ १ १ १
तदनु(९)समू२३हसायि। आदित्यितायि। वह्न२३यसा

१२ १११
उ। वा३। स्तोषे३४५(३) ॥ १०* ॥ ४

आत्वासहस्रमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ ३ १ २ ३ १ २
आत्वासहस्रमाशतंयुक्तारथेहिरण्यये।

३ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ १‡ ॥

हे "इन्द्र!" "त्वा" त्वां "सहस्र" सहस्र-सङ्ख्याका "हरयः" त्वदीया अश्वाः "आ वहन्तु" आनयन्त्वस्मद्यज्ञं, तथा "शतं" शत-सङ्ख्याकाश्च भवदीयाश्वाः त्वामावहन्तु [ यद्यपि द्वावेवास्य हरी तथापि तद्विभूतयोऽन्येऽपि बहवोऽश्वाः सन्ति। ननु युगपदनेकैरश्वैः कथं वाहयितुं शक्यत इत्यत आह—युक्ता इति ] "हिरण्यये" स्वर्ण-विकारे [ हिरण्य-शब्दाद् विकारार्थे विहितस्य मयटः "ऋत्व्यवास्त्व्या (६, ४, १७५)"— इत्यादौ म-लोपो निपात्यते ] तादृशे "रथे" "युक्ताः" सम्बद्धाः [ बहुना अश्वाना शीघ्र-गमनाय रथे नियुक्तत्वाद् युगपदेव सर्वैरश्वैर्गन्तुं शक्यत इति भावः ]। कीदृशा हरयः? "ब्रह्म-

* ऊ० गा० ७प्र० २ख० १०गा०

† 'अमीवघ्नं' कोनीयम्'—इति वि०।

‡ ऋ० सं० ३, २, ८, २ ( १मा० ५०५ब० ) = ऋ० मे० ८,१, १४, ४।

युजः” अश्वा परिहृढेष्वेन्द्रेण युक्ताः [ यहा, अश्वयासदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः ] “केशिनः” केशाः सटाः तैर्युक्ताः। किमर्थम् इन्द्रस्य वहनम्? तत्राह—“सोमपीतये” सोमस्य पानाय यथास्मदीयं सोमं पिबेत्, तथा वहन्त्वित्यर्थः ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आत्वारथेहिरण्ययेहरीमयूरशेप्या।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
शितिपृष्ठावहतांमध्वोअन्धसोविवक्षणस्यपीतये ॥ २* ॥

[ पूर्वं हर्यो विभूतिरूपा अश्वाः इन्द्र मावहन्त्विति प्रार्थितम्, अधुना तावेवेन्द्र मावहतामिति प्रार्थ्यते—]“हिरण्यये” हिरण्मये “रथे” युक्तौ “मयूरशेप्या” मयूरवर्णः शेपो ययोस्तौ [ सुपां सुलुगिति (७,१,३९) विभक्तेर्डादेशः ] “शितिपृष्ठा” श्वेतपृष्ठौ† एवम्भूतौ “हरी” अश्वौ हे इन्द्र! “त्वा” त्वाम् “आ वहताम्”। किमर्थम्? “मध्वः” मधुर-रसस्य “विवक्षणस्य” वक्तुमिष्टस्य स्तुत्यस्य‡ यहा वोढव्यस्य प्राप्तव्यस्य “अन्धसः” अन्नस्य सोमरूपस्य “पीतये” पानार्थम् ॥ २ ॥

---

* ऋ० वे० ५, ७, १४, ५।

† ‘शितिष्ठौ—गौरष्ठौ’—इति वि०।

‡ ‘अतिशयेन विवक्षितभूतस्य’—इति वि०।

Digitized by Google

अथ तृतीया।

२ ३ १ १ २ ३ १ २ ३ १ २
पिबात्वा३स्य गिर्वणः सुतस्य पूर्वपा इव।
१ २ ३ १ २ ३ १ २ ३ २ ३ १ २
परिष्कृतस्य रसिन इयमासुतिश्चारुर्मदाय पत्यते॥ ३* ॥ ५

हे "गिर्वणः" गीर्भिर्वननीयः स्तुतिभिः सम्भजनीयेन्द्र! "सुतस्य" अभिषुतस्यास्य सोमस्य [क्रियाग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी (२,३,६२)] इम मभिषुतं सोमं "नु" क्षिप्रं "पिब"। तत्र दृष्टान्तः—"पूर्वपा इव"† [पूर्वः पूर्वेभ्यो देवेभ्यः प्रथमभावी सन् पिबतीति पूर्वपा वायुः, स ह्येन्द्रवायवे मुख्ये ग्रहे सर्वेभ्यो देवेभ्यः पूर्वं पिबति "अग्र देव दधिषे पूर्वपेयम्"—इति निगमान्तरम्; तादृशः] वायुरिव त्वमपि सर्वेभ्यो देवेभ्यः पूर्वं पिबेत्यर्थः। कीदृशस्य सोमस्य? "परिष्कृतस्य" अभिषवादिभिः संस्कृतस्य ["सम्पर्युपेभ्यः (६,१, १३८)"—इति करोतेर्भूषणे सुट्, "परिनिविभ्यः (८,३,७०)"—इति सुटः षत्वम्], "रसिनः" रसवतः। अपिच "इयमासुतिः"‡ अयमाकृतो मदकरः "चारुः" शोभनः सोमरसः "मदाय" हर्षाय हर्ष-जननाय "पत्यते" सम्पद्यते [पत्लृ गतौ (भ्वा० प०), यद्वा पत्यतिरैश्वर्य्य-कर्मा। मदाय—मदस्य पत्यते ईष्टे मदोत्पादने शक्त इत्यर्थः]॥ ३॥ ५

* ऋ० वे० ५, ७, १५, १।

† 'पूर्वपातारो ये ते यथा पिबन्ति तद्वत् पिबन्त'—इति वि०।

‡ 'आसुतिरत्रपतिरित्यर्थः'—इति वि०।

Digitized by Google

५२ ४ १ ४ ५र ४ ५ १ र
॥ अभीवर्त्तम् ॥ आत्वा३सा२ह्वस्रमाश्शतोवा । यू क्ता
२ र १ २ १ २ ३ ४
रथे । हिराण्या१या२यि । ब्रह्मयुजौ३१२३४ । हरय
५ १ १ २ १ २ ३ १
इ । न्द्रकायिश्रा१यिना२ः । वहान्तू१सोर२ । मपा३यि ।
१ १ १ १ १ ५२ ४ २ ४ ५ ४ ५ १ र
ता२३४५यि ॥(१) आत्वा३रा३थायिहिरण्ययोवा । हरी
२ र १ २ २ ३ ४र
मयू । रश्नायिपा१या२ । यितिपृष्ठा३१२३४ । वहता
५ २र १ १ १ १ ३ १ १
म्मध्वोत्र्आन्धा१सा२ः । विवाक्षा१णा२ । स्यपा३यि । ता
३ १ १ १ १ ५ ४ १ ३ ५ ४ ५
२३४५ । या२३४५यि ॥(२) पिबा३तू३वस्यगिर्वणोवा ।
१ २र १ १ २ २
सुतस्यपू । र्वपाआ१यिवा२ । पारिष्कृता३१२३४ । स्य
४ ५ २ १ १ २ १ २ १ २
रसिनइ । यमावश्ता२यिः । चारुर्मा१दा२ । यपा३ ।
१ ३ १ १ १ १
त्वा२३४५ । ता२३४५यि(३) ॥ १५* ॥ १
१२ २ १ २
॥ भारद्वाजम् ॥ आत्वासहा । स्रमाश्श १ ता२म् ।
१ २ १ २ २ १ २ १ २ १
यूक्तारथेहिरण्यये । ब्रह्मायू१जा२ः । हारयइ । इन्द्रका

* ऊ० गा० ७प्र० १ख० १५गा० ।

यिम्रा१यिना२ः । वद्दान्तू१सो२३ । मा२पा२३४औहो
वा । ता२३४ये ॥(१) आत्वा२याथि । हिराण्या१या२
यि । हारीमयू२शेष्या । श्रितायिपा१ष्ठा२ । वाहता
म्म । ध्वोचान्धा१सा२ः । विवाचा१णा२३ । स्था२पा२
३४औहोवा । ता२३४ये ॥(२) पिबातुवा । स्यगायिर्वा
१णा२ः । छतस्यपूर्वपाइव । परायिष्का१र्ता२ । स्था२
सिनइ । यमाद्ध१ता२यिः । चाद्धम्मा१दा२३ । या२पा
२३४औहोवा । त्यो२३४ते(३) ॥ १२* ॥ २

॥ अभिनिधनं काण्वम् ॥ औहौहोहायि । आयाही ।
आत्वा। सा२३४हा। सामाम्रा२३४ताम्। यूक्ता२रा२३४थायि।
होरण्ययायि । ऐहोयि । आ२३४यिही । ब्राऽह्मायू२३
४जो । हारायार२३४ई । द्राकेश्रिनाः । ऐहोयि । आ

* ज० गा० १प्र० २ष० ११गा० ।

२३४यिही। वा इन्द्र२३४सो। मपा३यिता५या६५६यि ॥(१)
औहोहोहायि। आयिही। पात्वा। रा२३४यायि।
हायिरण्या२३४यायि। हारोमा२३४यू। राधेपिया।
ऐहोयि। आ२३४यिही। आयितायिपा२३४ष्ठा। वा
हाता२३४म्मा। ध्वोअन्धसाः। ऐहोयि। आ२३४यि
ही। वायिवज्ञा२३४णा। स्मपा३यिता५या६५६यि ॥(२)
औहोहोहायि। आयिही। पायिवा। तू२३४वा।
स्यागिर्वा२३४णाः। सूतस्या२३४पू। र्वीपाइवा। ऐहो
यि। आ२३४यिही। पारिष्कृता२३४त्ता। स्यारासीर३
४नाः। इयमासुतायि। ऐहोयि। आ२३४यिही। आ
हर्म्मा२३४दा। यपा३त्या५ता६५६यि। आ२३४
भी(३) ॥ ३ * ॥ [३] ५

* ऊ० गा० ३१प्र० ३ख० ३गा०।

अथ आसोतेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ २ ३ १२ १२ ३ १ २ ३ १ २
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।
२ १ १ ३ १ २
वनप्रक्षमुदप्रुतम्॥ १ *॥

हे ऋत्विज! "आसोत" सोमम् अभिषुणुत [षुञ् अभिषवे (स्वा० उ०), लोटि छान्दसो (२, ४, ७२) विकरणस्य लुक्, "तप्तनप्तनथनाश्च (७,१,४५)"—इति तस्य तबादेशः]। किञ्च, "परिषिञ्चत" परितस्तं वसतीवर्यादिभिः सिञ्चत। कीदृशम्? "अश्वं न" अश्वमिव वेगिनं "स्तोमं" स्तोतव्यम्, "अप्तुरम्" अन्तरिक्षस्थितानामुदकानां प्रेरकम् "रजस्तुरं" तेजसां प्रेरकम्, "वनप्रक्षम्" उदकवत् क्षरणशीलम्, "उदप्रुतम्" उदके गच्छन्तं प्लवमानं सोममभिषुणुत अभिषिञ्चत च॥

"वनप्रक्षं"-"वनक्रक्षम्"—इति पाठौ॥ १॥

अथ द्वितीया।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
सहस्रधारंवृषभम्पयोदुहम्प्रियन्देवायजन्मने।
३ २ ३ २ ३ १ २ ३ १२ १२ ३ १ ३ २ ३ १
ऋतेनयऋतजातोविवावृधेराजादेवऋतम्बृहत्॥२†॥ ६

---

* छ० आ० ६, १, ४, ३ (२भा० ११८५०) = ऋ० वे० ७, ५, १८, १।

† ऋ० वे० ७, ५, १८, ३।

"सहस्रधारं" बहुधारोपेतं, "वृषभं" कामानां वर्षकं, "पयोदुहं" क्षीरवत् सारभूतं रसं सिञ्चन्तं "प्रियं" प्रीणयितारं सोमं "देवाय" देव-सम्बन्धिने "जन्मने"* देवेभ्यस्तदर्थम् अभिषुणुत। "ऋतजातः" उदकाज्जातः "यः" "राजा" सोमः "ऋतेन" वसतीवर्य्याख्येनोदकेन "वि वावृधे" विशेषेण वर्द्धते। कीदृशः? "देवः" द्योतमानः स्तोतव्यो वा, "ऋतं" सत्यभूतः, "बृहत्" महान्। तमाभिषुणुतेति पूर्वेण समन्वयः॥

"पयोदुहम्"-"पयोवृधम्"—इति पाठौ॥ २ ॥ ६

२र ४र ५र २र २ ४ ५ ५

॥ वाचःसाम॥ आसोतापा। षोरिषिञ्चता ६ ए।

१ २र १ ७ १ २ ०

आश्वमस्तो। मामघूरा२म्। राजस्तुरम्। वानप्रा

१ ४ २ ५

षा२३म्। ज२३दा३। प्रू२३४५तो६५वाइ(१) ॥१†॥ [१]

३र ४र ५र १र ३ २ ५ ५

॥ वाचःसाम॥ आसोतापा। षो। रिषिञ्चताइए।

१ २र १ ७ १ २ १ ०

आश्वान्नस्तो। मामघुरा२म्। राजस्तुरम्। वानप्रा

१ ४ २ ५ २ ४ ५

षा२३म्। ज२३दा३। प्रू३४५तो६वायि॥(१) वनप्र

२ ३ ४ ५ ५ १ २ १ ७

स्राम्। र्हौयि। उदप्रुता६मे। साहस्रधा। राम्र्

---

* 'जन्मवतां मूलभूताय'—इति वि०।

† ऊ० ग्रा० २प्र० २ख० १ग्रा०।

Digitized by Google

१र २ १ ० १ ५
यभा२। पायोदुहम्। प्रायन्दायिवा२३। या२३जा३।
२ ५ १ ४ ५र २ ५ ४ ५ ५
आ३४५नोऽ६हायि॥(२) प्रियन्देवा। हो। यजन्मना६र।
१र २ १ ० १ २१र १र २
पार्त्तनयः। यार्त्तजाता२। वायिवावृधे। राजादा
१ ४ २
१यिवा२३ः। आ२३तां३म्। बृ३४५हो६
५
हायि(३)॥१७*॥[२]

१र १र २ ४ ५ २३ ५ २
॥ सफम्॥ आसोता३परि। षिञ्चा२३४ता। अ
१२१ १ २ ४ २ ५
श्वन्नस्तोमा२म्। अप्तु रा२रा३जा३। स्तु३२ ३ ४राम्।
१ २ ४ २ ५ १ १ २
वना। प्रत्सामू३दा३। प्र३४५नो६हायि॥(१) वनप्रा३
४५ १२ ५ २१११ १ २
अमु। दप्र२३ताम्। सहस्रधारा२म्। वृषभाया३
४ २ ५ २१ र २ ४ २
यो३। दु३२३४हाम्। प्रियाम्। देवाया३जा३। अा
५ २१२ ४र५ २ ३ ५
३४५नो६हायि॥(२) प्रियन्दे३वाय। जन्मा२३४नायि।
२१र२१ १ २ ४ २ ५
ऋतेनयाआ२। तजातो३वा३यि। वा३२ ३ ४र्धायि।

* ऋ० सा० ७प्र० १थ० १७सा०।

२ १ १ २ १     १र २ ३ २ ५
ऋतेनयाभा२। तजातोवा३यिवा३। वा३२३४र्यायि।
२ १र २ १     १ १ ४     २ ५
ऋतेनयाभा२। तजातो३वा३। यि। वा३२३४र्यायि।
२र १     र १ ४     २ ५
राजा। देवाभ्रा ३ ताँ ३ म्। बृ३ ४ ५ हो ६ हायि(३)
॥ ११* ॥ [३] ६

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य
द्वितीयः खण्डः ॥ २ ॥

---

अथ तृतीय-खण्डे—

अग्निर्होताचीति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ ३ १ १ २     १ १ २ ३ १ २
अग्निर्वृत्राणिजङ्घनद्द्रविणस्युर्विपन्यया।
१ २   ३ १र   २र
समिद्धःशुक्र आहुतः ॥ १† ॥

"विपन्यया" सुस्तूयमानः "द्रविणस्युः" द्रविणं धनं स्तोतृ-
णामिच्छन् [ यद्वा, हविर्लक्षणं धनमात्मन इच्छन् "अग्निः"

---

* ऊ० गा० १२प्र० १ख० १३गा०।

† छ० आ० १, १, १, ४ (१भा० ८८पृ०) = ऋ० वे० ४, ५, २७, १।

"वृत्राणि" आवरकाणि रक्षः-प्रभृतीनि तमांसि वा "अङ्घनत्" हिंसन्तु। कीदृशोऽग्निः? "समिद्धः" सम्यक् दीप्तः अतएव "शुक्रः" शुक्लवर्णः "आहुतः" हविर्भिरभिहुतः॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ २ २ १ १ ३ २ ३ १ २
गर्भेमातुःपितुष्पिताविदिद्युतानोअक्षरे*।

१ २ १ २ १ २ ३ २
सीदन्नृतस्ययोनिमा॥ २†॥

[ अत्र मातृ-पितृ-शब्दाभ्यां भूद्यावभिधीयेते "द्यौः पिता, पृथिवी मातेति श्रुतेः ] "मातुः" भूम्याः गर्भे" गर्भस्थाने मध्ये "अक्षरे" क्षरण-रहिते वेद्याख्ये स्थाने‡ "वि दिद्युतानः" विशेषेण दीप्यमानः "पितुः पिता" द्युलोकस्य पालयिता हविषां प्रदानेन, एवम्भूतोऽग्निः "ऋतस्य" यज्ञस्य "योनिम्" उत्तरवेद्याख्यं "धिष्ण्यं" [सप्तम्यर्थे द्वितीया (३, १, ८५)] "आसीदन्" उत्तरवेद्यामुपविशन् अग्निर्वृत्राणि जङ्घनदित्यन्वयः॥ २॥

अथ तृतीया।

१ २ ३ २ ३ १ २ २ १ २ ३ १ २
ब्रह्मप्रजावदाभरजातवेदोविचर्षणे।

२ १ २ ३ १ २ ३ २
अग्नेयद्दीदयद्दिवि॥ ३¶॥ ७

* "अक्षरम्"—इति क० पु० पाठः।

† ऋ० वे० ४, ५, २०, ४।

‡ 'अक्षरे—अक्षीयमाणे स्थाने'—इति वि०।

¶ ऋ० वे० ४, ५, २०, ५।

Digitized by Google

हे "जातवेदः" जातानां वेदितः! "विचर्षणे" विशेषेण द्रष्टः अग्ने! "प्रजावत्" पुत्र-पौत्र-सहितं "ब्रह्म" अन्नम् "आ भर" आहर "यद्" ब्रह्म "दिवि" द्युलोके "दीदयत्" दीप्यते। देवेषु यत् प्रशस्तमन्नं राजते तदाहरेत्यर्थः॥ २॥ ७

अस्यप्रेषेति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषाहेमनापूयमानो
३ १ ३ १ २ १ २ ३ १ २
देवोदेवेभिःसमपृक्तरसम्।
३ २ ३ १ २ १ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्
३ २३ १ २ ३ २ ३ १ २
मितेवसद्मपशुमन्तिहोता॥ १*॥

"अस्य" सोमस्य "प्रेषा" [प्रेषतिर्गत्यर्थः क्विपि रूपं, "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्;] प्रेरणेन, "हेमना" हिरण्येन "पूयमानः" ["हिरण्यपाणिरभिषुणोति"—इति हिरण्य-सम्बन्धः, तादृशः] "देवः" दीप्यमानः सोमः "रसम्" आत्मीयं "देवेभिः" देवैः सह "समपृक्त" सम्पर्चयति संयोजयति [पृची सम्पर्के (अदा०आ०)] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं "पर्येति"

* ऋ० आ० ६, १, ४, ४ (२भा० ११५८०) = ऋ० वे० ७, ४, ११, १।

परिगच्छति। कमिव? "होता" देवानामाह्वाता ऋत्विक् "मिता इव" निर्मितान् "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञ-गृहान् यथा पर्य्येति तद्वत्॥ १॥

अथ द्वितीया।

२ १ १२ ३ २ १ २
भद्रावस्त्रासमन्याऽ३ऽवसानो
२ . २ २ ३ १ २ ३ १ २
महान्कविर्निवचनानिशंसन्।
१ २ ३क २र ३ १ २
आवच्यस्वचम्वोःपूयमानो
३ १ २र ३ १ २
विचक्षणोजागृविर्देववीतौ॥ २*॥

"भद्रा" भद्राणि कल्याणानि "समन्या" [समनमिति सङ्ग्राम-नाम (२, १७, १६), तत्र साधुरिति यत्] सङ्ग्राम-योग्यानि "वस्त्रा" वस्त्राणि आच्छादकानि तेजांसि "वसानः" आच्छादयन् "महान्" "कविः" क्रान्तदर्शी अतएव "निवच-नानि" नितरां वक्तव्यानि स्तोत्राणि‡ "शंसन्" "विचक्षणः" विशेषेण सर्वस्य द्रष्टा "जागृविः" जागरणशीलः। हे सोम! एवम्भूतस्त्वं "देववीतौ" देवानां वीतिर्भक्षणं यस्मिन् तद्देववीति-र्यज्ञः तस्मिन् "चम्वोः" अधिषवण-फलकयोः‡ "आ वच्यस्व" पात्राण्यागच्छ [वचिर्गत्यर्थः (भ्वा० प०) व्यत्ययेन श्यन्]॥ २॥

* ऋ० वे० ७, ४, ११, २।

† 'वचनानि—वक्तव्यानि-साम-वचनानि'—इति वि०।

‡ 'चम्वोः—अधिषवण-चर्म्मणोरपरि'—इति वि०।

अथ तृतीया।

१ २ ३ १ २ ३ १ २ ३ १ २
समुप्रियोमृज्यतेसानोअव्ये
२ १ २ १ २ ३ १ २ ३ २
यशस्तरोयशसाङ्क्षैतोअस्मे।
१ १ २ ३ १ २ ३ १ २ ३
अभिस्वरधन्वापूयमानो
३ १ २ ३ २ ३ १ २
यूयम्पातस्वस्तिभिःसदानः॥ ३ *॥ ८

"यशसां" यशस्विनां मध्ये "यशस्तरः" अतिशयेन यशस्वी "क्षैतः" क्षितो भावः "प्रियः" प्रीणयिता सोमः "सानो" समुच्छ्रिते "अव्ये" अवि-भवे पवित्रे "अस्मे" अस्मदर्थं "सम्मृज्यते" ऋत्विग्भिः परिपूयते "उ" [—अवधारणे] "पूयमानः" त्वं "धन्वा" अन्तरिक्षे "अभि स्वर" अभितः शब्दय "यूयम्" [प्रजायां बहुवचनम्†] हे सोम! त्वं "नः" अस्मान् "स्वस्तिभिः" कल्याणतमैः पालनैः "सदा" सर्वदा "पात" रक्षत पालयेत्यर्थः॥ ३॥ ८

३ २ ३ २ ३र
॥ उद्धवायिवासिष्ठम्॥ उद्धवायि। अया३ ४औ
४र ५ १र २ १र २ ३ ४ ५ ३र २ ३र
होवा। प्रेषा। हे३मना। पूयमानाः। देवा३४औ
४र ५ १र २ १ २ ३ ४ ५ ३ २
होवा। देवायि। भी३ःसम। पृक्तरसाम्। सुता३

* ऋ० वे० ७, ४, ११, ३।

† 'यूयं पात—बहुवचनमिदं सर्वदेवैरित्यर्थः'—इति वि०।



Digitized by Google

१र र   १   २ १   २ ३४५   ३ २
४औहोवा। पवायि। त्वा३परि। इतिरेभान्। मिता

३र र ५   १   २ १   २   २ ४
३४औहोवा। वसा। व्रा३पद्ध। मा३४३। तौ३हो

३ १   ३र र४ ५   १   २ १
५ता६५६॥(१) भद्रा३४औहोवा। वस्ता। समनि।

२ ३ ४ ५   ३ २   ३र ४र ५   १   २ १
यावसानाः। महा३४औहोवा। कवायिः। निवच

२ ३ ४ ५   ३र १   ३र ४र   १   २ १ र
नानिशꣳसान्। आवा३४औहोवा। च्यस्ता। चमुवोः।

२ ३ ४ ५   ३ २   ३र ४र ५   १   ३र १
पूयमानाः। विचा३४औहोवा। चक्रो। आद्धविः।

२   २ ४   ३ २   ३र ४र ५
दा३४३यि। वा३चापूयिता६५६७॥(२) समू३४औहोवा।

१   २ १ र   २ ३र ४ ५   ३ २   ३र ४र ५
प्रियो। मृज्यते। सानोअव्यायि। यशा३४औहोवा।

१   १ १ र   २ ३र ४ ५   ३ २   ३र ४र ५
स्तरो। यशसाम्। चैतोअव्यायि। अभा३४औहोवा।

१   २ १ र   १ २ ४ ५   ३ २   ३र १ ४ ३र
स्वरा। धनुवा। पूयमानाः। उत्तवायि। यूया३औ

४र ५   १र   २ १   १   २ ४
होवा। पाता। स्वस्ति। भा३४३यिः। सा३दा५

मा६५६(३)॥ ६ *॥ [१] ८

---

* ऊ० गा० ७प्र० २अ० ६खा०।

अथैतोन्विन्द्रमिति त्र्यात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २

एतोन्विन्द्रᳬस्तवाम शुद्धᳬशुद्धेन साम्ना।

३ १२ ३ १ २ ३ २ १ २ ३ १ २ ३ २ ० १ २

शुद्धैरुक्थैर्वावृध्वाᳬसᳬशुद्धैराशीर्वान्ममत्तु॥ १ *॥

[ अत्रेतिहासमाचक्षते—पुरा किलेन्द्रो वृत्रादिकान् असुरान् हत्वा ब्रह्महत्यादि-दोषेणात्मान मपरिशुद्ध मित्यमन्यत अथ तद्दोष-परिहारार्थं यदेन्द्र ऋषीनवोचत्—यूय मपूतं मां शुद्धदोषेन साम्ना शुद्धं कुरुतेति। ततस्ते च शुद्धत्पादकेन साम्ना शुद्धेव परिशुद्ध मकार्षुः। पश्चात् पूतायेन्द्राय यागादिकर्मणि सोमादीनि हवींषि च प्रादुरिति। एषोऽर्थः शाट्यायनकब्राह्मणे प्रतिपादितः—"इन्द्रो वा असुरान् हत्वाऽपूत इवामेध्यो ऽमन्यत सोऽकामयत शुद्धमिवमात्मनं शुद्धेन साम्ना स्तुयुरिति स ऋषीनब्रवीत् स्तुतमिति तत एव ऋषयः सामापश्यन् तेनास्तुवन्नेतोन्विन्द्रमिति ततो वा इन्द्रः पूतः शुद्धो मेध्यो भवदिति। तथाच अस्या ऋचोऽयमर्थः—] ऋषयः परस्परं ब्रुवन्ति—"नु" क्षिप्रम् "एत उ" आगच्छतैव। आगत्य च "शुद्धेन" शुद्धत्पादकेन साम्ना, तथा "शुद्धैः" शुद्धि-हेतुभिः "उक्थैः" शस्त्रैश्च इन्द्रम् शुद्धमपापिनं ज्ञात्वा "स्तवाम" स्तुयाम। ततः "साम्ना" शस्त्रैश्च "वावृध्वांसं" पाप-राहित्येन वर्धमानं तमिममिन्द्र "शुद्धैः"

* छ० आ० ४, २, १, ८ (१भा० ७१४पृ०) = ऋ० वे० ८, ६, ११, १।

शुद्धत्पादकैर्गव्यादिभिः "आशीर्वान्" आश्रयणवान् ["छन्दसीरः (८, २, १५)"—इति मतुपो वत्वम्, तादृशः सोमः] "ममत्तु" तमिन्द्रं मादयतु [माद्यतेश्छान्दसः (२,४,७६)श्लुः]॥

"शुद्धैराशीर्वान्"-"शुद्धआशीर्वान्"—इति पाठौ॥ १॥

अथ द्वितीया।

१ २ ३ २ ३ १ २ ३ १ १ १ २ ३ १ २
इन्द्रशुद्धोनआगहिशुद्धःशुद्धाभिरूतिभिः।
३ २ ३ १र २र ३ १ २
शुद्धोरयिन्निधारयशुद्धोममद्धिसोम्य॥ २ *॥

हे "इन्द्र!" "शुद्धः" अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं "नः" अस्मान् "आ गहि" आगच्छ "शुद्धाभिः" "ऊतिभिः" ऊतयो मरुतः [अवन्ति सर्वत्र गच्छन्तीति वा] तेऽपि सामभिः शस्त्रैश्च परिपूताः तैः मरुद्भिः सह "शुद्धः" पाप-रहितः त्वम् आगहि। आगत्य च "शुद्धः" त्वं "रयिं" धनं अस्मासु "निधारय" अतितरां स्थापय। किञ्च, हे "सोम्य" सोमार्ह! "शुद्धः" त्वं "ममद्धि" सोमेन माद्य [मदी हर्षे (दि० प०) लोटि "बहुलञ्छन्दसि (२, ४, ७६)"—इति शपः श्लुः]॥

"ममद्धिसोम्य"-"ममद्धिसोम्यः"—इति पाठौ॥ २॥

---

* ऋ० वे० ६. ६, ३१. १।

अथ तृतीया।

१ २ ३ १र २र ३ १ ३ १र १र ३ १ १
इन्द्रशुद्धोहिनोरयिंशुद्धोरत्नानिदाशुषे।
३ १ ३ १ २ ३ १र २र
शुद्धोवृत्राणिजिघ्नसेशुद्धोवाजंसिषाससि॥ ३ *॥ ९

हे "इन्द्र!" "शुद्धः हिः" [—अवधारणे†] शुद्ध एव त्वं "नः" अस्मभ्यम् "रयिं" धनं प्रयच्छ। तथा "शुद्धः" त्वं "दाशुषे" हविर्दत्तवते यजमानाय "रत्नानि" रमणीयानि कनक-गवादीनि देहि। ततः "शुद्धः" पाप-रहितः त्व "वृत्राणि" अपामावरकान् कर्म-विघ्नकारिणं शत्रून् पापानि वा "जिघ्नसे" हंसि। ततः "शुद्धः" शत्रु-हनन-दोष- परिहाराय अस्मदीयैः सामभिः शस्त्रैश्च परिशुद्धस्त्वं वाजमन्नमस्मभ्यं "सिषाससि" प्रदातुमिच्छसि‡ [यदा शत्रूनहं हन्यां तदा शुद्धत्पादकैः सामभिः शस्त्रैश्च यूयं मां परिशुद्धं कुरुतेत्येवमस्मभ्यं धनमन्नञ्च दातुमिच्छसीत्यर्थः]॥ ३॥९

२र र १
॥ शुद्धाशुद्धीयोत्तरम्॥ एतोन्विन्द्रंस्तवाऽ३मा। शु
२ १ १ २ २ १र
द्धंशुद्धे। न। साम्ना२। शुद्धायिरु३क्था३यिः। वा
२ ५ २ १र २ १ १ १
वा२द्धा२३४ंसाम्। शुद्धैरा२३शीः। वान्ममत्तु। इडा

* ऋ० वे० ६, ६, ११, ४।

† 'हि तस्मादर्थे, शुद्धस्त्वं अस्मान् रयिं धनं शुद्धं निधारय'—इति वि०।

‡ 'सिषाससि—साधयसि'—इति वि०।

१ २ २ १ १ २ २
२३ ॥(१) इन्द्रय्युद्योनआगा३वो। य्युदःय्युहा। भिद्द।

१ १ २ २ १ २ २
तायिभा२यिः। युद्दोरा३यो३म्। निधार२रा२३४या।

२ १२ २ १ २ २ १ १ २
युद्दोमा२३मा। धीसोमिय। इडा२३ ॥(२) इन्द्रयुद्दो

२ १ १२ २ २ १ १
विनोरा३योम्। य्युद्दोरआानिद्दा। य्रुषा२वि। युद्दे

२ १ १ ३ ५ २ १२ २
वा३र्त्रो३। णिजा२म्रा२३४सायि। युद्दोवा २ ३ आम्।

१ २ १ १ २ १
सायिषासवि। इडा २ ३ भा ३ ४ ३। ओ २ ३ ४ ५ई।

डा(३) ॥ १२ * ॥ [१] ९

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशाध्यायस्य

तृतीयः खण्डः ॥ ३ ॥

---

अथ चतुर्थ-खण्डे—

अग्नेस्तोममिति तृचात्मकं सूक्तम्,

तत्र प्रथमा।

२ १२ १२ ३ २२१ २ २१ २
अग्ने स्तोमं मनामहे सिध्रमद्य दिविस्पृशः।

२ १ २ २ १ २
देवस्य द्रविणस्यवः ॥ १ † ॥

---

* ऊ० गा० ७प्र० २अ० १२खा०।

† ऋ० वे० ४, १, ५, २।

“द्रविणस्यवः” द्रविणं धनमिच्छन्तो वयं “दिविस्पृशः” सूर्यरूपेण आकाशं व्याप्नुवतो “देवस्य” द्योतमानस्य “अग्नेः” “सिध्रं” पुरुषार्थानां साधकं “स्तोमं” स्तोत्रम् “अद्य” अस्मिन्नहनि “मनामहे” ब्रूमः ॥ १ ॥

अथ द्वितीया।

१ १ २ २ २ ३ २ ३ १र २र३ १ २
अग्निर्जुषतनोगिरोहोतायोमानुषेष्वा ।
१ २ ३ २ ३ १ २
सयक्षद्दैव्यञ्जनम् ॥ २ * ॥

“होता” देवानामाह्वाता होम-निष्पादको वा “अग्निः” “मानुषेषु” “आ” वसति। “यः” अग्निः “नः” अस्माकं “गिरः” स्तुतीः “जुषत” सेवताम् “सः” अग्निः “दैव्यं जनं” देव-सम्बन्धिनं जनं† “यक्षत्” यजतु ॥ २ ॥

अथ तृतीया।

१ २ ३ १ १ ३ २ ३ २ ३ १ २
त्वमग्नेसप्रथाअसिजुष्टोहोतावरेण्यः ।
१ २ ३ १र २र
त्वयायज्ञंवितन्वते ॥ ३ ‡ ॥ १०

---

* ऋ० वे० ४, १, ५, २।

† ‘दैव्यं जनं—देवानां सम्भूतं वसु-रुद्र-मरुत्-प्रभृतिकं जनम्’—इति वि०।

‡ ऋ० वे० ४, १, ५, ४।

हे "अग्ने !" "जुष्टः" सर्वदा प्रीतः "वरेण्यः" सर्वैर्वरणीयः "होता" त्वं "सप्रथाः असि" सर्वतः पृथुर्भवसि [तथाहि यास्कः— "सप्रथाः सर्वतः पृथुः (निरु० नै० ६.७)"—इति]। किञ्च, सर्वे यजमानाः "त्वया" साधनेन "यज्ञं" "वि तन्वते"* ॥ ३ ॥ १०

अभित्रिपृष्ठमिति तृचात्मकं द्वितीयं सूक्तम्,†

तत्र प्रथमा ।

२ १ २ ३ १र २ १
अभित्रिपृष्ठंवृषणंवयोधा

३ २ १ २ ३ १ २
मङ्गोषिणमवावशन्तवाणी ।

२ ३ १ २ ३ १ २ ३ १उ २
वनावसानोवरुणोनसिन्धु-

१ २ ३ १ २ ३ १ २
र्विरत्नधादयतेवार्याणि ॥ १ ‡ ॥

"त्रिपृष्ठं" त्रीणि पृष्ठानि स्तोत्राणि सवनानि वा यस्य स तथोक्तस्तं "वृषणं" वर्षकं "वयोधाम्" अन्नस्य दातारम् "अङ्गोषिणम्" अपोषवन्तं सोममभिलक्ष्य "वाणीः" स्तोतॄणां वाचः "अवावशन्त" शब्दायन्ते । "वना" वनानि उदकानि "वसानः" आच्छादयन् "वरुणो न" वरुणो यथा सिन्धूनाच्छादयति तद्वत् ।

---

* 'ऋत्विजः विस्तारयन्ति'—इति वि० ।

† 'पञ्चमसाम्नः सम्यता मध्यन्दिनम्'—इति वि० ।

‡ ऋ० चा० ६, १, ४, ६ (२भा० १२० पृ०)=ऋ० वे० ७, ३, २६, १ ।

Digitized by Google

"सिन्धुः" स्यन्दनशीलः, "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि "दयते" प्रयच्छति स्तोतृभ्यः ॥

"अश्लोषिणाम्"-"अश्रूषाणाम्"—इति पाठौ, "सिन्धुः"-"सिन्धून्"—इति च ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३
शूरग्रामः सर्ववीरः सहावान्
१ २ ३ १ २ ३ १ २
जेता पवस्व सनिता धनानि ।
३ १ २ ३ १ ३ ३ १र
तिग्मायुधः क्षिप्रधन्वा समत्सु
२र ३ १र ३र ३ १ २
अषाढः साह्वान् पृतनासु शत्रून् ॥ २* ॥

हे सोम ! त्वं "पवस्व" । कीदृशस्त्वम् ? "शूरग्रामः" शूराणां ग्रामः सङ्घो यस्य सः, "सर्ववीरः" सर्वे वीरा यस्य स तथोक्तः, "सहावान्" सहनवान् "जेता" जयशीलः "सनिता" सम्भक्ता "धनानि" धनानां, "तिग्मायुधः" तीक्ष्ण-प्रहरण-साधनः,† "क्षिप्रधन्वा" क्षिप्र-सहनशील-धन्वा, "समत्सु" सङ्ग्रामेषु "अषाढः" असोढा, "साह्वान्" अभिभवन् । कुत्र ? "पृतनासु" शत्रु-सेनासु । कान् ? "शत्रून्" ॥ २ ॥

* ऋ० वे० ७, ३, २९, २ ।

† 'तीक्ष्णायुधः—असि-परशु-पाश-प्रभृतिभिरायुधैः सम्पन्नः'—इति वि० ।



Digitized by Google

अथ तृतीया ।

३ १ २ ३ १ २ २ १
उरुगव्यूतिरभयानिकृण्वन्
२ ३ १२ २२ ३ १२
समीचीनेआपवस्वापुरन्धी ।
२ १२ १२ ३ २३ १२ १२
अपःसिषासन्नुषसःस्वा*ऽ३ऽर्गाः
१२ ३ २ ३ २ ३ १ २
सञ्चिक्रदोमहोअस्मभ्यंवाजान् ॥ ३† ॥ ११

हे सोम ! "उरुगव्यूतिः" विस्तीर्ण-मार्गः त्वम् "उभयानि" स्तोतृभ्यः "कृण्वन्" कुर्वन्, "पुरन्धी"‡ इमे द्यावापृथिव्यौ "समीचीने" सङ्गते कुर्वन्, "आ पवस्व" आक्षर । "अपः" "उषसः" "स्वः" आदित्यं "गाः" रश्मींश्च "सिषासन्" सम्भक्तुमिच्छन् "सं चिक्रदः"¶ सङ्क्रन्दसे । "महः" महतः महान्ति "वाजानि" अन्नानि अस्मभ्यं दातुमिति शेषः ॥ ३ ॥ ११

२ १ ५ २ ३२ २
॥ सम्पावैयश्वम् ॥ ओ३हायि । ओ३हा । ओहा ।
१ ५ २ २ २ २ १ २ ३
इयार । ओ३हा३ए । अभित्रिपा । ष्ठा३वृष । णम्व

* "स्व"—इति क० पाठः ।

† ऋ० वे० ७, ३, २६, ४ ।

‡ 'पुरं धारयितः'—इति वि० ।

¶ 'चिक्रदः—शब्दं कुर्वन—इति वि

४ ५ २ १र २ १र २ ३ ४ ५ २
योधाम्। अक्रोषिणाम। यवाव। ग्रन्तवाणीः। व
१र २ १ २ ३ ४ ५ २ २ १
नावसा। नो३वह। णौनसिधूः। विरलधाः। इय
र २ २ ४ १र १ र
ते। वा३४३। रीया५णाई५६यि॥(१) भूरग्रामाः।
२ १र २ ३ ४ ५ १र १र २ १ २
सर्ववी। रःसहावान्। जेतापवा। स्वा३सनि। ता
३ ४ ५ २ १र २ १ २ ३ ४ ५ २ १र
धनानी। तिग्मायुधाः। क्षिप्रध। न्वासमत्सु। यषा
२ १ २ २ ४
ढःसा। क्षा३न्यृत। ना३४३। सूहृया५व५६न्॥(२)
२ १ २ २ ३ ४ ४ २ १र र
उरुगव्य। तीऽभर। यानिक्तपवाम्। समीचीने।
२ १ २ ३ ४ ५ २ १ २ २ २
आहृपव। स्वापुरन्धी। अपःषिषा। सा३नुष। सः
३ ४ ५ २ १ ऽ २ १र २ १
सुवर्गाः। यो३हायि। ओ३वा। पोहा। इया२।
४ २ १ १ १र २ २
यो३ल्ला३ए। सच्चिक्रदो। महोष। न्मा३४३। भ्या
४
वा५जा६५६न्(३)॥ १७* ॥ [१] ११

---

* ऋ० गा० ७प्र० २ख० १७धा०।

अथ त्वमिन्द्रेति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१२ ३१२ ३१ २र३१२
त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः।
२३१२ १२उ ११३१२ ३१२
त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पूर्वनुत्तश्चर्षणीधृतिः॥१०॥

हे "इन्द्र!" "त्वं" "शवसस्पतिः" शवसोऽन्नस्य बलस्य वा पालयिता, "ऋजीषी" ऋजीषोऽभिषुतः सोमः तद्वान्, त्वं "यशा असि" यशस्वी भवसि। कथमस्य यशस्वित्वं? तदाह— "अप्रतीनि" बलिभिरपि अप्रतिगतानि "वृत्राणि" रक्षांसि "अनुत्तः" अन्यैर्नेतुमशक्यः त्वम् "एकइत्" एकएव असहाय एव "चर्षणीधृतिः" रक्षकत्वेन यजमानादि-मनुष्याणां धारकः "पुरु" बहुलं यथा भवति तथा "हंसि" सम्प्रहरसि। अतएवास्य यशस्वित्वम्॥

"शवसस्पतिः"-"शवसस्पते"—इति पाठो, "इत्पूर्वनुत्तश्चर्षणीधृतिः"—"नएकइदनुत्ताचर्षणीधृता"—इति च॥ १॥

अथ द्वितीया।

१२ ३१२ २१२ ३ १२३१२
तमुत्वानूनमसुरप्रचेतसꣳराधोभागमिवेमहे।
३२३१२ ३१२ ३१२३१२
महीवकृत्तिःशरणातइन्द्रप्रतेसुम्नानोअश्नवन्॥२†॥१२

° ऋ० आ० ३, २, १, ६ (१ भा० ५१२४०)=ऋ० वे० ६, ६, १३, ५।

† ऋ० वे० ६, ६, १३, ६।

हे "असुर" बलवत्! प्राणवत्! वा हे "इन्द्र!" यः उक्त-गुणोऽसि "तं" च "प्रचेतसं" प्रकृष्ट-ज्ञानं "त्वा" "उ"[—इत्यव-धारणे] पितृवत् पोषकं त्वामिव "राधः" धर्मादि-साधनं धनं "नूनम्"*इदानीम् "ईमहे" याचामहे। तत्र दृष्टान्तः—"भाग-मिव" यथा कश्चित् पितृतो भागभूतं धनं याचते, तद्वत्; इन्द्रो यजमानेभ्यः स्तोतृभ्यश्च धनं प्रयच्छत्येव तस्मात् भागभूतं धनं यष्टारो वयं याचामहे। किञ्च हे इन्द्र! "महीव कृत्तिः" [कृत्ति र्यशोऽन्नं वा कृतीच्छेदने (रु॰ प॰) करणे क्तिन्। कृतन्त्यनेनेति, इद्दयौ] कृत्तिरिव "ते" तव "शरणा" शरणं गृहम् अन्तरिक्षं द्युलोके महद् वर्त्तते [अत्र यास्कः—"कृन्ततेर्यशोवान्नं वा। महीव कृत्तिः शरणा त इन्द्र। सुमहत्त इन्द्र शरणमन्तरिक्षे कृत्तिरिव (निरु॰ नै॰ ५, २२)"—इति]। किञ्च, "ते" तव स्व-भूतानि "द्युम्ना" द्युम्नानि मन्त्रादि-विषय-सुखानि च "नः" अस्मान् "प्राश्नुवत्" प्रकर्षेणाश्नुवतां व्याप्नुवन्तु [अश्नोतेर्लेट्यडागमः (३, ४, ९४)] ॥ २ ॥ १२

॥ अभीवर्त्तम् ॥ तुवा३मा३यिन्द्रयज्ञावसोवा। षा ॐषीश्र। वसास्थ्या१ता२यिः। तुवम्वृत्रा३१२३४। णि हं९स्यप्रतीनिए। कआयित्पू१ह्व२। अनूत्ता१श्वा२। षणा३यि। धा२३४५। ना२३४५यिः ॥(१) अनू३त्ता३श्व

* 'निश्चितम्'—इति वि॰।

१र ४ ५ १ २ १ २ १
र्षणीधृतोवा। आनुत्तस्व। षणायिधा१र्त्ता२यिः। ता

२र २ २ ४ ५ २ १ २ २र १
मुत्वानू३१२३४। नमस्तुर। प्रचायिता१सा२म। राधो

२ ३ २ १ २ १ १ १ १
भा१गा२म्। इवा३यि। मा२३४५। हा२३४५यि ॥(२)

५र४ २ ४ ५र ४ ५ १ २ २र १ २
राधो३भा३गमिवेमहोवा। राधोभागम्। इवायिमा१

१ र २ ३ ४ ५र १ १ २
हा२यि। माहीवका३१२३४। तिःशरणा। तआमा१

१ १ ३र २ १
यिन्द्रा२। प्रतायिह१म्ना२। नोआ३। आ२३४५।

२ १ १ १ १
वा२३४५न्(३) ॥ १८* ॥ [१]

२ १ ४ ५र
॥ दिहिङ्कारम्वामदेव्यम् ॥ तुवमा२३यिन्द्रयशाअसा

१र र र र ऽ
यि। आजोषीशवसस्पतिस्त्वम्वृत्राणिहं९स्यप्रतीनयायि

१ ३र २ १ १ २ १ २ ३र २
कओहो३। ऊम्मा२। पू२३ह। अनुत्तस्वार्षणीहो३।

१ १ ४ ५ २ १ ४
ऊम्मा२। धृतायिः। औ२३होवा ॥(१) अनुत्ता२३स्व

५र १ र रर १
र्षणीधृतायिः। आनुत्तश्वर्षणीधृतस्तमुत्वानूनमस्तुराऽप्र

* ऊ० गा० ७प्र० २अ० १८सा०।

२र१२ १ १ २ १र र र ३ ३र
घोहो३ । ऊम्मा२ । ता२३साम् । राधोभागा ऽमिवी
२ १ १ २ ४ ५ २२१र
हो३ । ऊम्मा२ । मद्दा । औ३होवा ॥(२) राधोभा
४ ५र १ र र र र र
३गमिवेमद्दायि । रा ऽधोभागमिचेमहेमहोवह्नित्तिःग्ररणा
१ १र २ १ १ २ १ र २
ऽतघौघोइ । ऊम्मा२ । घा२३यिन्द्रा । प्रतेमुम्ना ऽन
१र २ १ १ ४ ५ ४
घौघोइ । ऊम्मा२ । अवान् । औ२३होवा । हो५३ ।

डा(३) ॥ ७ * ॥ [२]

१ २ १ २ १र २ र
॥ यग्रम् ॥ त्वमिन्द्रा । यशाः । असायि । ऋजो
१र २ १ २ २ २ ३२ १ र
घौग्रवसः । पतायिः । त्वम्वृत्राणीरह९सिया । प्रती
१ २ १ २ ५र र
नाए२ । कद्रत्पूरु२चो१ । तत्र । घार्णा२३४ओहो
३ ५ १२ १ २ १र
वा । धा२३४र्त्ताः ॥(१) अनुत्तश्वा । अनुत्तश्वा । पणी ।
२ र १ २ र २
धृतायिः । अनुत्तस्वर्षणी । धृतायिः । तमुत्वानू३नम
३ २ १ १ १र
सुरा । प्रावा२यि । तामा२म् । राधा२हो१यि ।

---

* ऊ॰ गा॰ १६प्र॰ २ख॰ ७मा॰ ।

Digitized by Google

र २ १ २ ५र र २ ५
भागम्। आ२यिवा२३४औहोवा। मा २३४ हे॥(२)

१र२ र १ २र र र १र र र
राधोभागाम्। राधोभागाम्। इवे। महायि। राधो

२र १ ०र २ २ र २ १ १ १
भागमिवे। महायि। महीवका३र्त्तिःशरा। पाता२

यि। आयिन्द्रा२। प्रता२यिहोश्यि। तुभ्या। नोर

३ ५र र २ ५
आ२३४औहोवा। श्रा२३४वान्(३)॥ १४ *॥ [३] १२

यजिष्ठन्त्वेति प्रगाथात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १ २ ३ १ ३र ३ १ २
यजिष्ठन्त्वाववृमहे देवन्देवत्रा होतारममर्त्त्यम्।

३ २ ३ १ २ ३ १ २
अस्ययज्ञस्य सुक्रतुम्॥ १ †॥

हे अग्ने! "यजिष्ठं" यष्टृतमं "त्वा" त्वां "ववृमहे" वृणीमहे सम्भजामहे। कीदृशं त्वाम्? "देवत्रा" देवेषु मध्ये "देवम्" अतिशयेन दानादि-गुणकम्, "होतारं" देवानामाह्वातारम्, "अमर्त्त्यम्" अविनाशिनम्, "अस्य" "यज्ञस्य" यागस्य "सुक्रतुं" सुष्ठु कर्त्तारम्॥ १॥

* ऊ० गा० १८प्र० १ख० १४गा०।

† छ० आ० २, १, २, ६ (१भा० ९८३ पृ०)=ऋ० वे० ६, १, १९, १।

अथ द्वितीया।

२ १ २र २ १ २ २ १ २ २ २३ १ २

अपान्नपातꣳसुभगꣳ*सुदीदितिमग्निमुश्रेष्ठ†शोचिषम्।

१ २ ३ १ ३ १ २ ३ १ २ ३ २ ३ १ २ २ २

सनोमित्रस्यवरुणस्यसोअपामासुम्नंयक्षतेदिवि॥ २‡ ॥१२

"ऊर्जः" अन्नस्य "नपातं" न पातयितारं¶ [यद्वा, नप्तारं चतुर्थं हविर्लक्षणेनान्नेन आपो जायन्ते, अद्भ्यश्चौषधि-वनस्पतय-स्तेभ्य एव जायत इति चतुर्थत्वम्§। "नभ्राण्नपात् (६, ३, ७५)"—इति नञ् प्रकृतिभावः] "सुभगं" शोभन-धनं "सुदीदितिं" सुष्ठु दीप्यन्तं "श्रेष्ठशोचिषं" प्रशस्यतम-तेजस्कम् अग्निं स्तौमीति शेषः। स तादृशोऽग्निः "नः" अस्मदर्थं "दिवि" द्योतमाने देवयजने द्युलोके वा "मित्रस्य" देवस्य "वरुणस्य" च "सुम्नं" सुखम् "आ" अभिलक्ष्य "यक्षते" यजतु। तथा सोऽग्निः "अपाम्" अब्देवतानाञ्च सुम्नमभि यजतु॥ २॥ १२

२ ४ १ ४ ५

॥साध्यम्॥ या॥ऽ५जि। छुन्वा३वा३वा३वृमहायि।

१र१र रर २ १ १ १ ०

देवन्देवाहोतार३राम्। आमर्त्तियम्। आस्मयाज्ञा

---

* "ऊर्जोनपातं"—इति ऋ० पाठः।

† "अग्निमेष्ठ"—इति च ऋ०-पाठः।

‡ ऋ० वे० ६, १, २९, ४।

¶ अभेदोपचारेणायं व्याख्यानम्।

§ 'अपां नपातम्—अपां पौत्रमग्निम्। अपां पुत्रका वृक्षाः, तेषु वह्नितं पुत्रं पौत्रम्'—इति वि०।

१ ४ २ ५ ३
२३। स्या२३सू३। क्रा३४५तो६हायि॥(१) आ5५स्य।
४ २ ४ ५ ३ १र र २ १र
यम्रा३स्या३सुक्रतूम्। अपान्नपातꣳसुभा२३गाम्। स्वदी
२ १ ० १ ४ २
दितिम्। वाग्निमूश्रे२३। ष्ठा२३म्रो३। चा३४५विषो
५ ५ ४ २ ४र ५ १
६हायि॥(२) आ5५ग्निम्। उश्रे३ष्ठा३म्रोचिषाम्। स
र २ १ र २ र १ ०
नोमित्रस्यवरु२३णा। स्यासोअपाम्। आसुम्नाया२३।
१ ४ २ ५
वा२२ता३यि। दा३४५यिवो६हायि(३)॥ ३*॥ [१]

२ र १ २ र १ र
॥ ऐध्मवाहसम्॥ यजिष्ठन्त्वावनृमाहायि। देवन्देव
र र र
वाहोतारममर्त्तियाम्। अस्ययज्ञस्यसुद्रहा। वस्ययज्ञ
१ ५ ४ ५
स्यसू5द्रहा। जयायि। जवो२३४वा। क्रा५तो६हा
२ १ २ १र र
यि॥(१) वसायज्ञस्यसुक्रातूम्। अपान्नपातꣳसुभगꣳ
र र र र र
सुदीदितायिम्। अग्निमुश्रेष्ठम्रोद्रहा। अग्निमुश्रेष्ठाम्रो
५ ४ ५
5द्रहा। जवायि। जवो२३४। वा। चा५यिषो६हा

* ऋ० सं० ८म० १सू० ३वा०।

१ २ २ १ १ २
यि ॥(२) अग्निमुश्रेष्ठशोचायिषाम् । सुनोमित्रस्यवरुण
२ २
सोमपाम् । आसुम्नंयक्षताऽइहा । ऊवायि । ऊवोर
५ ४ ५
३४ । वा । दा५यिवोईहायि(३) ॥ ३* ॥ [२] १३

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे —

यमग्न इति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ २उ ३ २ १ १ २ ३ १ ३ २
यमग्नेपृत्सुमर्त्यमवावाजेषुयञ्जुनाः ।
२उ ३ १ २ ३ १ २
सयन्ताशश्वतीरिषः† ॥ १‡ ॥

हे "अग्ने !" "पृत्सु" सङ्ग्रामेषु "यं" "मर्त्यं" यजमानम् "अवाः" अवसि रक्षसि, "यं" पुरुषं "वाजेषु" सङ्ग्रामेषु "जुनाः" अवसि, "सः" नरः यजमानः "शश्वतीरिषः" नित्यान्न-

---

* ऊ० ग्रा० १८प्र० १ख० ३सा० ।

† "स्वाहा"—इति यजुष्यधिकः पाठः ।

‡ ऋ० वे० १, ९, २२, २ = य० वे० ६, २९ ।

Digitized by Google

नानि "यन्ता" नियन्तुं समर्थो भवति [पृषु—"पद्दादिषु मांस-पृत्स्नूनामुपसङ्ख्यानम् (६,१,६३)"—इति पृतना-शब्दस्य पदादेशः "सावेकाच (६,१,१६८)"—इति विभक्तेरुदात्तत्वम्। श्रवाः—श्रवः अकाराकारयोर्विपर्ययः, यद्वा लेटाड़ागमः, "इतश्च (३,४,९७)"—इति सिप इकार-लोपः। श्रुगाः—श्रुइति गत्यर्थः सौत्रो धातुः, लङ्, सिप्, क्र्यादिभ्यः श्ना; "बहुलञ्छन्दस्यमाङ्योगेऽपि (६,४,७५)"—इत्यड़ागमाभावः; यद्वृत्तयोगात् (८,१,३०)" अनिघातः। यन्ता—तृनो नित्त्वादाद्युदात्तत्वम् (६,१,१९७)। अश्वतीः—"उगितश्च (४,१,६)"—इति ङीप्॥ १॥

अथ द्वितीया।

१ २ ३ १२ ३१२
नकिरस्य सहन्त्यपर्येता कयस्यचित्।

१ २ ३ १ २
वाजो अस्ति श्रवाय्यः॥ २* ॥

हे "सहन्त्य!" शत्रूणामभिभवन-शीलाग्ने! "अस्य" त्वद्भक्तस्य यजमानस्य "कयस्यचित्" कस्यापि "पर्येता नकिः" आक्रमिता नास्ति। किञ्चास्य यजमानस्य "श्रवाय्यः" श्रवणीयः "वाजः अस्ति" बल-विशेषोऽस्ति† ॥ २ ॥

* ऋ० वे० १, १, २३, १।
† 'वाजमन्नं'—इति वि०।

अथ तृतीया।

१र २र३ १ २ ३ १ २ ३ १ २
सवाजंविश्वचर्षणिरर्वद्भिरस्तुतरुता।

१ २ ३ १ २
विप्रेभिरस्तुसनिता॥ ३* ॥ १४

"विश्वचर्षणिः" सर्वैर्मनुष्यैरुपेतः† "सः" अग्निः "अर्वद्भिः" अश्वैः‡ "वाजं" सङ्ग्रामं "तरुता" तारयिता "अस्तु" "विप्रेभिः" मेधाविभिः ऋत्विग्भिः सहितः तुष्टोऽग्निः "सनिता" फलस्य दाता¶। [ विश्वचर्षणिः—विश्वे चर्षणयः यस्य "बहुव्रीहौ विश्वं सञ्ज्ञायाम् ( ६, २, १०६ )"—इति पूर्वपदान्तोदात्तत्वम्। अर्वद्भिः—ऋ गतौ ( भ्वा० प० ), "अन्येभ्योऽपि दृश्यते ( ३,२,७५ )"—इति वनिप्, भिसि "अर्वणस्त्रसावनञः (६, ४, १२७ )"—इति नकारस्य तृ-इत्ययमादेशः। तरुता—तॄ प्लवन-तरणयोः (भ्वा०प०), अस्मात् "ग्रसित-स्कभित- (७, २, ३४ )—इत्यादौ तृजन्तो निपातितः, निपातनादेवेकारस्योत्वम् ] ॥ ३ ॥ १४

---

* ऋ० वे० १, १, २६, ४।

† 'विश्वस्य द्रष्टा'—इति वि०।

‡ 'अर्वद्भिः—तृतीयाबहुवचनं चतुर्थीबहुवचनस्य स्थाने द्रष्टव्यम्, अर्वद्भ्यः'—इति वि०।

¶ 'विप्रेभिः—विप्रेभ्यः सनिता, तां मुक्त्वा न कश्चिदन्यो दाता'—इति वि०।

Digitized by Google

अथ साकमुच इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ १ २ ३ १ २ ३
साकमुक्षोमर्ज्जयन्तस्वसारो
१ ३ १ २ ३ २ ३ १ २
दशधीरस्यधीतयोधनुत्रीः।
२ ३ १ २ ३ १र २र २
हरिःपर्य्यद्रवज्जाःसूर्य्यस्य
१ २ ३ २ ३ १ २
द्रोणन्ननक्षेअत्योनवाजी॥ १*॥

"साकमुक्षः" सह युगपत् सिञ्चः [उक्ष सेचने (भ्वा०प०) क्विपि रूपम्, तादृश्यः] "स्वसारः" कर्म्म-करणार्थम् इतस्ततः सृत्तु गच्छन्त्यः अङ्गुलयः "मर्जयन्त" सोमं शोधयन्ति [मृजू शोधनालङ्करणयोः (अदा० प०)]। तथा "दश" दश-सङ्ख्याकाः "धीतयः" [अङ्गुलि-नामैतत् (निघ०२, ५, ७)] "धीरस्य" समर्थस्य यज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशः ताः "पर्य्यद्रवत्" परितो गच्छति [सूर्य्यस्य तेजसा हि आविर्भवन्तीति दिशान्तस्य जायात्वम्] "अत्यः" अतनशीलः "वाजी न" अश्वइव स्थितः सोमः "द्रोणं" द्रोणकलशं "नक्षे" व्याप्नोति [नक्षतिर्व्याप्तिकर्मा (निघ० २, १८, २)]॥ १॥

---

* ऋ० आ० ६, १, ५, ६ (२भा० ११६पृ०) = ऋ० वे० ७, ४, ३, १।

अथ द्वितीया।

१ २ २ ३ २र ३ १र
सम्मातृभिर्न्नशिशुर्वावशानो

२र ३ १ २ ३ २
वृषादधन्वेपुरुवारोअद्भिः।

२ ३ १र २र२ ३ २ ३ १र
मर्योनयोषामभिनिष्कृतंयत्

२र ३ १ २ ३ १ २
सङ्गच्छतेकलशउस्रियाभिः॥ २* ॥

"वावशानः" देवान् कामयमानः "वृषा" कामानां वर्षकः अतएव "पुरुवारः" बहुभिर्वरणीयः सोमः "अद्भिः" मातृभूताभिः वसतीवरीभिः "सं दधन्वे" सन्धार्यते। तत्र दृष्टान्तः— "मातृभिर्न शिशुः" कामयमानः पुत्रो यथा मातृभिः पयःप्रदानेन सन्धार्यते [धवि गत्यर्थः (भ्वा० प०) कर्म्मणि लिटि रूपम्] "मर्यो न" मनुष्यो यथा "योषां" युवतिम् अभिगच्छति तद्वत्, "निष्कृतं" संस्कृतं स्वस्थानम् "अभि यन्" अभिगच्छन् "कलशे" द्रोणाभिधाने "उस्रियाभिः" अद्भिः गोविकारैः क्षीरादिभिर्वा "सङ्गच्छते" [गमेरकर्मकात् "समोगम्यृच्छि-भ्याम् (१, ३, २९)"—इत्यात्मने पदम्॥ २॥

---

* ऋ० वे० ७,४, २, २।

† 'धाद्रिवर्रस्मिभिः'—इति वि०।

Digitized by Google

अथ तृतीया ।

२ ३१र २र३ २ ३ १ २ ३
उतप्रपिप्यऊधरघ्न्याया

१ २ ३ १ २ ३ २
इन्दुर्धाराभिःसचतेसुमेधाः ।

३ २ ३ २ ३ १ २ ३ २ ३ १
मूर्द्धानङ्गावःपयसाचमूष्वभि

२ ३ १ २ ३ २ ३ २
श्रीणन्तिवसुभिर्न्निक्तैः ॥ ३* ॥ १५

"उत" अपि च "अघ्न्यायाः" ["अघ्न्या"—इति गो-नाम (निघ० २, ११, १)] अहं तथाविधाया गोः "ऊधः" पयःस्थानं सोमः "प्रपिप्ये" ओषध्यादिषु सोमः प्रविश्य प्रकर्षेण प्यायति [प्यायतेर्लिटि "लिड्यङोश्च (६, १, २९)"—इति पी-भावः] "सुमेधाः" शोभन-प्रज्ञः सोऽयम् "इन्दुः" सोमः "धाराभिः" "सचते" समवेति सङ्गच्छते । ततो "गावः" "चमूषु" [चमन्ति भक्षयन्त्यत्र सोममिति चम्वो ग्रहादयः, तेषु] स्थितं "मूर्द्धानं" समुच्छ्रितमिमं सोमं "पयसा" उदकेन "अभि श्रीणन्ति" अभित आच्छादयन्ति† । तत्र दृष्टान्तः— "निक्तैः" प्रक्षालितैः "वसुभिः" वस्त्रैः यथा आच्छादयन्ति तद्वत् ॥ ३ ॥ १५

* ऋ॰ वे॰ ७, ४, ९, ३ ।

† 'अभिश्रीणन्ति मिश्रयन्ति'—इति वि॰ ।

॥ इन्द्रवद्वासिष्ठम्॥ औहोवाहा ३ होयि। इहा।
साकमुक्षो। मर्ज्जय। तस्वसाराः। दशधीरा। स्या
३धीत। योधनुत्वीः। हरिःपर्य्या। द्रवज्जाः। सूरि
यस्या। द्रोणन्नना। क्षे३अति। यो३४३। ना३वा५
जा६ ५ ६यि॥(१) सम्मातृभायिः। नशिशूः। वावशा
नाः। वृषादधा। न्वे३पुरू। वारोअद्भायिः। मर्य्यो
नयो। षा३मभि। निष्कृतंयान्। सङ्गच्छतायि। क
लशे। ऊ३४३। स्रो३या५भा६५६यिः॥(२) उतप्रपायि।
प्या३ऊधः। अघ्नियायाः। इन्दुर्द्धारा। भी३:सच।
तेसुमेधाः। मूर्द्धानङ्गा। वा३:पय। साचमूषु। औ
होवाहा३होयि। इहा। औभिश्रीणा। तो३वसु। भा
३४३यिः। ना३ना५यिक्ता६५६यिः(३)॥ ७॥ [१]

---

* ऊ० गा० ८प्र० १ख० ७सा०।

२ २ २ र १ २ १
॥ पार्थम् ॥ ओ३हो३होयि। माकमुतो। मर्त्ये
१ २ ४ ५ २ १र २ १ १ २ ४
य। तस्वमाराः। दशधीरा। स्था३धीन। योधनु
५ १ १ २ १ २ २ ३ ४ ५ २र १
षीः। हरिःपर्या। द्रवज्जाः। हरियस्था। द्रोणन्न
२ १ २ २ ४
ना। ले३अति। यो३४३। ना३वा५जा६५६यि ॥(१)
२ र १ २ १ २ ३ ४ ५ २ र १
सम्मातृभायिः। नशिप्रुः। वावशानाः। वृषादधा।
२ १ २ ३ ४ ५ २ र १ १ १ २
न्वे३पुरु। वारोअद्भायिः। मर्य्योनयो। षा३मभि। नि
२ ४ ५ २ १ २ १ र २
ष्कृतंयान्। मज्जक्कनायि। कलशे। ऊ३४३। सो
४ १ १ २ १र २
३या५भा६५६यिः ॥(२) उनप्रपायि। प्या३ऊधः। अघि
४ ५ २ १र २ १ २ ३ ४ ५ २र र
यायाः। इन्दुर्धारा। भो३ःसच। तेसुमेधाः। मूर्द्धा
१ २ १ २ ३ ४ ५ २ २ २
नक्षा। वा३ःपय। साचमूषू। औ३हो३होयि। अभि
२र २ १ २ २ ४
श्रीणा। तो३वस्त्र। भा३४३यिः। ना३ना५यिक्ता६५६
यिः(३) ॥ ८ ॥ [२]

---

* ख० गा० १२प्र० १ख० ८गा० ।

१ २ १ र २
॥ सौभ्रनम् ॥ साकाम्। उत्तामर्त्त्यंयन्ता। स्वसा
२ १ २र १ २ १र १२र३ ४ ५ १
३रा:। दश्रधीरा। स्याऽ३धीत। योधनुत्रीः। हरि:
र १ २ र १ २ १ २ १
पर्य्यद्रवञ्जाःसू। रियार३स्था। द्रोणमना। सो३अति।
२ १ ४ १ २ १
यो३४३। ना३वा५जा६५६यि॥(१) साम्रा। नृभिर्म
२ २ १ २ १ २ १ २ ३र
श्रिप्तुर्वा। वग्राऽ३नाः। वृषाऽधा। न्वो३पुरु। वारो
४ ५ १ र र १ २
पद्माथि:। मर्य्यीनयोषामभिनायि:। कृतार३यान्।
१ २ १ २ १ र २ २ ४ २
सञ्चकृतायि। कलशे। ऊ३४३। सो३या५भा६ ५ ६
१ १ र २ १
यि: ॥(२) ऊता। प्रपिप्यऊधरा। धियाऽ३याः। इन्द्र
२र १ २ १ २,३ ४ ५ १र र र
दूरा। भी३:सच। तेसुमेधा:। मूर्द्धानङ्गाव:पयसा।
० २ र २ १ २ २
चमूऽ३षु। अभिश्रीणा। ती३वस्तु। भा३४३यि:। ना
४
३ना५यित्ता६५६यि:(३) ॥ ४ ॥ [३] १५

* ऊ० गा० १८प्र० २ख० ४गा०।

अथ पिबासुतस्येति प्रगाथात्मकं तृतीयं सूक्तम्,—

तत्र प्रथमा ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः ।
३ १ २ ३ १ २ ३ २ १ २ ३ १ २
आपिर्नोबोधिसधमाद्येवृधे३ऽस्माँ२अवन्तुतेधियः ॥ १* ॥

हे "इन्द्र!" "रसिनः" रसवतः "गोमतः" गोर्विकारैः पयः-प्रभृतिभिः अपण-द्रव्यैर्युक्तस्य "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य ["क्रियाग्रहणं कर्त्तव्यम्"—इति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे (२, ३, ६२)—षष्ठी] ईदृशं सोमं "पिब", पीत्वा च "मत्स्व" हृष्टो भव । अपि च त्वं "सधमाद्ये" सह मादयितव्ये सहितैरस्माभिस्तर्पयितव्ये सोमे "आपिः" आपयिता बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धमानाय "बोधि" बुध्यस्व "ते" त्वदीया "धियः" बुद्धयः अनुग्रहात्मिकाः "अस्मान्" स्तोतॄन् "अवन्तु" रक्षन्तु ॥

"सधमाद्ये"-"सधमाद्यः"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

३ १ २ ३ २ ३ १ २ ३१र २र ३ १ २
भूयामतेसुमतौवाजिनोवयमास्तरभिमातये ।
३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अस्माञ्चित्राभिरवतादभिष्टिभिरानःसुम्नेषुयामय ॥२†॥१६

* ऋ० भा० ३, ४, ५, ७ (१भा० ४८५पृ०) = ऋ० वे० ५, ७, २५, १ ।

† ऋ० वे० ५, ७, २५, १ ।

हे इन्द्र! "सुमतौ" शोभनायां बुद्धौ अनुग्रह-बुद्धौ "वाजिनः" हविष्मन्तो वयं "भूयाम" वर्त्तमाना भवाम "अभिमातये" अभिमन्यत इत्यभिमातिः शत्रुः * तस्मै तदर्थं "नः" अस्मान् "मा स्तः" माहिंसीः [स्तृञ् हिंसायाम् (क्रया० प०) माङि लुङि छान्दसश्च्लेर्लुक्]। अपितु "अभिष्टिभिः" अभ्येषणीयाभिः प्रार्थनीयाभिः "चित्राभिः" चायनीयाभिः बहुविधाभिर्वा त्वदीयाभिः "ऊतिभिः" "अस्मान्" "अवतात्" [अव रक्षणे (भ्वा० प०)]। तथा "नः" अस्मान् "सुम्नेषु"† सुखेषु "आ यामय"‡ आयतान् कुरु सर्वदा सुखिन एव कुरु॥ २॥ १६

५ ४ २ ४ ५ ४ ५ १ र २
॥ अभीवर्त्तम्॥ पिबा३सू३तस्यरसिनोवा। मात्स्वान
१ २ १ र २ ३ ४ ५र
इ। द्रगोमा१ता२ः। आपिर्नोवा३१२३४। धिसधमा।
२ १ २ १ २ ३ २ २
दियेवा१द्धा२यि। अस्माऽआ१वा२। तुता३यि। धा
३ १ १ १ १ ५ ४ २ ४ ५र ४ ५
२३४५। या२३४५ः॥(१) अस्माऽ३आ३वन्तुतेधियोवा।
१ र २ १ २ १ र २
आस्माऽअव। तुतायिधा१या२ः। भूयामता३१ २ ३ ४
३ ४र ५र २ १ २ र १ २
यि। सुमतौवा। जिनोवा१या२म्। मानास्ता१रा२।

* 'अथवा कश्चिद्रोगः'—इति वि०।

† 'सुम्नेषु—धनेषु'—इति वि०।

‡ 'आपयेत्यर्थः'—इति वि०।

३ २ १ ३ ११११ ५र ४ २
भिमा३। ता२३४५। या२३४५यि ॥(२) माना३स्ता३

४ ५र ४ ५ १ २ १ २ १ र
रभिमातयोवा। मानस्तर। भिमाता१या२यि। भास्मा

२ ३ ४ ५र २ १ २
भिवा३१२३४। भिरवतात्। अभायिष्टा१यिभा२यिः।

र १ २ ३१ १ २ १ १
आनाःस्त१म्ना२यि। षुया ३। मा २ ३ ४ ३। या २ ३

१ १
४ ५(३) ॥ ८* ॥ [१]

४ २र ४ ३ ४ ५ ४ ५ र ३ २
॥ उत्सेधम् ॥ पिबासुतस्यरसिनः। मत्स्वा। नपा

२र ४र ५ २ १र २
३४औहोवा। द्रगोमता२ः। हा३१उवा२३। ऊ३४

५ ३र २ ४र ५र ४ ५ १ २ १
पा। आपा३यिर्नोवो। औहोवाहायि। धायिसधमा।

२ र १ २र २ ५ ३ २
दियेवाई। हा३१उवा२३। ऊ३४पा। अस्मा

४ ५र ४ ५ २ २ ४
३९अव। औहोवाहायि। तुना३यिधा५या६५६ः ॥(१)

४ ३र ४ र ५र र ३ २ ३र ४ ५
षस्मा९अवन्तुतेधियो। स्माम्। अवा ३ ४ औहोवा।

२ १र २ ५ ३ २र ४
तुतेधिया२ः। हा३१उवा२३। ऊ३४पा। भूया३म

* ऊ० गा० ८प्र० १अ० ८खा०।

५र ३ ५ १ १र १ २ र १ २
ता । औहोवाहायि । अमतीवा । जिनोवायम् ।

२॰ ५ ३र १ ४ ५र ४ ५
हा३१उवा२३ । ऊ३४पा । माना३स्तर । औहोवाहा

३ १ ४ ३र ४ ३ ४र ५ र र
यि । भिमा३ता५या६५६ ॥(२) मामस्तरभिमातये । मा

३ २ ३र ४र ५ २ १र
नः । स्तरा३४औहोवा । भिमातयाऽ२यि । हा३१उवा

२॰ ५ ३ २ ४ ५र ४ ५
२३ । ऊ ३ ४ पा । असाश्श्विया । औहोवाहायि ।

१ २ १ २ १ २ २॰
भायिरवतात् । अभिष्टायिभिः । हा३१उवा । ऊ३४

५ ३र १ ४ र ५र ४ ५ ३ २ ५
पा । आना३:तुब्बे । औहोवाहायि । धुया३मा५या

२ १ १ १ १
६५६ । ऊ२३४५(३) ॥ १५* ॥ [२]

२ र २ १ २ १
॥ निषेधम् ॥ पिबासुतस्या३रसिनाः । मत्स्वानआ

२ र १ १ २ १ २ ४ ५ २॰
यि । द्रगोमता२ः । इहा३ । आपा३यिन्नौवो । हा

२ ५ १ २ १ २ र १ २ १ २
हो२३४हा । धायिसधमा । दियेवा२३हौयि । इहा३ ।

१ २ ४ ५ २॰ २ ५ ३ २ ४
आसा३२आवा । हाहो२३४हा । तुता३यिधा५या६५

* ऊ० गा० १३प्र० १ख० १५सा० ।

२ र २र १ २ १ २र १
ई:। अस्मा३ अवन्तू३तेधिया:। अस्मा३ मवा। तुतेधि

१ २ १ २ ४ ५ २ ३ ५ १
या२:। इहा३। भूया३मातायि। हाहो२३४हा। सू

२र १ २ र १ २ १ २ १ २ ४ ५
मतीवा। जिनोवा२३याम्। इहा३। माना३स्तारा।

२ ३ ५ ३ २ ४ २र
हाहो२३४हा। भिमा३ता५या६५६यि ॥(२) मानस्तर

२र र १ २ १ २ र १ १ २
भी३मातयायि। मानास्तरा। भिमातया२यि। इहा

१ २ ४ ५ २ ३ ५ १ २ १
३। आस्मा३त्वायित्वा। हाहो२३४हा। भायिरवतात्।

२ १ २ १ २ १ २ ४ ५ २
अभिष्टा२३यिभायि:। इहा३। आना३:सम्नायि। हा

३ ५ ३ २ ४ २११११
हो२३४हा। षुया३मा५या६५६। हे२३४५(३) ॥१६*॥[३]

५ ४ २ ३ ४ ५ १ र र
॥ पृष्ठम् ॥ पिबा३सुतस्यरसिना:। मत्स्वानइन्द्रगो

१ २र १ र र र र १
मता२३होइया। आपिर्नोबोधिसधमाद्योवृधा २ ३ होइ

२ १र २ १ २
या। अस्मा३ आ२३वा। तुतायिधा२३या ३ ४ ३: ॥(१)

५ ४ २ ३ ४ र ५ १ र र १
अस्मा३ अवन्तुतेधिया:। अस्मा३ अवन्तुतेधियार ३ हो

---

* ऊ० गा० १३प्र० १अ० १६सा०।

२र१र र र र र १ २र
इया । भूयामतेस्तुमतीवाजिनोवया२३ॱॱचोइया । मा
१ २ १र २ ५र४ २३
नस्ता२३रा । भिमाता२३या३४३यि ॥(२) माना३स्तर
४र५ १र र १ २१र
भिमातयायि । मानस्तरभिमातया२३यिहोइया । अस्मा
र र १ २र१ १
श्चित्राभिरवतादभिष्टिभा२३यिर्वोइया । आनःसू२३स्मा
१र २ १
यि । षुयामा२३या३४३ । औ२३४५ई । डा(३) ॥१२*॥[४]

२र र र
॥ जमदग्नेःसाम ॥ पिबासुतस्यरसिनोमत्स्वाहाउ ।
१ १र २ २१ र
ना२ः । इन्द्रा२गोमता२३ः । हाउ । आपिन्ना२वो ।
१ ० १र २ १ ०
धिसाधमा२ । दियेवृधा२३ । हाउ । अस्माॱॱअवा
२ ३२ १ ३ ५र र २ ३
२३ । हा । तुते३होर । या२३४औहोवा । धियज
११११ २ र र र र
२३४५ ॥(१) अस्माॱॱअवन्तुतेधियोस्मान्हाउ । आ२ ।
१ १र २ र१र र १ ०
वन्तू२तेधिया२३ः । हाउ । भूयामा२ते । सुमतीवा
१ र २ र१ ० २
२ । जिनोवया२३म् । हाउ । मानास्तरा२३ । हा ।

* ऊ० गा० १६प्र० ९ख० १२गा० ।

२ १ १ ॒ २ ५र र २ ॒ २ १ १ १ १
भिमा३हो२। या२३४औहोवा। तयज्ञ २ ३ ४ ५ ॥(२)

२र र र र र १ १ १र
मानस्तरभिमानयेमानोहाउ। स्ता२ः। अभा२यिमा

२ १र र १ ७
तया२३यि। हाउ। असमाभ्या२यित्रा। भिरावता२

१ १ र १ ७
त्। अभिष्टिभा२३यिः। हाउ। आनाःसुम्ना २ ३ यि।

२ ॒ ३ २ १ ॒ २ ५र र १ ॒ २
हा। षुया३ हो २। या २ ३ ४ औहोवा। मयज्ञ

१ १ १ १
२ ३ ४ ५(३) ॥ १६* ॥ [५] १६

अथ त्रिरस्मैसप्तेति तृचात्मकं चतुर्थं सूक्तम्,

तत्र प्रथमा।

१ २ ३ २ ३ १ २
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३ १र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २ ३ १र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ १† ॥

---

* ऊ० गा० १८प्र० २अ० १६सा०।

† ऋ० चा० ६, १, २, ७ (२भा० १८८पृ०) = ऋ० वे० ७, १, २३, १।

"परमे व्योमनि" विविधमोममवनं गमनं देवानामत्रेति व्योमा यज्ञः, तस्मिन् स्थिताय यद्वा परमे व्योमनि अन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्यां" सत्यं यथार्थभूतम् "आशिरम्" आश्रयमाणं "दुदुह्रिरे" दुहन्ति [यद्वा, त्रिःसप्त द्वादश मासाः पञ्चर्त्तवः त्रय इमे लोका असावादित्य एकविंश इति, एतैः सर्वैः सह गोषु उत्पद्यते तद्गावो दुहन्तीति]। किञ्चायं सोमः "अन्या" अन्यानि "चत्वारि" "भुवनानि" उदकानि वसतीवरीस्त्रिसैकधना इति, तानि चतुःसङ्ख्याकानि "चारूणि" कल्याणानि उदकानि "निर्णिजे" निर्णेजनाय परिशोधनाय "चक्रे" करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैरेव "वर्धितः" वर्धितवान् तदा करोति ॥

"दुदुह्रिरे," "परमेव्योमनि"-"दुदुह्रे," "पूर्वेव्योमनि"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१र २र   २ १ २ ३ १ २
सभक्षमाणोअमृतस्यचारुण

१२उ ३ १ २ ३ १ २
उभेद्यावाकाव्येनाविशश्रथे ।

१ २ ३ २ ३ १ ३ १ २ २
तेजिष्ठाअपोमंᳬहनापरिव्यत

१ २ ३ २ ३ १ २ ३ १ २ ३२
यदीदेवस्यश्रवसासदोविदुः ॥ २* ॥

* ऋ० वे० ७, १, १३, २ ।

"सः" "भक्ष्यमाणः" "चारुणः" कल्याणस्य "अमृतस्य" उदकस्य ["क्रियाग्रहणमिति कर्म्मणः सम्प्रदान-सञ्ज्ञा, "चतुर्थ्यर्थे बहुलम् (२, ३, ६२)"—इति षष्ठी] चारूदकं भक्ष्यमाणः [इकारलोपश्छान्दसः (३, ४, ९७)] भिक्ष्यमाणः यष्टृभिः याच्यमानः सन् "उभे" "द्यावा" [द्यावादेशस्य द्वन्द्वे विहितत्वात् उत्तरपदाभावेऽपि द्वन्द्वः प्रतीयते] उभे द्यावापृथिव्यौ "काव्येन" कवि-कर्म्मणा "वि शश्रथे"* वितृतकारातिशयेन निमित्तेन प्रक्ले-नोदकेन सम्पूरयतीत्यर्थः। किञ्च "तेजिष्ठाः" अतिशयेन दीप्तानि "अपः" उदकानि "मंहना" महत्त्वेन "परि व्यत" तदा परित आच्छादयति। "यदि" यदा ऋत्विजः "देवस्य" द्योतमानस्य सोमस्य "सदः" स्थानं "श्रवसा"† हविषा युक्ताः सन्तः "विदुः" यागार्थं जानन्ति लभन्ते तदा आवृणोतीति। [विद ज्ञाने (अदा० प०) "सिजभ्यस्त (३, ४, १०९)"—इति झेर्जुसादेशः॥

"भक्ष्यमाणः"-"भिक्ष्यमाणः"—इति पाठौ॥२॥

अथ तृतीया।

१ २ ३ १र २र ३ १
तेअस्यसन्तुकेतवोम्त्यवो

२ ३ १ २ ३ १र २र
दाभ्यासोजनुषीउभेअनु।

---

* 'विशश्रथे—विविधं शिथिलीकरोति'—इति वि०।

† 'श्रवसा—अन्नेन बलेन वा'—इति वि०।

१ २ ३ १ २ ३ २र ३ १
येभिर्नृम्णा च देव्या च पुनत

२र ३ १ २
आदिद्राजानं मनना अगृभ्णत ॥ ३* ॥ १७

"अस्य" एतादृशस्य सोमस्य "केतवः" प्रज्ञापकाः सर्वैर्ज्ञाप-नीया रश्मयः। कीदृशाः? "अमृत्यवः" मरण-धर्म्म-रहिताः अत एव "अदाभ्यासः" ["दृभेश्चेति वक्तव्यम् (७, ३, ६८ वा०)"— इति ण्यत्] परैरहिंस्यास्त्वेतादृशा अस्य रश्मयः "उभे" "जनुषी" जन्मनी स्थावर-जङ्गमात्मके द्वे "अनु" लक्षीकृत्य "सन्तु" रक्षन्तु [ओषधीनामग्रे सोमो रेतो निषिञ्चति यज्ञः मनुष्याणाञ्च धाराः स्रवति खलु] सोऽयं "येभिः" यैः केतुभिः "नृम्णा" नृम्णानि बलानि "देव्या" देवार्हाणि धनानि "पुनते" प्रेरयति। "आदित्" अभिषवानन्तरमेव† "राजानं" सोमं "मननाः" मननीयाः स्तुतयः "अगृभ्णत" परिगृह्णन्ति प्राप्नु-वन्तीत्यर्थः "हृग्रहोः"—इति छान्दसो भकारः ॥ ३ ॥१७

१ ५र ४ ५र ४ ५र २
॥ मारुतम् ॥ त्वा२ ३ ४यिः। अक्षैसप्तधेनवोदुद्रौ।

४ ५ १ १र २ २ र १
द्दोहायिरायि। सत्यामाशिरम्परमायि। वियोमानी२।

---

* ऋ० वे० ७, १, २३, ३।

† 'आत्'-'इत्'—इति पदपूरणौ—इति वि०।

Digitized by Google

१र र २ १ २ १
चत्वार्य्यन्याभुवना। निनिर्णीयिजा२३यि। चारूणा२३

५ १र १ १र ५ १ ५ १
४यिवा। क्रयहतेः। आवा३ह्वाँ५ताई५६॥(१) सा२३

५ र र ५ ५र ५ ५ १ र र र र
४ः। भक्षमाणोअमृतस्यचौ। चारूणाः। उभेद्यावाका

२ २ १ ३ र र २
व्येना। विश्वआया२यि। तेजिष्ठाअपोमᳫहना। परि

२ २ ५ २ १ १र १ २
ख्याता२३। यादोदा२३४यिवा। स्यश्रवसा। सादो३

५ १ ५ र ५ ५र र
वा५यिदूᳫ६५६ः॥(२) ते२३४। पत्यसन्तुकेतवोअमौ।

५ ५ १ र र र २र १ १र
होर्त्यावाः। अदाभ्यासोजनुषी। उभेयानू२। येभि

र र २ १ २ २ ५
नृम्णाचदेव्या। चपुनादा२३यि। यादिद्रा २ ३ ४जा।

२१ २र १ २ ५
नम्मनना:। आगा३र्म्णा५ताई५६(३) ॥ १२* ॥ [१] १७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

पञ्चमः खण्डः ॥ ५ ॥

---

* क० गा० ८प्र० १ख० १२सा० ।

अथ षष्ठे खण्डे—

अभिवायुमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ २ ३ १ ३क २र २ २
अभिवायुंवीत्यर्षागृणानो

२ ३ १र १र २ १ २
ऽ३ऽभिमित्रावरुणापूयमानः ।

३ १र २र ३ १ २ १ २
अभीनरन्धीजवनꣳरथेष्ठा

३ १ ३ १ २ ३ १ २
मभीन्द्रंवृषणंवज्रबाहुम् ॥ १* ॥

हे सोम ! "गृणानः" स्तूयमानस्त्वं "मित्रावरुणा" मित्रा-वरुणौ च पानाय "अभि" गच्छ । किञ्च "नरं" सर्वस्य नेतारं, "धीजवनं" बुद्ध्या समं वेगं कुर्वाणं,† "रथेष्ठां" रथे तिष्ठन्तम् [अनेनाश्विनावभिधीयते ; एकवचनन्तु प्रत्येक-विवक्षया समु-दाय-विवक्षया वा ; एतादृशावश्विनौ चाभिगच्छ]। तथा "वृषणं" कामानां वर्षकं "वज्रबाहुं" वज्र-युक्त-हस्तम् "इन्द्रं" च त्वं पानाय "अभि" गच्छ ॥ १ ॥

---

* ऋ० वे० ७, ४, २०, ४।

† 'धीजवनं—धीर्बुद्धिः तया जवनं वेगवन्तम् अथवा मनोजवैरश्वैः गन्तारम्' —इति वि० ।

Digitized by Google

अथ द्वितीया ।

३ १ १र ३ १ २ ३ ३ ३ २ ३ १ २ ३ १ २
अभिवस्त्रासुवसनान्यर्षाभिधेनूःसुदुघाःपूयमानः ।
३ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अभिचन्द्राभर्त्तवेनोहिरण्याभ्यश्वान्रथिनोदेवसोम ॥ २* ॥

हे "सोम !" अस्माकं "सुवसनानि" सुपरिधानानि "अभि" गमय [ यद्वा, सुवसनानि शोभन-वस्त्र-सहितानि "वस्त्रा" वस्त्राण्याच्छादकानि धनानि "अभि" गमय । किञ्च "पूयमानः" पवित्रेण त्वं "सुदुघाः" सुष्ठु पयसो दोग्ध्रीः "धेनूः" नवप्रसूतिका गाः "अभि" प्रापय । अपिच "चन्द्राणि" आह्लादकानि† "हिरण्यानि" "भर्त्तवे" भरणाय पोषणाय "नः" अस्माकम्‡ "अभि" गमय । तथा हे "देव" स्तोतव्य ! हे "सोम !" "रथिनः" रथवतः अश्वान् अस्माकम् "अभि" प्रापय ॥ २ ॥

अथ तृतीया ।

३ १ २ ३ १र २र ३ २उ ३ १ १ ३ १ २
अभीनोअर्षदिव्यावसून्यभिविश्वापार्थिवापूयमानः ।
३ २उ ३ १ २ ३ १ २ ३क २र ३ १ २ ३ १ २
अभियेनद्रविणमश्नवामाभ्यार्षेयञ्जमदग्निवन्नः ॥ ३¶ ॥१८

हे सोम ! पवित्रेण "पूयमानः" त्वं "दिव्या" दिव्यानि

---

* ऋ० वे० ७, ४, १०, ५ ।

† 'चन्द्राणि—काम्यानि'—इति वि० ।

‡ 'नः—अस्मभ्यम्'—इति वि० ।

¶ ऋ० वे० ७, ४, २१, १ ।

Digitized by Google

दिवि भवानि "वसूनि" धनानि "नः" अस्माकम् "अभ्यर्ष" अभिगमय तथा "पार्थिवा" पार्थिवानि पृथिव्यां भवानि "विश्वा" विश्वानि सर्वाणि धनान्यभिगमय। तथा "येन" त्वदीयेन सामर्थ्येन "द्रविणं" धनं "वयम्" "अश्नवाम" अभि व्याप्नुयाम तत् सामर्थ्यम् "अभि" गमय। किञ्च "आर्षेयम्" ऋषीणामृषिपुत्राणां योग्यं धनं "जमदग्निवत्" जमदग्नेर्यथा त्वं प्रापय एवं "नः" अस्माकमपि अभ्यर्ष [ यद्वा, आर्षेयम्, ऋषीणां योग्यं मन्त्रं जमदग्नेः स्वभूतं मन्त्रं यथा स्वादुतमम् अकार्षीः एवमस्माकं तादृशं मन्त्रं स्वादुतमं कुर्विति मन्त्र-द्रष्टा स्तोता कुत्सो नाम ऋषिः प्रार्थयते ] ॥ ३ ॥ १८

१ २ २ १र २
॥ पार्यम् ॥ ओ३हो३होयि। अभिवायुम्। वी३

१ १ २ ३ ४ ५ २ १ २ १ र २ ३ ४ ५
तिप। धागृणाना। अभिमित्रा। वरुणा। पूयमानाः।

२ र १ २ १ २ ३ ४ ५ २ १
अभीनराम्। धी३जव। न०रथेष्ठाम्। अभिइन्द्राम्।

२ १ २ २ ४
वृषणम्। वा ३ ४ ३। आ३वा५ ६ ५ ६ म् ॥(१)

२ १ २ १ २ ३ ४ ५ २ १र २ १
अभिवस्त्रा। सुवस। नानियर्षा। अभिधेनूः। सुदु

र २ ३ ४ ५ २ १ २ १ र २ ३ ४
घाः। पूयमानाः। अभिचन्द्रा। भर्त्तवम्। नोहिर

५ २ १ २ १ २ २ ४
ण्या। अभियश्वान्। रथिनः। दा३४३यि। वा३सो



Digitized by Google

२ ८ १८ २ १ २ ३४ ५
पूमा६पू६ ॥(२) अभीनोआ। षा३दिवि। यावद्धनी।

२ १ २ १ २ १ २ ३ ४ ५ २ १८
अभिविश्वा। पा३र्थिवा। पूयमानाः। अभियेना।

२ १ १ २ ३ ४ ५ २ २ १ १८
द्रविणम्। अश्ववामा। औ३हो३होयि। अभियर्षं।

२ १ २ २ ४
या ३ जमत्। षा ३ ४ ३। ग्रा ३ यिवा ५ न्ना ६ ५ ६ः

(३) ॥ १४* ॥ [१] १८

अथ† यज्जायथा इति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१२ १२ ३ १ २ ३ १ २
यज्जायथा अपूर्व्यमघवन्वृत्रहत्याय ।

१ २ ३ १ २ ३ १ २ ३ १२ ३२
तत्पृथिवीमप्रथयस्तदस्तभ्ना उतोदिवम् ॥ १‡ ॥

हे "अपूर्व्य"¶ त्वत्तो व्यतिरिक्तेन पूर्वेण वर्जित ! हे "मघवन्" मंहनीय-धनवन् ! "इन्द्र !" "वृत्रहत्याय" वृत्रहननाय§ "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोऽसि "तत्" तदानीमेव

* ऊ० गा० ८प्र० २अ० १४सा० ।

† 'उक्तोऽभिप्लवः । उक्तः पृष्ठ्यः । उक्तोऽभिजित् । इदानीं स्वरसामानः'—इति वि० ।

‡ ऋ० वे० ६, ६, १२, ५ ।

¶ 'अपूर्वगुण !'—इति वि० ।

§ 'वृत्रहन्ता इन्द्रोऽभिधीयते, तस्मै वृत्रहत्याय हविर्दद्म इति वाक्यशेषः'—इति वि० ।

Digitized by Google

"पृथिवीं" प्रथमानां भूमिम् "अप्रथयः" प्रथितां दृढ़ामकरोः। "उत" अपि च "तत्" तदानीमेव "दिवं" द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निश्चलामकार्षीः [एतादृशं वीर्यं त्वदन्यस्य न सम्भवतीत्यर्थं द्योतयति अपूर्व्वेति पदम्] ॥

"उतोद्दिवम्"-"उतद्याम्"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

१ २ ३ १ २ ३ २ ३ २ ३ १ ३ २ ३
तत्तेयज्ञोअजायततदर्कउतहस्कृतिः।
१२ १२ ३ १ १ २ ३ १ २ १ ३ ३ १ २
तद्विश्वमभिभूरसियज्जातंयच्चजन्त्वम्॥ २* ॥

हे इन्द्र! "यद्" यदा त्वम् अजायथाः तदानीं "ते" त्वदर्थं "यज्ञः" अग्निष्टोमादिः "अजायत" सोम-पानार्थमभूत्। "उत" अपिच "तद्" तदानीं "हस्कृतिः" [हस हसने (भ्वा०प०) हासकारी प्रीत्यर्थं क्रियमाणो हर्ष-सूचको द्वितीय-मन्त्रोऽपि अजायत। किञ्च तदा "यद्" "जातं" भूतजातं "यच्च" "जन्त्वम्" [कृत्यार्थे त्व-प्रत्ययः] जनितव्यं विश्वमस्ति, "तत्" "विश्वं" सर्व्वम् "अभिभूः असि" स्व-महिम्ना अभिभूतवानसि ॥ २ ॥

अथ तृतीया।

३ १ २ ३ १२ १२ ३ १२ १२ २ ३
आमासुपक्वमैरयआसूर्य्यं रोहयोदिवि।
३ १२ १२ ३ १ २ ३ २ ३ १ १ २ ३
घर्मंनसामन्तपतासुवृक्तिभिर्जुष्टंगिर्वणसेबृहत्॥३ †॥१९

* ऋ० वे० ६, ६, १२, ६। † ऋ० वे० ६, ६, १२, ७।

Digitized by Google

हे इन्द्र! "आमासु" अपक्वासु गोषु "पक्वं" पयः "ऐरयः" प्रेरय [ तथा च मन्त्रः—"आमासुचिद्दधिषे पक्वमन्तः" इति । किञ्च, "दिवि" द्युलोके "सूर्य्यम्" "आरोहयश्च" [ पूर्वं पणयो-नामासुरा अङ्गिरसां गा अपहृत्यान्धकारावृते कस्मिंचित् पर्वते स्थापितवन्तः, ततोऽङ्गिरसः इन्द्रं स्तुत्वा गाः पुनरस्मभ्य-माहरेति तैरुक्तम् इन्द्रो गवां स्थानं तमसावृतं दृष्ट्वा तत्र गो-प्रदर्शनाय द्युलोके सर्वप्रकाशकं सूर्य्यमारोहितवान् ] स्थापित वानसि [ "चादि-लोपे विभाषा ( ८, १, ६२ )"—इति पूर्वस्य ऐरयइत्यस्य न निघातः । अथ परोक्षतोऽर्द्धर्चः— ] हे स्तोतारः! "सुवृक्तिभिः" शोभनाभिः स्तुतिभिः "न तपत" इन्द्रं तीक्ष्णीकुरुत [ इन्द्रं स्तुतिभिः यथा तपन्ति तद्वत् ]। ततः "गिर्वणसे" गीर्भिर्वननीयायेन्द्राय "जुष्ट" प्रीतिकरं पर्याप्तं वा "बृहत्" महत् बृहदाख्यं वा "साम" गायत ॥३॥१९

अथ मत्स्यपायीति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१र २र ३ २ ३ १ २ ३ १र २र
मत्स्यपायितेमहःपात्रस्येवहरिवोमत्सरोमदः ।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृषातेवृष्णइन्दुर्वाजीसहस्रसातमः ॥ १* ॥

हे "हरिवः" हरिभ्यां तद्वन्निन्द्र! "महः" महान् पूज्यो-ऽयं सोमः "पात्रस्येव" पात्रेणेव सोमपात्रेण यथा धार्य्यते सोमः,

* ऋ० वे० १, ४, १८, १।

तत्सदृशेन त्वया [ तृतीयार्थे षष्ठी ( २, १, ८५ )। यद्वा, 'पात्रस्य' 'ते' तव स्वभूतः 'महः' महान् सोमइति वा योजना ] "अपायि" पीतः [ आशंसाया विवक्षितार्थत्वात् भूतेऽर्थे प्रयोगः ] यतः पिब अतो "मत्सि" माद्यसि मादयस्व वा। "मत्सरः" मद-साधनः, "मदः" तर्पयिता ; "वृषा" वर्षिता, "इन्दुः" क्लेदयिता आह्लाद-कारीत्यर्थः, "वाजी" अन्नवान् अन्नकार्य्य-तृप्ति-सद्भावात् अन्नवानित्युच्यते, "सहस्रसातमः" अपरिमित-दातृतमः सहस्र-पुरुष-सम्भजन-पर्य्यन्त-शक्त्यतिशयो वा एवं महानुभावः सोमः सम्पादितस्तं पिबेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ २ २उ २ २ २ १ २
आनस्तेगन्तुमत्सरोवृषामदोवरेण्यः।

२ १ १ २ १ २ २ १र २र
सहावाँ२इन्द्रसानसिःपृतनाषाडमर्त्त्यः॥ २* ॥

हे इन्द्र! "ते" त्वां "मत्सरः" मर्षण-साधनः सोमः "आगन्तु" आगच्छन्तु। कीदृशोऽयम्? "वृषा" वर्षकः "मदः" तर्पयिता, "वरेण्यः" वरणीयः, "सहावान्" सहायवान् अस्मद्दत्तेन सोमेन सहायवान् सन् "सानसिः" अस्माभिः सम्भजनीयः, "पृतनाषाट्" शत्रुसेनाया अभिभविता अमर्त्त्यश्च भवेति ॥ २ ॥

---

* ऋ॰ वे॰ २, ४, १८, १।

Digitized by Google

अथ तृतीया ।

१उ ३ १ २ ३ २ ३ १ १ २ ३ १ २
त्वꣳ ह्यिशूरःसनिताचोदयोमनुषोरथम् ।
३ २ ३ १ २ ३ १उ ३ २ ३ २ ३ १ २
सहावान्दस्युमव्रतमोषःपात्रन्नशोचिषा ॥ ३* ॥ २०

हे इन्द्र! "त्वं" "हि" खलु "शूरः" शौर्य्योपेतः "सनिता" दातासि। अतः "मनुषः" मनुष्यस्य मे "रथं" रंहणं स्यन्दनं मनोरथं वा स्वर्ग-गमन-साधनं यज्ञार्थं रथं वा "चोदयः" प्रेरय। किञ्च त्वं "सहावान्" भूत्वा "दस्युम्" उपक्षयितारम् "अव्रतम्" अकर्म्माणम् अननुष्ठायिनम् "ओषः" † दह। किमिव? "शोचिषा" दीप्त्या ज्वालया अग्निः "पात्रन्" स्वाधारं पात्र-विशेषमिव यागाधिकारी सन् यो न यजते, तं देहीत्यर्थः ॥ ३ ॥ २०

५ २ ४ ५ ४र ५ १र १ १र १
॥ कालेयम् ॥ मत्स्यिया३पायितेमद्धाः । पात्राख्येवा ।
२ ३ २र १ १ २र २ १ र र र
हरिवोमा२३ । त्सरोमदा३ः । वा२३४ । षातेवृष्णे ।
२ २ १र ३ १ २ ५ ४
आ३यिन्दूः । वाजायिसही । वा३४३ओ३४वा । स्वसा
५र २ ४ ५ ४ ५ २ १ २ १ २ १
पूतमाः ॥(१) आनस्ते३गन्तुमत्सराः । वृषामदो । वरे

* ऋ० वे० १, ४, १८, ३ ।

† 'ओषः पात्र' न—दीप्तेः पात्र' न'—इति वि० ।

२ १ २ १ ५ऽ २ २
यिया२३ः । सद्दा३ । वा२३४ । इन्द्रसा । ना३सा

१ ३र २ २ ५ ४
यिः । पूतनाषौ । वा३४३ओ२३४वा । अमा५र्त्तियाः ॥(२)

५ २ ४र५ ४ ५ २र १ २र १ २ ३र २ १
तुव ह्यो३शूरःसनिता । चोदायोमा । नुषोरथा२३म् ।

२ १ ५ २ २ १र
सद्दा३ । वा२३४न् । दस्युम । ग्रा३ताम् । ओषाः ।

३र २र २ ५ ४ ४
पात्रौ । वा३४३ओ२३४वा । नशो५चिषा । द्दो५ई ।

डा(३) ॥ १६* ॥ [१] २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य द्वादशस्याध्यायस्य

षष्ठ खण्डः ॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १२ ॥

## ॥ इति षष्ठस्य द्वितीयोऽर्द्धप्रपाठकः ॥ †

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
उत्तराग्रन्थे द्वादशोऽध्यायः ॥ १२ ॥

---

* ऊ० गा० २१प्र० १ख० १६सा० ।

† 'षष्ठस्य प्रपाठकस्य द्वितीयोऽध्यायः समाप्तः'—इति वि० ।

Digitized by Google

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत्।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १२ ॥

## ॥ अथ त्रयोदशोऽध्याय आरभ्यते ॥

तत्र,

प्रथमे खण्डे—

पवस्ववृष्टिमिति पञ्चर्चं प्रथमं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १उ २ ३ २ ३ १ ३ १र २र
पवस्ववृष्टिमासुनोपामूर्म्मिन्दिवस्परि।
२ १ २ ३ १र २र
अयक्ष्मावृहतीरिषः ॥ १* ॥

हे सोम! त्वं "दिवः" द्युलोकात् "वृष्टिं" वर्षं "नः" अस्माकं "सु" सुष्ठु "आ पवस्व" समन्तात् चरण†। एतदेव दर्शयति—"अपाम्" उदकानाम् "ऊर्म्मिं" तरङ्गं दिवः "परि" आपवस्व। अपिच "अयक्ष्माः" यक्ष्म-रहितानि अनामयानि "वृहतीः" महान्ति "इषः" अन्नानि आपवस्व ॥ १ ॥

---

* ऋ॰ वे॰ ७, १, ६, १।

† विवरण-मते तु 'धारा'—इत्येकं पदम् अतएव 'धारा सोमधाराः'—इति व्याख्यातम्।

Digitized by Google

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ २
तयापवस्वधारयाययागावइहागमन् ।

१ २ ३ १ २ ३ २
जन्यासउपनोगृहम् ॥ २* ॥

हे सोम ! त्वं "तया" तादृश्या "धारया" "पवस्व" क्षर । कीदृश्येत्यत आह—"यया" यादृश्या त्वदीयया धारया "जन्यासः" अन्याः अनु-जनपद-भवाः† "गावः" "इह" अस्मिंल्लोके "नः" अस्माकं सम्बन्धि "गृहम्" "उप आ गमन्" उपागच्छन्ति ॥ २ ॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतम्पवस्वधारयायज्ञेषुदेववीतमः ।

३ १ २ ३ १ २ ३ १ २
अस्मभ्यंवृष्टिमापव ॥ ३‡ ॥

हे सोम ! "यज्ञेषु" "देववीतमः" अतिशयेन देवकामः त्वम् "अस्मभ्यं" स्तोतृभ्यः "घृतम्" उदकं "धारया" "पवस्व" क्षर; "वृष्टिं" वर्षञ्च "आ पव" ॥ ३ ॥

---

* ऋ० वे० ७, १, ६, २ ।

† 'जन्यासः—जनपदभिन्नाः'—इति वि० ।

‡ ऋ० वे० ७, १, ६, ३ ।



Digitized by Google

अथ चतुर्थी।

१ २ १ २   १ २ ३ १ १   ३ १ २
सनऊर्जेव्या३३व्यय*म्पविचन्धावधारया।
३ १ २ ३ २ ३ १ २
देवासःश्रृणवन्हिकम्॥ ४† ॥

हे सोम! "सुतः" अभिषुतस्त्वं "नः" अस्माकम् "ऊर्जे" अन्नाय "अव्ययम्" अविमयं‡"पवित्र" धारया सम्प्राप्ति "वि धाव" प्राप्नुहि "देवासः" देवा अपि¶ "हिकं शृणवन्" गमन-वेलाया-मुत्पन्नं त्वदीयं शब्दं शृणवन्तु॥ ४ ॥

अथ पञ्चमी।

१ २   ३ १ २   ३ १ २
पवमानोअसिष्यदद्रक्षाᳬंस्यपजङ्घनत्।
२   १ २ ३ १ २ १ २
प्रत्नवद्रोचयन्रुचः॥ ५ § ॥ १

"रक्षांसि" राक्षसाः "अप जङ्घनत्" "रुचः" आत्मीया दीप्तीः "प्रत्नवत्" पुरातनवत्"रोचयन्" दीपयन्"पवमानः" सोमः "असिष्यदत्" स्यन्दते॥ ५ ॥ १

---

* "अव्ययं"—इति ऋ०-पाठः।

† ऋ० वे० ७, १, ६, ४।

‡ 'अथवा वि व्यतिरित्यात् अव्ययं पवित्रं धाव'—इति वि०।

¶ 'देवासः श्रृणवन् हि कम्—एतच्छृणवन् हे देवाः! कं प्रजापतिरूपं सोमम् अथवा कं पानीयं सोमं'—इति वि०।

§ ऋ० वे० ७, १, ६, ५।

Digitized by Google

अथ प्रत्यस्मा इति चतुर्ऋचं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३१ २ ३ १ २ ३ १२
प्रत्यस्मैपिपीषतेविश्वानिविदुषेभर ।

३ १ २ ३ २ १२ ३१२
अरङ्गमायजग्मयेपश्चाद्दघ्वनेनरः ॥ १* ॥

हे अध्वर्यो ! "नरः" नेता यज्ञानां त्वम् "अस्मै" इन्द्राय "प्रति भर" अभिभर सोमं प्रयच्छेत्यर्थः । कीदृशायेन्द्राय? "पिपीषते" पातुमिच्छते "विश्वानि" सर्वाणि वेद्यानि "विदुषे" जानते "अरङ्गमाय" पर्य्याप्त-गमनाय "जग्मये" यज्ञेषु गमन-शीलाय "अपश्चाद्दघ्वने" [ दध्विर्गतिकर्म्मा निघ०२,१४,६२ ) ] अपश्चाद्गमनाय सर्वेषामग्रगामिने ॥

"नरः"-"नरे"—इति पाठौ ॥ १ ॥

अथ द्वितीया ।

१ २ ३ १ २ ३ १ २ ३ १२
एमेनम्प्रत्येतनसोमेभिःसोमपातमम् ।

१ २ ३ १ ३ १ २ ३ २ ३ १ २
अमत्रेभिर्ऋजीषिणमिन्द्रꣳसुतेभिरिन्दुभिः ॥ २† ॥

हे अध्वर्यवः ! "सोमेभिः" सोमैः करणभूतैः "सोमपातमं" अतिशयेन सोमस्य पातारम् "एनम्" इन्द्रम् "आ" अभिमुखं

* ऋ० आ० ४, २, २, १ (१भा० ७१९ पृ०) = ऋ० वे० ४, ७, १४, १ ।
† ऋ० वे० ४, ७, १४, २ ।

Digitized by Google

"प्रत्येत" प्रतिगच्छत ["ईम्"—इति निपातोऽनर्थकः]। कीदृश मिन्द्रम्? "अमत्रेभिः" अमत्रैः सोमपात्रैः ग्रह-चमसादिभिः "ऋजीषिणम्" ऋजीषं शत्रूणामुपार्जकं बलं, तद्वन्तं, [यद्वा, ऋजीषिणमित्युत्तरत्र सम्बन्धनीयं, 'सुतेभिः' अभिषुतैः 'इन्दुभिः' सोमैः, 'ऋजीषिणं' गतसारः सोमः ऋजीषः तद्वन्तम्। अथवा अमत्रैः अपरिमितैरभिषुतैः सोमैः ऋजीषिणम्। ऋजेर्गत्यर्था-द्दोणादि-साधन ऋजीष-शब्दः, ततो मत्वर्थीयइति सङ्गतमित्यर्थः। एवंविधमिन्द्रं प्रति गच्छतेत्यन्वयः। अन्य आह—अमत्रेभिः ग्रहचमसादिभिः गतैः सोमैः ऋजीषिणं बलवन्तमिन्द्रं प्रति गच्छतेति] ॥ २ ॥

अथ तृतीया ।

१२ २ १ ३ ४ २ १ १ २ ३ १२
यदीसुतेभिरिन्दुभिःसोमेभिःप्रतिभूषथ ।
२ २ १ १ २ ३ १ २ १ २ ३ ३ १ र २ र
वेदाविश्वस्यमेधिरोधृषत्तन्तमिदेषते ॥ ३* ॥

हे अध्वर्यवः! "सुतेभिः" अभिषुतैः "इन्दुभिः" उन्दनशील दीप्तैर्वा "सोमेभिः" सोमैः "यदि प्रतिभूषथ" इन्द्रं प्रति यदि यूयं गच्छथ [भू प्राप्तौ (म्वा० उ०)—इत्यस्यैतद्रूपं] तदानीं "मेधिरः" मेधावी† [मेधो यज्ञः (निघ०३,१७,४) तद्वान् वा] स इन्द्रः "विश्वस्य" विश्वं सर्वं भवदीयं कामं "वेद" वेत्ति जानाति ज्ञात्वा च "धृषत्" शत्रूणां धर्षकः सन् "तमित्" तं तं काममेव "एषते" प्रापयति ॥ ३ ॥

---

* ऋ० वे० ४, ७, १४, ३ ।

† 'मेधिरः—मेधया मद्वाढ़ेः, धृषत् धारणार्थम्'—इति वि० ।

Digitized by Google

अथ चतुर्थी ।

२ १ २ ३ २उ ३ १ २ ३ १ १ २ २
अस्मा अस्मा इदन्धसोध्वर्यो प्रभरा सुतम् ।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
कुवित्समस्य जेन्यस्य शर्द्धतोभिशस्तेरवस्वरत्* ॥ ४† ॥ २

"अस्मा अस्मा इत्" अस्मा एवेन्द्राय नान्यस्मै, हे अध्वर्यो! त्वम् "अन्धसः" सोमलक्षणस्यान्नस्य "सुतम्" अभिषुतं रसं "प्र भर" प्रहर प्रयच्छेति यावत्। सचेन्द्रः "समस्य" सर्वस्य जेतव्यस्य "शर्द्धतः" उत्सहमानस्य शत्रोः "अभिशस्तेः" अभिशंसनात् तत्-कृतात् हिंसनात् "कुवित्"‡बहुशः "अवस्वरत्" अस्मान् पालयत्वित्यर्थः ॥

"अवस्वरत्"-"अवस्वरद्"—इति पाठौ ॥ ४ ॥ २

२ ४ ५र ४ ५र २ २ १
॥ नानदम् ॥ प्रत्यस्मैपिपी । षता३यि । वा२३४यि ।

र ५ र ४ ५ ४ ३र ४ ५ र ५
श्वानिविदुषे । भारा । अरङ्गमायज । ग्मयो२३४हायि ।

१ २ १ २ १ ५ ४ ५ ३र र२५
आपश्चादा । घ्वनो२३४वा । नापुरो६हायि ॥(१) एमन

४ ५र १ २ १ र ५ र र ४ ५
स्मत्ये । तना३ । सो२३४ । मेभिःसोमपा । तामाम् ।

---

* "अवस्वरत्"—इति ऋ०-पाठः ।

† ऋ० वे० ४, ७, १४, ४ ।

‡ 'कुवित्—कु-शब्देन प्रभिबमिधीयते, तस्मा वित्'—इति वि० ।

२ ४ ३र ४ ५ र २ ५ ४ र ३ ४ ५र
अमन्नेभिक्कृणी। षिणो२३४वायि। अमन्नेभिक्कृणी।
२ ५ १ २ १ २ १ ४
षिणो२३४वायि। आयिन्द्रᳲहुतायि। भिरो२३४वा।
४ ५ १ ४र ३र ४ ५ २ २ १
दू५भो६हायि॥(२) यदीसुतेभिरि। दुभा३यिः। सो
र ५ र ४ ५ ३र ४र२ ४ ५ र ३
२३४। मेभिःप्रतिभू। षाथा। वेदाविश्वस्यमोधिरो२
५ ४ र र १ ४ ५र २ ५ १ २ १
३४वायि। वेदाविश्वस्यमोधिरो२३४हायि। धार्षताᳲ
२ १ ५ ४ ५
ताम्। इदो२३४वा। षापूतो६हायि(३)॥ १ *॥ [१]

५ २ २ ४ र ५
॥ गौरीवितम्॥ प्रति। भस्मा३यि। पिपीषतायि।
१ र १ २ ४
विश्वानिविदुषेभरा२३। आरङ्गमा३१२३। यजा५ग्मया
१ र २ ४ ५ ४ ५
यि। आपश्चादा३१२३। ध्वनोवा। नापूरो६हायि॥(१)
५रर २ २ ४ र ५ १र र र र
एमे। नम्प्रा ३। तियेतना। सोमेभिःसोमपातमा २
१ र १ ४ १
३म्। आमत्रेभा३१२३यिः। ऋजा५यिषिणाम्। आयि
२ ४ २ ४ ५
द्रᳲसुना३१२३यि। भिरोवा। दू ५ भो ६ हायि॥(२)

---

* ऊ० गा० १०प्र० १च० १वा०।

५ र   ३ १   ४   ५   १र र   र
यदी। सुताश्यि। भिरिन्दुभायिः। सोमेभिःप्रतिभू

१ र   १   ४
षथा२३। वायिदाविश्वा ३ १ २ ३। स्वमा५यिधिराः।

१   २   ४   ५   ४   ५
धार्षत्तन्ता ३ १ २ ३ म्। इडोवा। षा ५ नो ६ हायि

(३) ॥ १२* ॥ [२] २

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य
प्रथमः खण्डः† ॥ १ ॥

---

अथ द्वितीय-खण्डे‡—

बभ्रवेन्विति षडृचं प्रथमं सूक्तम्,

तत्र प्रथमा।

३ १ ३ १र २र   ३ १ २   ३ १ २
बभ्रवेनुस्वतवसेरुणायदिविस्पृशे।
१ २   ३ १ २
सोमायगाथमर्चत ॥ १¶ ॥

---

* ऊ० गा० १प्र० १अ० ११गा०।

† 'उक्ताः स्वरसामानः'—इति वि०।

‡ 'इदानीं विषुवानभिधीयते'—इति वि०।

¶ ऋ० वे० ६, ७, ११, ४।

हे स्तोतारः! "बभ्रवे" बभ्रु-वर्णाय "स्वतवसे" स्व-बलाय* "अरुणाय" कदाचिदरुणवर्णाय "दिविस्पृशे" दिवं स्पृशते सोमाय "गाथं" स्तुतिरूपां वाचम्† "अर्चत" उच्चारयतेत्यर्थः ॥ १ ॥

अथ द्वितीया।

१ २ २ १ २ २ १र २र

हस्तच्युतेभिरद्रिभिःसुतꣳसोमम्पुनीतन।

२ ३ १ २ २ १ २

मधावाधावतामधु ॥ २ ‡ ॥

हे ऋत्विजः! "हस्तच्युतेभिः" हस्त-प्रच्युतैः "अद्रिभिः" अभिषव-ग्रावभिः "सुतम्" अभिषुतं "सोमं" "पुनीतन" पवित्रे पावयत। अपिच "मधौ" मदकरे सोमे¶ "मधु" गव्यं पयः "आधावत" प्रक्षिपत ॥ २ ॥

अथ तृतीया।

२ ३ १र २र ३ २ ३ १ २

नमसेदुपसीदतदध्नेदभिश्रीणीतन।

२ ३ १ २

इन्दुमिन्द्रेदधातन ॥ ३ § ॥

---

* 'स्व इति पादपूरणे'—इति वि०।

† 'गाथं—मन्त्रक्रमात् गद्यसामलक्षणम्'—इति वि०।

‡ ऋ० वे० ६, ७, ३६, ५।

¶ 'मधौ—मधुश्चुते द्रोणकलशे'—इति वि०।

§ ऋ० वे० ६, ७, ३७, १।

Digitized by Google

हे ऋत्विजः! "नमसेत्" नमस्कारेणैव* "उप सीदत" सोम-मुपगच्छत "दध्नेत्" दध्नैव† "अभि श्रीणीतन" सोममभि श्रीणीत च। "इन्द्रे" "इन्दुं" सोमं "दधातन"‡ धत्त च ॥ ३ ॥

अथ चतुर्थी।

२ १र २र ३ १ २ ३ १ १र
अमित्रहा विचर्षणिः पवस्व सोम शं गवे।

३ १ २ ३ १
देवेभ्यो अनुकामकृत् ॥ ४¶ ॥

"अमित्रहा" "विचर्षणिः" विद्रष्टा "देवेभ्यः" "अनुकाम-कृत्" अभीष्ट-कर्त्ता§ त्वं "गवे" अस्माकं पशवे "शं" सुखं "पवस्व" क्षर ॥ ४ ॥

अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
इन्द्राय सोम पातवे मदाय परि षिच्यसे।

२ १र २र ३ १
मनश्चिन्मनसस्पतिः ॥ ५‖ ॥

"इन्द्राय" "सोमपातवे" "मदाय" "परिषिच्यसे" परितः पात्रेषु सिच्यसे ॥ ५ ॥

* 'इच्छब्दः पादपूरणः'—इति वि०।

† 'इत् शब्दः एवेत्यर्थे'—इति वि०।

‡ "श्रीणीतन", "दधातन"—इत्यत्र "तप्तनप्तनथनाश्च (७, १,४५)"—इति तनप्।

¶ ऋ० वे० ६, ७, २७, २।

§ 'अनुकामकृत्—ये देवानां कामाः, तेषां कर्त्ता सोमः'—इति वि०।

‖ ऋ० वे० ६, ७, ३०, २।



Digitized by Google

अथ षष्ठी।

१ २   २ १ २   २ १   २
पवमानसुवीर्यꣳरयिꣳसोमरिरीहिणः* ।

२ ३ १ २   ३ २
इन्दविन्द्रेणनोयुजा ॥ ६† ॥ ३

हे "इन्दो" क्रियमाण "पवमान" सोम! त्वं "सुवीर्य्यं" शोभन-वीर्य्योपेतं "रयिं" धनं "नः" अस्माकं सम्बन्धिनम् "इन्द्रेण" "युजा" सहायेन "नः" अस्मभ्यं "रीरिहि" देहि ॥ ६ ॥ ३

अथोद्वेदभीति द्वृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

१ ३   ३ २ ३ १ २   ३ १र २र
उद्घेदभिश्रुतामघंवृषभन्नर्य्यापसम् ।

१ २
अस्तारमेषिसूर्य्य ॥ १‡ ॥

हे "सूर्य्य" [द्वादशसु भानुषु इन्द्रोऽपि सूर्य्यात्मना पठितः। तस्मात्] सूर्य्यात्मक! सुवीर्य्य! हे इन्द्र! "श्रुतमघं" सर्व्वदा देवत्वेन विख्यात-धनम्, अतएव "वृषभं" याचमानानां धनस्य वर्षितारं "नर्य्यापसं" नर-हितं नर्य्यं नर-हित-कर्म्माणम् "अस्तारम्" दान-

---

* "रीरिहिणः"—इति ऋ०-पाठः।

† ऋ० वे० ९, ७, १७, ४।

‡ ऋग्वेदीय-प्राठ-प्रतीकमिदम्।

¶ छ० आ० २, १, ४, १ (१भा० ३०७ पृ०) = ऋ० वे० ६, ६, २१, १।

Digitized by Google

गौरङ्गम् औदार्य्यवन्तमेतादृशं स्तोतारम् "अभि" लक्ष्य "उदेषि" [ इदवधारणे ] त्वमेव तस्य यज्ञे सूर्य्यात्मना उद्गातासि। "च" —इति प्रसिद्धौ ॥ १ ॥

अथ द्वितीया।

२ ३ १ २ ३ १र २र ३ १ २ ३क २र
नवयोनवतिम्पुरोबिभेदबाह्वोजसा।

१ २ ३ १ २
अहिञ्चवृत्रहावधीत्॥ २* ॥

"यः" इन्द्रः† "नवतिं" नवति-सङ्ख्याकाः ततः नव-सङ्ख्याकाः एकोनशत-सङ्ख्याकाः शम्बरस्य "पुरः" पुरीः "बाह्वोजसा" बाहु-बलेनैव "बिभेद" दिवोदासाय भिनत्ति स्म [ तथाच मन्त्रान्तरे—"दिवोदासाय नवतिञ्च नवेन्द्रः पुरोव्यैरच्छम्बरस्य" —इति ]। स च "वृत्रहा" वृत्रासुरस्य हन्ता। स इन्द्रः "अहिं च" केनाप्यहन्तव्यं मेघमपामावरकं वृत्रासुरं वा अवधीत्। स इन्द्रोऽस्माकं धनं ददात्वित्युत्तरेण सम्बन्धः ॥ २ ॥

अथ तृतीया।

२ ३ १ २ ३ १र २र ३ २ ३ १ २
सनइन्द्रःशिवःसखाश्वावद्गोमद्यवमत्।

३ १ २
उरुधारेवदोहते ॥ ३‡ ॥ ४

---

* ऋ० वे० ६, ६, २१ १।

† अत्र इन्द्र इति सुर्य्योऽभिधीयते तथाच नारदाम्—"दिवाकीर्त्त्यनामा भवति सर्भानुर्वा"—इत्यादि।

‡ ऋ० वे० ६, ६, २१, २।

Digitized by Google

"सः" पूर्वोक्त-गुण-विशिष्टः "शिवः" कल्याणतमः "सखा" यष्टृयष्टव्य-स्तोतृस्तोतव्य-लक्षणेन सम्बन्धेन "नः" अस्माकं मित्रभूतः एतादृश इन्द्रः "अश्ववत्" अश्वयुक्तं "गोमत्" पश्वादि-सहितं "यवमत्" ["अयवादिभ्यः"—इति प्रतिषेधात् मतुपो वत्वाभावः। यव इति धान्य-विशेषः] धान्ययुक्तं* धनं "नः" अस्मभ्यं "दोहते" दोग्धुं ददातु। तत्र दृष्टान्तः—"उरुधारेव" दोहन-काले प्रभूत-पयोधारा यद्वा बह्वीनां पोषयित्री गौः यथा वत्सस्य पयो दोग्धि तथा प्रभूत-धनम् अस्माकं दोग्धुं ददातु [दुहेर्लेटाडागमः (३, ४, ९४)॥ ३ ॥ ४

१र र २ ४ २
॥ स्वारसौपर्णम्॥ उद्वेदभिश्रुतामा३घाम्। वृषभ
४ ५र १ २ ५ १ २ २ र१
नर्या। ऊम्। पा२३४साम्। आस्ता३उवा। रामा
२ १ ५ ४ ५ २ र
यि। पिह्व२३४वा। रा५योई्हायि॥(१) नवयोनवति
२ ४३र४५र र १ ३ १ १ २
म्पू३राः। बिभेदबाऊवो। ऊम्। जा२३४सा। आहा
२ १ २१ ५ ४ ५
३उवा। चवृ। त्रघो२३४वा। वा५धो६हायि॥(२)
२ २ २४र २र४५र १ २
सनइन्द्रःशिवःसा३खा। अश्वावद्गोमद्या। ऊम्। वा२३

* 'यवमत्—यवग्रहणमुपलक्षणार्थम्, धान्य संयुक्तम्'—इति वि०।

५ १२ २ २१२ २१ ५ ४
४मात्। चरा७उवा। धारे। वदो२३४वा। त्वा५तो
५
ईङायि(३)॥ १६* ॥ [१] ४

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य
द्वितीयः खण्डः॥ २ ॥

---

अथ तृतीय-खण्डे —

विभ्राड़िति तृचात्मकं प्रथमं सूक्तम्,†

तत्र प्रथमा।

३ २ ३१ २ ३ २उ
विभ्राड्बृहत्पिबतु सोम्यम्
३१२ ३ १२३१२
मध्वायुर्दधद्यज्ञपताववि‍ह्रुतम्।
१ २ ३१ २३१२३ १ २
वातजूतोयो अभिरक्षतित्मना
३१ २ ३१र २र
प्रजाःपिपर्त्तिबहुधाविराजति॥ १‡ ॥

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः सूर्य्यः "बृहत्" परिवृढं "सोम्यं" सोममयं "मधु" "पिबतु"। किं कुर्वन्? "यज्ञ-

---

* ऊ० गा० १४प्र० १ख० १६गा०।

† 'मयादित्याकीर्ण्णम् पृष्ठम्'—इति वि०।

‡ उ० आ० प० ३३० ऋ० वे० ८, ८, २८, १।

पतौ" यजमाने "अविह्रुतम्" अकुटिलम् "आयुः" "दधत्" कुर्वन् "यः" सूर्य्यः "वातजूतः" वातेन महावायुना प्रेर्य्यमाणः सन् "त्मना" आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिपश्यन् पालयन्ति [ रश्मि-चक्रस्य वायु-प्रेर्य्यत्वात् सूर्य्यस्यापि तत्प्रेर्य्यत्वम् ]। स सूर्य्यः "प्रजाः" "पिपर्त्ति" वृष्ट्यादि-प्रदानेन पालयति "बहुधा वि राजति" विशेषेण दीप्यते च ॥

"पिपर्त्तिबहुधा"-"पुपोषपुरुधा"—इति पाठौ ॥ १ ॥

अथ द्वितीया।

२ १ १ १र १र १ १ २ १
विभ्राड्बृहत्सुभृतंवाजसातमं
१ २ ३ १ २ ३ १ २ ३ १र १र
धर्मन्दिवोधरुणेसत्यमर्पितम्।
२ १ २ ३ १ १ ३ १ २ १
अमित्रहावृत्रहादस्युहन्तम
१ २ ३ १ २ ३ १ २ ३ १
ज्योतिर्ज्जज्ञे असुरहासपत्नहा ॥ २* ॥

"विभ्राट्" विभ्राजमानं, "बृहत्" प्रौढं, "सुभृतं" सुपुष्टं, "वाजसातमं" वाजस्यान्नस्य बलस्य वा दातृतमं, "धर्मन्" धर्म्मणि वायुना धारयितव्ये "दिवः" द्युलोकस्य "धरुणे" धारके सूर्य्य-मण्डले "अर्पितं" निक्षिप्तं, "सत्यम्" अनश्वरम् "अमित्रहा" अमित्राणामप्रियाणां हन्तृ, "वृत्रहा" आवृण्वतां हन्तृ,† "दस्यु-

* ऋ० वे० ८, ८, १८, २।

† 'वृत्रहा—शत्रुहा, मेघस्य हन्तृ'—इति वि०।

हन्तमं" दस्यूनामुपक्षपयितॄणां हन्तृतमम्, "असुरहा" असुराणां येमृणां घातकं "सपत्नहा" सपत्नानां शत्रूणामपि घातकम्, ईदृग्भूतं "ज्योतिः" सौरं तेजः "जज्ञे" प्रादुर्भवति॥ २ ॥

अथ तृतीया।

१ २उ   २ १   २ २ १   २ ३ १
इदꣳश्रेष्ठञ्ज्योतिषाञ्ज्योतिरुत्तमं
२ ३ १२१ १२   ३२
विश्वजिद्धनजिदुच्यतेबृहत्।
३ २ १ २उ ३१२ ३१
विश्वभ्राड्भ्राजोमहिसूर्य्योदृश
३१२ ३१२२ ३ १२
उरुपप्रथेसहओजोअच्युतम्॥ ३ *॥ ५

"इदं" सौरं तेजः "श्रेष्ठं" प्रशस्यतमं "ज्योतिषाम्" अन्येषां ग्रहनक्षत्रादीनामपि "ज्योतिः" प्रकाशकम् अतएव "उत्तमम्" उत्कृष्टं "विश्वजित्" विश्वस्य सर्वस्य जेतृ "धनजित्" धनस्य जेतृ "बृहत्" प्रभूतमुच्यते एवंगुणविशिष्टमिति सर्वैरभिधीयते अपिच "विश्वभ्राट्" विश्वस्य प्रकाशयिता "भ्राजः" भ्राजमानः "महि" महान् "सूर्य्यः" "दृशे" दर्शनाय "उरु" विस्तीर्णं "सहः" तमसोऽभिभवितृ "अच्युतं" च्युति-रहितम् अविनाशम् "ओजः" तेजोरूपं बलं "पप्रथे" विस्तारयति॥ ३ ॥ ५

---

* ऋ० व० ८, ८, २८, १।

Digitized by Google

अथ इन्द्रक्रतुमिति प्रगाथात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा।

२ ३ १ २ ३ १ २ ३ २ ३ २ २ १ २
इन्द्रक्रतुन्नआभरपितापुत्रेभ्योयथा।
१ २ ३ १ २ ३ १ २
शिक्षाणोअस्मिन्पुरुहूतयामनि
३ १र २र
जीवाज्योतिरशीमहि॥ १ *॥

हे "इन्द्र!" "नः" अस्मभ्यं "क्रतुं" कर्म्म प्रज्ञानं वा "आ भर" आहर। अपिच "यथा" "पिता" "पुत्रेभ्यः" प्रयच्छति तथा "नः" अस्मभ्यं "शिक्ष" धनं देहि। हे "पुरुहूत" बहुभिराहूत! "यामनि" यज्ञे "जीवाः" वयं "ज्योतिः" सूर्य्यम् "अशीमहि" प्रतिदिनं प्राप्नुयामः॥ १॥

अथ द्वितीया।

२ ३ १ २ ३ १ २ ३ २ १ २ ३ १ २
मानोअज्ञातावृजनादुराध्यो३माशिवासोवक्रमुः।
१ २ ३ २ ३ २ ३ १ २ ३ १ २
त्वयावयम्प्रवतःशश्वतीरपोतिशूरतरामसि॥ २‡॥ ६

हे इन्द्र! "अज्ञाताः" अज्ञात-गमनाः "वृजनाः" हिंसकाः "दुराध्यः" दुष्टाभिसन्धयः "नः" अस्मान् "मा अव क्रमुः" माव

---

* ऋ० आ० ३, २, २, ७ (१भा० ५२५ पृ०) = ऋ० वे० ५, २, २१, ६।

† ऋ० वे० ५, ३, २१ ७।

‡ 'वृजनाः—वक्र-कर्मणः'—इति वि०।

चक्रमुः । हे "शूर!" "त्वया" "वयं" स्तोतारः "प्रवतः" प्रवणकाः सन्तः "अश्वतीः" बह्वीः "अपः" "अति तरामसि" अतितरामः ॥ २ ॥ ६

१ २१ १र १२
॥ मधाविष्टम्भम् ॥ इन्द्रक्रतोहायि । नआभरौवा ।
र २ र १२ १ २ २ २
पायितापुत्रे । भियोया१था२३ । हौवा३हायि । शिक्षा
र २र १ २र १ २ २ १ २
णोअस्मिन्पुरुहू । तयामा१नी२३ । हौवा३हायि ।
१र २ १ २ २ १र
जीवाज्योऽ१ता२३यिः । हौवा ३ हायि । अग्नी । मा २
३ ५र र १र र २र१ १र १
हा२३४औहोवा ॥(१) जीवाज्योतोहायि । अग्नीमहो
२ १ र२र २ २ १ २
वा । जायिवाज्योतिः । अग्नायिमा१हा२३यि । हौवा
२ १र२र १ १ २र १ २र १ २
३हायि । मानोअज्ञातावृजनाः । दुराधा १ या २ ३ः ।
१ २ २ १र २ १ २ २
हौवा३हायि । माश्रायिवा१सा२३ः । हौवा ३ हायि ।
१ ३ ५र र ११ २र १
अव । क्रा२मू२३४औहोवा ॥(२) माशिवासोहायि ।
२ १ २ १ १र १ २ १ २
अवक्रमोवा । माशिवासः । अवाक्रा१मू२३ः । हौवा

२ १र२१ ११२१ २१ २ १
इहायि। त्वयावयम्प्रवतःश्च। श्वतायिरा१पा२३ः। हो
२ २ १ २ १ २ २ १र
वा३हायि। चतायिघ्नू१रा२३। होवा३हायि। तरा।
२ ५र र ३ ५
मा२सा२३४औहोवा। दी२३४या:(३) ॥ १७ * ॥ [१]

४ ३ ४ ५ र २२ ३र ४र ५
॥ ऋतम् ॥ इन्द्रक्रतुन्नआ। भरा ३ ४ औहोवा।
१ र२र १ ७ ५ ५ १ र १र
पायितापुत्रे। भियोयथा२३४। ओ६हा। श्रिस्वाणो
१ २ १ ३ ५ १र र
अस्मिन्। पूरू२३ह्व। तया२। मा२३४नी। जीवा
र २ २ १ ३ ५र र
ज्योतायिरा३श्या। ऊम्मायि। मा२हा२३४औहोवा ॥(१)
४र २र २ ४ ५ र २ २ ३र ४र ५ १ र २र
जीवाज्योतिरश्यी। महा२३४औहोवा। जायिवाज्योतिः।
१ ७ ५ ५ १र र १ र २र १
अश्यायिमहा२३४यि। ओ६हा। मानोअज्ञाताः। वा
२ १ ३ ४ १र र २
र्जा२३नाः। दुरा२। धा२३४याः। माश्रिवासोआ३
२ १ ३ ५र र ३र ४ र
वा। ऊम्मायि। क्रा२मू२३४औहोवा ॥(२) माश्रिवा
३र ४ ५ २ २ ३र ४र ५ १ २र १ ७
सोअवक्रिमू३४औहोवा। माश्रिवासः। अवाक्रमू२३

* ऊ० गा० ६प्र० १अ० १७गा०।

५ ५ १ र ११ २ १ २ १
४ः । ओ६हा । त्वयावयम्प्र । वाता२३ःआ । स्वनार

३ ५ १ र २ २ १
यिः । आर ३ ४पाः । अतिघ्नूराता३रा । ऊम्मायि ।

२ ५र र ३ ५
मा२सा२३४औहोवा । वा२३४ह्व(३) ॥ १८ * ॥ [२]

१ ५ ५र ४ ५
॥ नौधसम् ॥ आ२३४यि । इन्द्रक्रतुन्नआ । भारा ।

२ १र २ १ २ २ १ २ १र २
पितापुत्रे । भौ३ये।या३था । आ२३यिना । पो अस्मिन् ।

१ २ १ २ ३ ५ १ २ १ २
पुरु । हू । तायामा२३४नौ । जा२३यिवाः । ज्योतिर

१ ५ ३ ५ १ र र ५ र
औ२३४वामा२३४हो ॥(१) जा२३४यि । वाज्योतिरशी ।

४ ५ २र १र र २ १ २ २
माहायि । जौवाज्योतायिः । आ७आयिमा३हायि ।

१ २ १ र २र १२ १ २ ३
मा२३नो । आज्ञाताः । वृज । नाः । दूराधा२३४

५ १ २ १ र २१ ५ ३ ५
याः । मा२३आयि । वासोअवे२३४वा । क्का२३४मू ॥(२)

५ ५र ४र ५ ४ ५ २र १ र २
मा२३४ । शिवासोअव । क्कामूः । माशिवासो । आ३

१ २ २ १ २ १ २ ११ १ २
वाक्का३मः । त्वा२३या । वायम्प्र । वतः । आ । स्वाता

* ऋ० मा० ८म० १ख० १९सा० ।

२ ५ १ २ १ ११ ५ ३ १
यिरा२३४प्राः। आ२३तायि। प्रूरमरो२३४वा। मा२३

५
४वौ(३)॥ १ * ॥ [३]

५ ५ २ २ १र ४र ५ १
॥ पौरुमीढम्॥ इन्द्रक्र। तु ना३४ औहोवा। आ

२ १ र २ र १र २ १र
भरे। पितापुत्रे। भियोया२३था। शिक्षाणोआ। शि

२ १र र र २ १र
न्युरु२३ह। तयामनायि। जीवाज्यो२३तीः। अग्री

५र ४र ५र र २ ३र ४र
मा२३४५ चाई५६यि ॥(१) जीवाज्यो। तिरा३४औहो

५ १ र १र र २ १र २
वा। शायिमहि। जीवाज्योतिः। अग्नीमा२३चायि।

र १र २ २ १र र
मानोअघा। तावृजा२३नाः। दराधिया। मामिवा२

२ १ ५र ४ ५र ३र २
३साः। अवक्रा२३४५मू६५६ः ॥(२) मामिवा। सोआ

३र ४र ५ १ २ १र १र १ २
३४औहोवा। वाक्रमुः। माशिवासः। अवक्रा२३मूः।

१र २ १र
त्वयावयाम्। प्रवता२३ःशाः। स्वतीरपाः। पतिप्रू२३

२ २ र १ २ १ १ १ १ १
रा। तरामा२ ३ ४ ५सा ६ ५ ६ यि। दचा३या२ ३ ४ ५

(३) ॥ १८ † ॥ [४]

---

* ऊ० गा० ८प्र० २ष० १सा०। † ऊ० गा० ८प्र० २ष० १८सा०।

Digitized by Google

२ १ २ ५ २
॥ मानवाद्यम्॥ इन्द्रक्रतूम्। नआभार२३४रा। न
१ ५ १ र १र १ २
आभार२३४रा। पायितापुत्रे। भियोया१या२। भि।
१र र २ १ ७ २ १ २ ५ १र
क्षा। घोम। क्षायिन्पुरुह३। तया२मा२३४नी। जी
२र र १ १ २ ५र र २ ५
वाज्योता२३यि:। आ२ग्रा२३४औहोवा। मा२३४ही॥(१)
२र र र र २ ५ २ २
जावाज्योतायि:। अशीमा२३४हायि। अशायिमा२३४
५ १ र २र १ २ र
हायि। जायिवाज्याति:। अशायिमा१हा२यि। मा।
१ २र १ ७ २ १ २ ५ १र
नः। अज्ञा। तावृजना३:। दुरा२धा२३४या:। मा
२ र १ १ २ ५ र २ ५
शिवासा२३:। आ२वा२३४औहोवा। क्रा२३४मू:॥(२)
२र र २ ५ २ २ ५ १
माशिवासा:। अवक्रा२३४मू:। अवाक्रा२३४मू:। मा
२र १ २ १र २ १ ७
शिवास:। अवाक्रा१मू२:। त्व। या। वयम्। प्रावत:
२ १ २ ५ १ १२ १ १ २
शा३। श्वता२यिरा२३४पा:। अतिशूरा२३। ता२रा
५र र २ ५
२३४औहोवा। मा२३४सो(३)॥ १ * ॥ ५

* ज० गा० १९प्र० २ ख० १ सा०।

॥ भारद्वाजम् ॥ इन्द्रक्रतूम्। नआभा१रा२। पा यितापुत्रेभ्योयथा। शिक्षाणो१आ२। स्मायिन्पुरुह्र। तयामा१नी२। जीवाज्यो१ता२३यिः। आ२आ२३४औ होवा। मा२३४शी ॥(१) जीवाज्योतायिः। अशायि मा१हा२यि। जायिवाज्योतिरशीमहि। मानोआ१आ २। तावृजनाः। दुराधा१या२ः। माशायिवा१सा२३ः। आ२वा२३४औहोवा। क्रा२३४मूः ॥(२) माशिवासा। अवाक्रा१मू२। माशिवासोअवक्रमुः। त्वयावा१या२म्। प्रावतःश्र। अतायिरा१वा२ः। अतायिशू१रा२३। ता २रा२३४औहोवा। मा२३४सी(३) ॥ ५ * ॥ [६] ६

---

* ऊ० गा० १८प्र० २ख० ५गा० ।

अथाद्याद्येति प्रगाथात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

२ १ ३ २ ३२ ३१ २३१२
अद्याद्याश्वःश्वइन्द्रत्रास्वपरेचनः ।
१२ ३१२ ३१२ २३१२
विश्वाचनोजरितॄन्त्सत्पतेअहादिवानक्तञ्चरक्षिषः ॥१*॥

"अद्याद्य" यदद्य शब्द-वाच्यमहरस्ति, तत्र सर्वत्र, हे "इन्द्र!" "श्वः श्वः" श्वः-शब्द-वाच्यं च यत्, तत्र सर्वत्र,† त्वं "त्रास्व" अस्मान् रक्ष। तथा "परे च" "परस्मिन्" तृतीयेऽहनि च त्रास्व। हे "सत्पते" सतां पालकेन्द्र! "विश्वा च" सर्वाण्यपि "अहा" अहानि सर्वेष्वप्यहःसु "नः" अस्मान् "जरितॄन्" स्तोतॄन्" "रक्षिषः" रक्षसि। तथा "दिवा नक्तं च" रक्षिषः रक्षसि ॥ १ ॥

अथ द्वितीया ।

३ १२ ३१२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ २३ २ २
प्रभङ्गीशूरोमघवातुवीमघःसम्मिश्लोवीर्यायकम् ।
३ १ २ ३ १२ ३२ ३ १२ ३२ ३ १ २
उभातेबाहूवृषणाशतक्रतोनियावज्रम्मिमिक्षतुः ॥ २‡ ॥ ७

अयं "मघवा" धनवान्, इन्द्रः, "प्रभङ्गी" प्रभञ्जन-शीलः, "शूरः" विक्रान्तः, "तुवीमघः" प्रभूत-धनः "सम्मिश्लः" सम्यङ्

---

* ऋ० वे० ६, ४, ३८, २।

† 'परश्वहनि'—इति वि०।

‡ ऋ० वे० ६, ४, ३८, ३।

मिश्रयिता। किमर्थम्? "वीर्याय"* वीर्य-करणाय "उभा" उभौ "बाहू" "वृषणौ" कामानां वर्षकौ "या" यौ बाहू "वज्रम्" आयुधं "नि मिमिक्षतुः" परिगृह्णीतः॥ २॥ ७

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थ-खण्डे—

जनीयन्त इत्येकर्चं† प्रथमं सूक्तम्,‡

सैषोच्यते।

२ २ १ २ ३ १ २ ३ १ २

जनीयन्तोन्वग्रवःपुत्रीयन्तःसुदानवः।

१ २

सरस्वन्तꣳहवामहे॥ १¶॥ ८

"जनीयन्तः" [जायन्त आसु अपत्यानीति] जनयः जायाः ता इच्छन्तः,§ "पुत्रीयन्तः" पुत्रान् कामयमानाः, "सुदानवः" शोभन-दानाः, "अग्रवः" उपगन्तारो वयं "नु" अद्य‖ "सरस्वन्तं" तं देवं मध्यम-स्थानं "हवामहे" आह्वयामहे॥ १॥ ८

---

* 'वीर्याय—चतुर्थ्येषा तृतीया-स्थाने द्रष्टव्या, वीर्येण युक्तः'—इति वि॰।

† विवरणमते त्वेतत्सूक्तं प्रगाथात्मकं न त्वेकर्चं तथाच उत्तरद्वयमिमा अस्य ऋचस्यैव तृचस्य द्वितीया न तु सूक्तान्तरम्; मूलपाठदर्शनचाप्यानुकूल्यमिति ध्येयम्।

‡ 'इहाग्नौ विश्वजित्'—इति वि॰।

¶ ऋ॰ वे॰ ५, ६, १०, ४।

§ 'जनीयन्तः—जननं कुर्वन्तः'—इति वि॰।

‖ 'नु—इति पादपूरणः'—इति वि॰।

Digitized by Google

उत नइत्येकर्चं द्वितीयं सूक्तम्,

सैषोच्यते।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
उत नः प्रिया प्रियासु सप्तस्वसा सुजुष्टा।
१ २ ३ १ २
सरस्वती स्तोम्या भूत् ॥ १* ॥ ९

"उत" अपि च "नः" अस्माकं "प्रियासु" प्रियाणां मध्ये "प्रिया" प्रियतमा "सप्तस्वसा" गायत्र्यादीनि सप्त छन्दांसि स्वसारो यस्यास्तादृशी नदीरूपया स्तुत्या गङ्गाद्याः सप्त नद्यः स्वसारः "सुजुष्टा" सुष्ठु पुरातनैर्ऋषिभिः सेविता, एवम्भूता "सरस्वती" देवी "स्तोम्या"† भूतस्तोतव्या "भूत्" भवतु ॥ १ ॥ ९

अथ तत्सवितुर्वरेण्यमिति तृतीयसूक्तरूपा,‡

सैषा।

१ २ ३ १२ ३ १२ ३ १ २ १ १ २
तत्सवितुर्वरेण्यम्भर्गो देवस्य धीमहि।
२ १ १ २ ३ १ २
धियो यो नः प्रचोदयात् ॥ १¶ ॥ १०

---

* ऋ० वे० ४, ८, २१, ४।

† 'स्तोम्या—स्तोमानां क्रतूनाम् अथवा तृचपञ्चदशप्रभृतीनाम्'—इति वि०।

‡ अत्राप्यस्ति मतान्तरम्, तथाहि—विवरणमते संहितादि-समस्त-मूल ग्रन्थ-लिपि-दर्शनाचैतत् तृचं सूक्तम् एवञ्चापि मे सोमानं स्वरणमिति अग्न आयूंषीति च द्वे ऋचा-वस्थेव द्वितीय-तृतीये न तु सूक्तान्तरे इति विवेकः।

¶ ऋ० वे० २, ४, १०, ५।

"यः" सविता देवः "नः" अस्माकं "धियः" कर्माणि, धर्मादिविषया वा बुद्धीः "प्रचोदयात्" प्रेरयेत्, "तत्" तस्य "देवस्य" द्योतमानस्य "सवितुः" सर्वान्तर्यामितया प्रेरकस्य जगत्स्रष्टुः परमेश्वरस्य "वरेण्यं" सत्स्वरूपतया श्रेयतया च भजनीयं "भर्गः" अविद्या-तत्कार्ययोर्भर्जनात् भर्गः स्वयंज्योतिस्तेजः परब्रह्मात्मकं "धीमहि" वयं ध्यायामः। इद् भर्गो धियः प्रचोदयति तद् ध्यायाम इति समन्वयः। [ यद्वा, यः सविता सूर्यः 'धियः' कर्माणि 'प्रचोदयात्' प्रेरयति, तस्य 'सवितुः' सर्वस्य प्रसवितुः 'देवस्य' द्योतमानस्य सूर्यस्य 'तत्' सर्वैर्दृश्यमानीयतया प्रसिद्धं 'वरेण्यं' सर्वैः सम्भजनीयं 'भर्गः' पापानां तापकं तेजोमण्डलं 'धीमहि' ध्येयतया मनसा धारयेम। यद्वा, भर्ग-शब्देनान्नमभिधीयते 'यः' सविता देवः 'धियः' प्रचोदयति, तस्य 'देवस्य' प्रसादात् 'तद् भर्गः' अन्नादि-लक्षणं फलं 'धीमहि'] धारयामः तस्याधारभूता भवेमेत्यर्थः। भर्ग-शब्दस्यान्न-परत्वेवमाथर्वणिकवेद-च्छन्दसि—"सवितुर्वरेण्यं भर्गो देवस्य कवयोऽन्नमाहुः, कर्माणि धियस्तनुते प्रब्रवीमीति प्रचोदयात् सविता याभिरेतीति*। भर्गः—भ्रस्ज पाके (तु०उ०) असुन् "भ्रस्जोरोपधयोरमन्यतरस्याम् (६,४,४७)"—इति रोपधयोर्लोपो रमागमश्च, न्यङ्क्वादि-पाठात् कुत्वम् ( ७,३,५३ )। धीमहि—ध्यायते लिटि "बहुलञ्छन्दसि ( २,४,७६ )"—इति सम्प्रसारणं, व्यत्ययेनात्मनेपदम्; यद्वा धीङ् आधारे ( दि०आ० ) लिटि "बहुलञ्छन्दसि

---

* 'यः अस्मदीया बुद्धयः प्रकर्षेण चोदयति ध्यान-धारणा-समाधिभिः तस्य सवितुर्देवस्य दानादिभिर्गुणैर्युक्तस्य ततरं प्रविशाम इति सङ्क्षेपः'—इति वि०।

Digitized by Google

(२,४,७३)"—इति विकरणस्य लुक्। प्रचोदयात्—चोदयते-र्लेटि आडागमः, यद्वृत्तयोगादनिघातः, आगमस्यानुदात्तत्वे णित्स्वरः॥ १॥ १०

अथ

२ १ २ १ २
सोमानाᳬं स्वरणम्० ॥ १* ॥ ११

—इति,

१ २ १ २
अग्न आयूᳬंषि पवसे० ॥ १† ॥ १२

—इति, चतुर्थ-पञ्चम-सूक्तात्मैकयोर्द्वयो ऋचोः प्रतीके; ते चान्यत्राम्नाते (छ० आ०—२, १, ५, ५; १भा०३२८पृ०), (उ० आ०७, ११, १२, १)॥ १॥ ११——॥ १॥ १२

अथ तानःप्रक्तमिति तृचात्मकं षष्ठं सूक्तं,

तत्र,

१ २ ३ १ २
तानःप्रक्तम्पार्थिवस्य० ॥ १‡ ॥

—इति प्रथमाया ऋचः प्रतीकमिदं सा चान्यत्र (उ० ४,२, ४, ३) आम्नाता॥ १॥

---

* छ० आ० २, १, ५, ५ (१भा० ३२९पृ०) = ऋ० वे० १, १, ३४, १।

† उ० आ० ७, १, ११, १ = ऋ० वे० ७, २, १०, ४।

‡ उ० आ० ४, २, ४, ३ = ऋ० वे० ४, ४, ६, २।

Digitized by Google

अथ द्वितीया ।

३ २ ३ २ ३ १ २ ३ १२ २२
ऋतमृतेनसपन्तेषिरन्दक्षमाशाते ।

३ १ २ ३ १ २
अद्रुहादेवौवर्द्धेते ॥ २* ॥

"ऋतेन" उदकेन निमित्त-भूतेन "ऋतं" यज्ञं "सपन्ता" स्पृशन्तौ "इषिरम्" एषणवन्तं "दक्षं" प्रवृद्धं यजमानं हविर्वा "आशाते" व्याप्नुतः "अद्रुहा" अद्रोग्धारौ "देवौ" द्योतमानौ मित्रावरुणौ "वर्द्धेते" प्रवृद्धौ भवत ॥ २ ॥

अथ तृतीया ।

३ १ २ ३क २२ ३ १उ ३ १ २
वृष्टिद्यावारीत्यापेषस्पतीदानुमत्याः ।

३ २ ३ १ २
बृहन्तङ्गर्त्तमाशाते ॥ ३† ॥ १३

"वृष्टिद्यावा" वृष्ट्यर्थौ द्यौः स्तुतिर्ययोस्तौ वृष्टिद्यावा अथवा वृष्टि-वर्षिका द्यौरन्तरिक्षं याभ्यां तौ तादृशौ, "रीत्याप" [री-गति-रेषणयोः (क्र्या० प०)] रीतिः प्राप्तिः सैव आप्तिरभिमत-प्राप्तिर्ययोस्तौ तादृशौ, "इषः" अन्नस्य "पती" स्वामिनौ [वृष्टि-प्रदत्वात् स्वामित्वम्], "दानुमत्याः" दानमत्याः दातुमुचितायाः इत्यर्थः एतद्विशेषणम् एवम्महानुभावौ मित्रावरुणौ "बृहन्तं

* ऋ० वे० ४, ४, ६, ४ ।
† ऋ० वे० ४, ४, ६, ५ ।

Digitized by Google

महान्त "गर्त्त"* रथम् "आयाते" व्याप्रुतः अधितिष्ठतो यागार्थम् ॥ २ ॥ १३

अथ युञ्जन्तीति तृचात्मकं सप्तमं सूक्तम्,

तत्र प्रथमा।

२ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
युञ्जन्तिब्रध्नमरुषञ्चरन्तम्परितस्थुषः।

१ २ ३ २ ३ २
रोचन्तेरोचनादिवि ॥ १ †. ॥

इन्द्रो हि परमैश्वर्य-युक्तः परमैश्वर्यं चाग्निवाय्वादित्य-नक्षत्र-रूपेणावस्थानात् उपपद्यते "ब्रध्नम्" आदित्यरूपेणावस्थितम्, "अरुषम्" हिंसारहिताग्निरूपेणावस्थितं, "चरन्तं" वायुरूपेण सर्वतः प्रसरन्तमिन्द्रं "परि तस्थुषः" परितोऽवस्थिता लोकत्रय-वर्त्तिनः प्राणिनो "युञ्जन्ति" स्वकीये कर्मणि देवतात्वेन सम्बन्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्त्तिविशेषाणि "रोचना" नक्षत्राणि "दिवि" द्युलोके "रोचन्ते" प्रकाशन्ते [ अस्य मन्त्रस्योक्तार्थपरं ब्राह्मणा-न्तरे व्याख्यातम्—"युञ्जन्ति ब्रध्नमित्याह—असौ वा आदित्यो ब्रध्नः आदित्यमेवास्मै युनक्ति। अरुषमित्याह—अग्निर्वा अरुषः अग्निमेवास्मै युनक्ति। चरन्तमित्याह—वायुर्वै चरन् वायुमेवास्मै युनक्ति। परितस्थुष इत्याह—इमे वै लोकाः परितस्थुषः इमा-नेवास्मै लोकान् युनक्ति। रोचन्ते रोचना दिवीत्याह—नक्षत्रा-ण्येवास्मै रोचयतीति ॥ १ ॥

---

* 'गर्त्तं गरणीयम्'—इति वि०।

† ऋ० वे० १, १. ११, १ = य० वे० २३, ५।

अथ द्वितीया ।

२ १ १ ३ १ २ २ ३ १ १ २ १ २
युञ्जन्त्यस्यकाम्याहरीविपक्षसारथे ।
१ २ ३ १ ३ १ २
शोणाधृष्णूनृवाहसा ॥ २ * ॥

"अस्य" अश्वादि-शब्द-प्रतिपाद्यस्यादित्यादि-मूर्त्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य "रथे" "हरी" एतन्नामानौ द्वावश्वौ सारथयो "युञ्जन्ति" [ इन्द्र-सम्बन्धिनोरश्वयोर्हरिनामत्वं "हरी इन्द्रस्य"-"रोहितोऽग्नेः" ( निघ० १, १५, १-२ )—इति पठितत्वात् । कीदृशौ हरी ? "काम्या" कामयितव्यौ "विपक्षसा" विविधे पक्षसी रथस्य पार्श्वौ ययोस्तौ विपक्षसौ रथस्य द्वयोः पार्श्वयोर्योजिताविन्यर्थः,† "शोणा" रक्तवर्णौ, "धृष्णू" प्रगल्भौ, "नृवाहसा" नृणां पुरुषाणामिन्द्र-तत्सारथि-प्रमुखाणां वोढारौ ॥ २ ॥

अथ तृतीया ।

३ २ ३ १ २ ३ २ ३ १ २ ३ १ ३ ३ १ २
केतुङ्कृण्वन्नकेतवेपेशोमर्य्याअपेशसे ।
२ ३ १ २
समुषद्भिरजायथाः ॥ ३ ‡ ॥ १४

* ऋ० वे० १, १, ११, २ = य० वे० २३, ६ ।

† 'यव पक्षसी न विद्येते स विपक्षी रथः'—इति वि० ।

‡ ऋ० वे० १, १, ११, ३ = य० वे० २९, ३७ ।

हे "मर्त्ताः" मनुष्याः ! इदमाश्चर्य्यं पश्यतेत्यध्याहारः। किमाश्चर्य्यम्? इति तत्रोच्यते—आदित्यरूपोऽयमिन्द्रः "उषद्भिः" दाहकैः रश्मिभिः प्रतिदिनमुषःकाले वा सम्भूय "अजायथाः" उदपद्यत [ अथवा सूर्य्यस्यैवास्तमये मरणमुपचर्य्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते—हे मर्त्त्य ! प्रतिदिनं त्व मजायथा इति योज्यम् ]। किङ्कुर्वन्? "अकेतवे" रात्रावभिभूतत्वेन प्रज्ञान-रहिताय प्राणिने "केतुं कृण्वन्" प्रातः प्रज्ञानं कुर्वन्* "अपेशसे" रात्रावन्धकाराहृतत्वेनाभिव्यक्तत्वात् रूप-रहिताय पदार्थाय प्रातरन्धकार-निवारणेन "पेशः" [रूपनामैतत् (निघ० ३, ७, १०)] रूपमभि व्यज्यमानं कुर्वन् [ अकेतवे, अपेशसे—इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ ] ॥ ३ ॥ १२

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य

चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे—

अयं सोमइति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा।

२ १र २र ३ १ २ ३
अयꣳसोमइन्द्रतुभ्यꣳसुन्वे

१ २ ३ १ २
तुभ्यम्पवतेत्वमस्यपाहि।

---

* 'केतुर्ध्वजः तं कृण्वन्, अकेतवे ; यः कश्चित् मर्त्तः अकेतुरध्वजः तमपि केतुमन्तं कुर्वन्ति अतिबहुसम्पन्नत्वात्'—इति वि०।

२ ३१ १ ३१र १र ३२उ
त्व९ह्यं ग्ङचकृषेत्वंववृष

१ १२ १२ २३१ २
इन्दुम्मदाययुज्यायसोमम् ॥ १ * ॥

हे "इन्द्र!" यः सोमः इन्द्राय "तुभ्य" "सुन्वे" सूयते [ सु- नोतेः कर्मार्थे लटि "लोपस्त आत्मने पदेषु (७,१,४१)"—इति लोपः ] "तुभ्यं" त्वदर्थमेव "पवते" पूयते। त्वञ्च "अस्य" अमुं "पाहि" पिब "त्वं ह" "यम्" "इन्दुं" "सोमं" "चकृषे" करोषि "त्वं" च यं "ववृषे" वृतवानसि। किमर्थम्? "मदाय" मदार्थं "युज्याय" सहायाय [ सोम इन्द्राय बलकरत्वात् सहाय इति प्रसिद्धम्। यमेवं करोषि त्वं तं पाहीति समन्वयः ॥ १ ॥

अथ द्वितीया।

२३ २३१२३१२
सई९रथोनभुरिषाड़योजि

३१ ३१ २३ २३ १२
महःपुरूणिसातयेवसूनि।

२ ३ १२ ३क२र ३१
आदींविश्वानहुष्याणिजाता

२ ३१२३१२
स्वर्षातावनऊर्ध्वानवन्त ॥ २ † ॥

"स ईम्"‡सोऽयं "भूरिषाट्" भूतस्य भारस्य सोढा "रथो न" रथइव "अयोजि" युज्यते, कीदृशः सः? "महः" महान्।

* ऋ० वे० ७, ३, २४, १। † ऋ० वे० ७, ३, २४ २।

‡ 'ईम् पादपूरणे'—इति वि०।

Digitized by Google

किमर्थमभीति? "पुरूणि" बहूनि "वसूनि" धनानि "सातये" मह्यम् दातुम् "आर्यो" योगानन्तरं "विश्वा" विश्वानि कर्माणि "मनुष्याणि" मनुषो मनुष्याः तेषां सम्बन्धीनि "जाता" जातानि भक्षाद्विरोधीनि "अर्वा" अश्वाःखानि "वने" वननीये "स्वर्षाता" स्वर्षाते [—सङ्ग्रामनामैतत् स्वर्गलाभ-युक्ते सङ्ग्रामे* "गवन्त" गच्छन्तु [गवतिर्गति-कर्मा (२, १४, २९)। यद्वा, सोऽयं सङ्ग्रामे युद्धार्थिनः सङ्गच्छन्ति ॥ २ ॥

अथ तृतीया।

२ २उ ३ १र २र ३ १
शुष्मीशर्धोनमारुतम्पवस्व
२ ३ २उ ३ २
नभिशस्तादिव्यायथाविट्।
१ ३ २ ३ १ २ ३ १ २
आपोनमक्षुमतिर्भवानः
३ १ २ ३ २उ ३ १
सहस्राप्साःपृतनाषाड्नयज्ञः॥ ३ † ॥ १५

हे सोम! "शुष्मी" बलवांस्त्वं "शर्धो न मारुतं" मरुतां बलमिव "पवस्व"। तत्र दृष्टान्तमेव स्पष्टयति—"यथा" "दिव्याः" "विट्"‡ प्रजाः "अनभिशस्ताः" अभिशस्ता निन्दिताः अनि-

---

* 'स्वर्षाता—स्वर्लोकस्य दाता'—इति वि०।

† ऋ० वे० ७, ३, २४, ३।

‡ 'विट—इंविशी'—इति वि०।



Digitized by Google

न्दिताः* पवन्ते ["मरुतो वै देवानां विशः"—इति हि ब्राह्मणम्] किञ्च "आपो न" उदकानीव "मक्षु" क्षिप्रं पवमानस्त्वं "सुमतिः भव" "नः" अस्माकं। किञ्च, "सहस्राप्साः" [अप्स इति रूपनाम (निघ० ३, ७, ६)] बहुरूपस्त्वं † "पृतनाषाट् न" पृतनानामभिभवितेन्द्र इव "यज्ञः" यष्टव्यो भवसीति ॥ ३॥ १५

॥ इहवद्वासिष्ठम्॥ औहोवाहा३होयि। इन्द्रा। य

यꣳसोमाः। इन्द्रतु। भ्यꣳसुन्वायि। तुभ्यम्पवा। ता

इयितुवम्। अस्यपाही। तुवꣳहयाम्। चकृषे। त्वं

ववृषायि। इन्दुम्मदा। या३युजि। या३४३। या३

सोपमा६५६म्॥(१) सई ꣳरथो। नभुरि। षाडयोजी।

महःपुरू। णी३सात। यायिवहूनी। आदीविश्वा।

नहुषि। याणिजाता। स्वर्षाता। वनऊ। ध्वा३४३।

ना३वा५न्ता६५६॥(२) प्रुष्मोअर्षा। नमारु। तम्पव

* 'अनभिभूता—अभिभाव-रहिता'—इति वि०।

† 'बहुरूपा बहूदका इत्यर्थः'—इति वि०।

५ २ १ २ १ २र ३ ४ ५ २र १र
स्वा । अनभिश्रा । स्ता३दिवि । यायथावोट् । आपो

२ १ २ ३ ४ ५ १र १र ३र १ १
नमा । चू३सुम । तिर्भवानाः । औहोवाद्दा३होयि ।

२ १ १ र २ १ र २ १ ४
इहा । सद्रसाम्राः । पृतना । षा३४३ट् । ना३या५

आ६५६:(३) ॥ ५ * ॥ [१] १३

अथ त्वमग्नइति तृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १ ३ २ ३ १ २ ३ २
त्वमग्नयज्ञानाᳪ होताविश्वेषाᳪ हितः ।

३ २ ३ १ २ ३ १ २
देवेभिर्म्मानुषेजने ॥ १† ॥

हे "अग्ने !" "त्वं" "विश्वेषां" सर्वेषां समस्तरूपेण भिन्नानां "यज्ञानां" "होता" होम-निष्पादकोऽसि । यद्वा, यज्ञानां सम्बन्धी देवानामाह्वाता भवसि । कुतः ? इत्यत आह—यस्मात् त्वं "मानुषे" मनोः सम्बन्धिनि मनुष्ये "जने" यजमाने "देवेभिः" देवैः "हितः" होतृत्वेन निहितोऽसि तस्मादित्यर्थः ॥ १ ॥

---

* ऊ० गा० १५प्र० २ख० ५गा० ।

† छ० आ० १, १, १, २ (१भा० ८९ पृ०) = ऋ० वे० ४, ५, २१, १ ।

Digitized by Google

अथ द्वितीया ।

१ २ ३ १ २ ३ २ ३ १ २ ३ २
सनोमन्द्राभिरध्वरे जिह्वाभिर्यजामहः ।
१ २ १ २ ३ १ २
आदेवान्वक्षियक्षिच ॥ २ * ॥

हे अग्ने! "सः" त्वं "नः" अस्माकं "अध्वरे" यज्ञे "मन्द्राभिः" मदकरीभिः" स्तुतिभिर्वा "जिह्वाभिः" काल्यादिभिः† "महः" महतः देवान् यज हविर्भिस्तर्पय च। कथं तत्? इति चेत्, उच्यते—"देवान्" यष्टव्यानिन्द्रादीन् "आ वक्षि" आवह ततो "यक्षि च" यज च हवींषि तेभ्यो देहीत्यर्थः ॥२॥

अथ तृतीया ।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
वेत्थाहिवेधोअध्वनःपथश्चदेवाञ्जसा ।
१ २ ३ १ २
अग्नेयज्ञेषुसुक्रतो ॥ ३ ॥ १६

हे "वेधः" विधातः! "सुक्रतो" शोभन-कर्मन्! "देव" दानादि-गुण-युक्त अग्ने! त्वं "यज्ञेषु" दर्शपौर्णमासादि-यागेषु "अध्वनः" महामार्गान् "पथश्च" क्षुद्रमार्गांश्च "अञ्जसा"

---

* ऋ० वे० ४, ५, २१, २।

† काली, कराली, मनोजवा, सुलोहिता, सुधूम्रवर्णा, स्फुलिङ्गिनी, विश्वरूपा, लीला इति काल्यादयः।

‡ ऋ० वे० ४, ५, ११, ३।

मार्जवेन "वेत्थ" जानासि "हि" यस्मादेवं तस्मात् यज्ञ-मार्गात् भ्रष्टं यजमानं पुनस्तं मार्गं प्रापयेत्यर्थः ॥ ३ ॥ १४

अथ* होतादेवइति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा।

१ २ ३ १र २र ३ १ २ ३ १ २
होतादेवोअमर्त्यःपुरस्तादेतिमायया।

३ १ २ ३ १ २
विदथानिप्रचोदयन्॥ १ † ॥

"होता" होम-निष्पादकः "अमर्त्यः" मरण-रहितः "देवः" द्योतमानः "विदथानि" वेदितव्यानि कर्माणि "प्रचोदयन्" सोऽग्निः "मायया" कर्म-विषयाभिज्ञानेन युक्तः सन् "पुरस्तात्" कर्म-प्रारम्भ-काले एव "एति" अस्मानागच्छति॥ १ ॥

अथ द्वितीया।

३ १र २र ३ २ ३ १ २
वाजीवाजेषुधीयतेध्वरेषुप्रणीयते।

१ २ ३ १ ३ १ २ ३ २
विप्रोयज्ञस्यसाधनः॥ २ ‡ ॥

"वाजी" बलवान् अग्निः "वाजेषु" युद्धेषु "धीयते" देवैः शत्रु-हननार्थं निधीयते। किञ्च "अध्वरेषु" अग्नि-होत्रादिषु

---

* 'तत्नी विरूपकम्। इदाजीं मरावने भवान्याच्यानि'—इति वि०।

† ऋ० वे० ३, १, २९, १।

‡ ऋ० वे० ३, १, २९, २।

Digitized by Google

"प्रणीयते" अध्वर्य्वादिभिः प्रकर्षेणाहवनीयादि-स्थानेषु प्रक्षिप्यते अतएव "विप्रः" मेधावी सनग्निः "यज्ञस्य" अग्निहोत्रादेः "साधनः" साधको भवति ॥ २ ॥

अथ तृतीया।

२ १ २ २ १ २   २ २ ३ १ २ १ २
धियाचक्रेवरेण्योभूतानाङ्गर्भमादधे।

१ २   ३ २ ३ १ २
दक्षस्यपितरन्तना॥ ३ *॥ १७

योऽग्निः "धिया" आधान-पवमानेष्टि-रूपेण कर्मणा "चक्रे" आहवनीयरूपतया कृतोऽभूत् अतएव "वरेण्यः" सर्व्वैर्यजमानैः कर्माङ्गत्वेन वरणीयः यथाग्निः "भूतानां" स्थावर-जङ्गमात्मकानां भूतजातानामन्तः "गर्भं" स्वात्मानमेव गर्भरूपतया "आ दधे" सर्व्वत्र दधार "पितरं" सर्व्वस्य जगतः पालकं तमिममग्निं "दक्षस्य" दक्ष-प्रजापतेः† "तना" तनया वेदिरूपा भूमिर्दर्शपौर्णमासाग्निहोत्रादिकर्म-सिद्ध्यर्थं धारयति [भूमेर्दक्षदुहितृत्वे मन्त्रवर्णः—"अदितिर्ह्यजनिष्ठदक्षस्य दुहिता तव"—इति ॥ ३ ॥ १५

इति सामवेदार्थप्रकाशे-उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

* ऋ० वे० १, १, २९, २।

† 'दक्षस्य—यजमानस्य'—इति वि०।

अथ षष्ठे खण्डे—

आसुतेसिञ्चतमिति तृचात्मकं प्रथमं सूक्तम्,

तत्र प्रथमा ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २
आसुतेसिञ्चतश्रियꣳरोदस्योरभिश्रियम् ।

३ १ २ ३ २
रसादधीतवृषभम् ॥ १ * ॥

"सुते" दुग्धे गो-पयसि "श्रियं" श्रयणमाज्यं पयः "आसिञ्चत" आसिञ्चत् । कीदृशमाज्यं ? "रोदस्योः" [कर्मणि षष्ठी] द्यावापृथिव्यौ "अभिश्रियम्" अभिश्रयन्तम् अग्नि-संयोगात् तावत् पर्यन्तं प्रवृत्तमित्यर्थः [अथवा "तत्कावश्विनौ द्यावापृथिव्यावित्येके ( निरु० दै० ६, १ )"—इति यास्केनोक्तत्वात् अश्विनोरभिश्रियमित्यर्थः] । सेचनानन्तरं "रसा"† रसे आज्ये पयसि "वृषभं" वर्षकमग्निं "दधीत" धारयेत् [अजाया आग्नेयीत्वात् क्षीरस्याप्यग्नि-संयोजनमुचितम् "आग्नेयी वा एषा यदजा"—इति हि ब्राह्मणम् ॥ १ ॥

अथ द्वितीया ।

१ २ ३ २ ३ २ २ ३ १ २ २ ३ १ ३
तेजानतस्वमोक्याऽ३ꣳसंवत्सासोनमातृभिः ।

३ १ २ ३ १ २
मिथोनसन्तजामिभिः ॥ २ ‡ ॥

* ऋ० वे० ६, ५, १६, २ ।

† 'रसा—रसेन'—इति वि० ।

‡ ऋ० वे० ६, ४, १, ४ ।

Digitized by Google

"ते"* ता गावः "जानत" ज्ञानवत्यः [ अथवा सामान्या-कारेण ते इति पुन्निर्देशः। किम्? "स्वम्" स्वकीयम् "ओक्यम्" निवासं महावीरं तत्र दोग्धुमगमन्नित्यर्थः। तदेवाह— "वत्सासो न" यथा वत्साः "मातृभिः" जननीभिः सहतया सङ्ग-च्छन्ते जामिभिर्बन्धुभिः सहिता गावः "मिथः" प्रत्येकं "नसन्त" सङ्गच्छन्ते महावीरम् ॥ २ ॥

अथ तृतीया।

१ २ १ २ ३ १ २     ३ २ ३ १ १ २ १

उपस्रक्वेषुबप्सतःकृण्वतेधरुणन्दिवि।

१ २ ३ २उ ३ १ २

इन्द्रेअग्नानमःस्वः॥ ३ † ॥ १८

महावीरस्य "स्रक्वेषु" "बप्सतः" ज्वालया भक्षयतोऽग्नेः "नमः" अन्नं "धरुणम्" "इन्द्रे" "अग्ना"—इति वक्ष्यमाणत्वात् इन्द्राग्न्योर्धारकमन्नं "दिवि" अन्तरिक्षे‡ "उप कृण्वते" उप कुर्वते ऋत्विजः यदाग्निर्महावीरं दहति तदा तस्योपर्युभयविधं क्षीरम् आसेचयन्तीति शेषः॥ ३ ॥ १८

---

* 'इन्द्राग्नौ'--इति वि०।

† ऋ० वे० ६, ५, १६, ५।

‡ 'दिवि—द्युलोके इन्द्रे अग्नौ नमस्कारं कुर्वते सर्वंलोकप्राणधारकं'—इति वि०।

Digitized by Google

अथ तदिदासेति द्व्यृचात्मकं द्वितीयं सूक्तम्,

तत्र प्रथमा ।

१र २र ३ १ २ ३ १ २ १ २ ३ २ १ २ ३ १ २
तदिदासभुवनेषुज्येष्ठंयतोजज्ञउग्रस्त्वेषनृम्णः ।
१ १ २ ३ १र १र २ ३ २ ३ २उ ३ १ ३ १ २
सद्योजज्ञानोनिरिणातिशत्रूननुयंविश्वेमदन्त्यूमाः ॥ १* ॥

"तत्" जगत्कारणत्वेन सर्ववेदान्त-प्रसिद्धम्† "इत्" [शब्दोऽवधारणे] "भुवनेषु" [भू सत्तायां (भ्वा० प०)] सत्सु पृथिव्यादिषु लोकेषु मध्ये तत् जगत्कारणं ब्रह्मैव "ज्येष्ठं" प्रशस्ततमम् "आस" बभुव, तस्य परमार्थ-सत्वात् तद्व्यतिरिक्तानां व्यावहारिक-सत्वात् [यद्वा, ज्येष्ठं वृद्धतमं जगत्कारणत्वेन सर्वेषामादिभूतं बभूव । अस्ते लिँटि "छन्दस्युभयथा ( ३, ४, ११७ )"—इति सार्वधातुकत्वाद् "अस्तेर्भूः ( २, ४, ५२ )"—इति भूभावाभावः । यद्वा, वृद्धं तदेव ब्रह्म स्वप्रकाशतया सन्दीदीपे । अस गति दीप्त्यादानेषु ( भ्वा० उ० ), अस्माल्लिटि रूपम् ] "यतः" उपादानभूतात् यस्माद् ब्रह्मणः "उग्रः" उद्गूर्णः त्वेषनृम्णः प्रदीप्त-बलः सूर्य्यात्मकइन्द्रः "जज्ञे" जातो बभूव [ श्रूयते हि—"चक्षोः सूर्य्यो अजायत"—इति, "सूर्य्याचन्द्रमसौ धाता यथापूर्व्वमकल्पयत्"—इति च । "जनिकर्त्तुः प्रकृतिः ( १, ४, ३० )"—इति प्रकृतेरपादान-सञ्ज्ञायां यत इति पञ्चमी ।

* ऋ० वे० ८, ७, १, १ ।

† 'तत् इति पादपूरणः'—इति वि० ।

जघ्ने इति "गमहनेत्यादिनोपधा-लोपः ( ६, ४, ९८ ), "द्विर्वचनेऽचि ( १, १, ५९)"—इति तस्य स्थानिवद्भावात् द्विर्वचनादि, "यद्वृत्तान्नित्यम् ( ८, १, ६६)"इति—निघात-प्रतिषेधः]। स च "जज्ञानः" जायमानः "सद्यः" यौगं "शत्रून्" यातविहून् सन्देहादीन् राक्षसान् "नि रिणाति" निहिनस्ति [ यद्वा, उपासकानां पापरूपान् शत्रून् निहन्ति। यथा च "सद्यो ह्येव जातः पाप्मानमपहत"—इति। जज्ञान इति जनेर्लिटः कानचि रूपमेतत्। रिणाति—रीगति रेषणयोः क्रैयादिकः (प० ), "प्रादीनां ह्रस्वः ( ७, ३, ८० )"—इति ह्रस्वतम् ] "विश्वे" सर्वे जनाः [अवन्ति रक्षन्तीति] "ऊमाः" प्राणिनः [अवतेरौणादिको मन् प्रत्ययः "ज्वरत्वरेत्यादिना ( ६,४, २०) वकारोपधयोः स्थाने ऊठ्] सर्वे प्राणिनः "यं" सूर्यात्मकमुद्यन्तमिन्द्रम "अनु" लक्ष्य "मदर्थमुदगात् मदर्थमुदगात्"—इति "मदन्ति" हृष्यन्ति [ मदी हर्षे ( दि० प०) व्यत्ययेन शप् ( ३, १, ८५ ) ; तथाच ब्राह्मणम्—"भूतानि वै विश्वऊमास्तएनमनुमदन्ति उदगादुदगादिति"—इति। तैत्तिरीयकञ्च—"तस्मात्सर्व एव मन्यते मां प्रत्युदगादिति"—इति। यद्वा, यं स्तुत्यादिभिर्मोद्यन्तमनुपश्चात् सर्वे प्राणिनः अभीष्ट-प्राप्त्या हृष्यन्ति "अनुर्लक्षणे ( १, ४, ८४ )" —इति अनोः कर्मप्रवचनीयत्वात् "कर्मप्रवचनीय-युक्ते द्वितीया ( २, ३, ८ )" स इन्द्रो जघ्ने इत्यन्वयः॥ १॥

अथ द्वितीया ।

२ १र २र१२ १ २ १ १ २ १ २ ३ १ २

वावृधानःशवसाभूर्योजाःशत्रुर्दासायभियसन्दधाति ।

१ २ ३ १ २ ३ १ २ १ २ ३ १ ३१ १ २

अव्यनच्चव्यनच्चसस्निसन्तेनवन्तप्रभृतामदेषु ॥ २ * ॥

"शवसा" बलेन "वावृधानः" वर्द्धमानः, अतएव "भूर्योजाः" "शत्रुः" शातयिता† इन्द्रः "दासाय" उपक्षय-कारिणे असुरे‡ "भियसं" भीतिं "दधाति" विदधाति करोति "अव्यनत् च व्यनत् च" [ विविधमनिति श्वसितीति व्यनत्, स-प्राणकं जङ्गमं, तद्विलक्षणमव्यनत् स्थावरम् ] तदुभयमपि "सस्नि" संस्नातम् इन्द्रेण सम्यक् शोधितं भवति [स्नातेः "आदृगमहनः(३,२,१७१)" —इति व्यत्ययेन कर्मणि किन् प्रत्ययः । यद्वा, अन्तर्णीत-ण्यर्थात् कर्त्तर्येव किन्, वृष्ट्यादिना सम्यक् स्नापयिता शोधयिता भवति ; "न लोकाव्यय (२,३,६९)"—इति कर्मणि षष्ठ्याः प्रतिषेधः] । शिष्टः पादः प्रत्यक्षकृतः—हे इन्द्र ! "ते" तव "मदेषु" हर्षेषु हविषा स्तुत्या च जन्येषु सत्सु "प्रभृता" प्रभृतानि प्रकर्षेण भृतानि पोषितानि वा सर्वाणि भूतजातानि "सन्नवन्त" सङ्गच्छन्ते स्तोतुं हवींषि च दातुं समूहीभवन्तीत्यर्थः [ नवतिर्गति-कर्मा ( निघ० २,१४,२९) । प्रभृता—प्रपूर्वात् बिभर्त्तेः कर्मणि निष्ठा, "शे-

* ऋ०वे० ८, ७, १, २ ।

† शत्रुः—प्रथमैकवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् शत्रोः'—इति वि० ।

‡ 'दासाय—चतुर्थ्येकवचनं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम् । दासस्य दस्यु-स्वभावस्य'—इति वि० ।

छन्दसि बहुलम् (६, १, ७०)"—इति शे-लोपः, "गतिरनन्तरः (६, २, ४८)"—इति गतेः प्रकृतिस्वरत्वम् ॥ २ ॥

अथ तृतीया।

२उ ३१२ ३ २३ २उ ३२उ ३ १ २
त्वेक्रतुमपिवृञ्जन्तिविश्वे द्विर्यदेतेत्रिर्भवन्त्यूमाः।
३ १र २र ३ १२ ३
स्वादोःस्वादीयःस्वादुनासृजा
२३२उ ३१२३ १२
समदःसुमधुमधुनाभियोधीः॥ ३ * ॥ १८

हे इन्द्र! "त्वे" त्वयि "सुपां सुलुक् (७, १, ३८)"—इति सप्तम्येकवचनस्य शे आदेशः] "विश्वे" सर्वे यजमानाः "क्रतुम्" अनुष्ठेयं कर्म "वृञ्जन्ति" समापयन्ति "अपि" [—शब्दो ब्राह्मणोक्तः सर्वभूतानां सर्वमनसां समुच्चयार्थः सर्वाणि पृथिव्यादीनि भूतानि सर्वेषां प्राणिनां मनांसि सर्वे यज्ञक्रतवश्च व्याप्ते त्वय्येव यजमानैः परिसमाप्यन्त इत्यर्थः। तथा च ब्राह्मणम्—"त्वयीमानि सर्वाणि भूतानि मनांसि सर्वे क्रतवोऽपि वृञ्जनीत्येतदाह" —इति] "यद्" यस्मात् "एते" "ऊमाः" तर्पकाः† [अवतेस्तर्पणार्थादौणादिको मन् प्रत्ययः,"ज्वरत्वरेत्यादिना (६,४,२०)वकारोपधयोरूठ्] ईदृशा यजमानाः पूर्वमेकाकिनः सन्तः पश्चात् "द्विः" द्विवारं स्त्रीरूपेण पुंरूपेण च जाताः सन्तः पुनरपत्येन सार्धं "त्रिः" त्रिवारं जन्मभाजो भवन्ति। एक एवात्मा स्त्रीपुं-

* ऋ० वे० ८, ७, १, ३।

† 'ऊमाः देवाः'—इति वि०।

Digitized by Google

रूपेण जायते "अर्द्धो वा एष यत् पत्नीति" श्रुतेः। पुत्रोऽप्यात्मैव— "आत्मा वै पुत्रनामासि"—इति श्रुतेः। यत एवमेभिर्द्वन्द्वा भवन्ति, ततो वा गम्यते त्वय्येवानुष्ठितं सर्वं कर्म परिसमापयन्तीति; तथा च ब्राह्मणम्—"द्वौ द्वौ सन्तौ मिथुनौ प्रजायेते प्रजापत्यै"—इति] हे इन्द्र! त्वञ्च "स्वादोः" प्रियाद् गृहधनादेरपि "स्वादीयः" स्वादुतरं प्रियतरमपत्यं"स्वादुना" स्वादुभूतेन मातापित्रात्मकेन* "संसृज" संयोजय [यद्वा, "स्वादुना" मिथुन-भावेनोत्पन्नं तदपत्यमपि संयोजय]! एतदेवाह—"अदः" अपत्यं "मधु" मधुरं "मधुना" मद-हेतुना मिथुनान्तरेण पौत्रेण वा "सु" सुष्ठु "अभि योधीः" अभियोधय अभितः क्रीड़य† [धातूनामनेकार्थत्वात् युध्यति रत्र क्रीड़ार्थे वर्त्तते। "मिथुनं वै स्वादु प्रजा स्वादु"—इत्यादि ब्राह्मणमत्रानुसन्धेयम्॥ ३॥ १९

२ ४ ३र ४ ५ ३र २ ३र ४र ५ १
॥ प्रैतम्॥ तदिदासभुव। नेषू३४औहोवा। ज्या
२ र र १ ७ ५ ५
यिष्ठंयतोजन्यउग्रः। त्वेषानृम्णा२३४ः। औहोवा। स
२र १ २ १ ३
द्योजज्ञानः। नायिरा२३यिणा। तिशा२। जू२३४
५ १ २ २ १ ३ ५र
ना। नुयंविश्वायिमा३दा। ऊम्मायि। त्यू२मा२३४औ

---

* 'स्वादोः सोमस्य, स्वादीयः आस्वादनकराः, स्वादुना सोमेन'—इति वि०।

† 'सुमधु—शोभनं मधु सोमाख्यं, मधुना—द्रोणकलशेन, अभियोधीः—आभिमुख्येन योधयति'—इति वि०।

र ४र र ३ ४ ५ ३र २ ३र ४र ५ १
होवा ॥(१) वावृधानःश्रव। साभू३४औहोवा। रा
र २र र र १ २ ५
ओजाःशत्रुर्हासायभिय। सन्दाधा१ता२३४यि। औ हो६
५ १ २ १ २ १ ३
हा। अञ्यनश्वञ्य। नात्वा२३सा। त्विसा२म्। ता२३
५ १ २ १ १ ३
४यिना। वन्तप्रभार्त्ता३मा। ऊम्नायि। दा२यिषू२३
३र र ३र ४ ३ ४ ५ ३ २ ३र ४५ ५
४औहोवा ॥(२) त्वं क्रतुमपिवृ। जता ३ ४ औहोवा।
१ २र र र १ २ ५ ५
वायिश्वेद्विय्यं दतेत्विभं। वन्ताऊ१मा२३४ः। औ हो६ हा।
२र १र र १ र १ र २ १ ३
स्वादोःस्वादीयःस्वादु। नासा२३र्ज्जा। समा२। दा२
५ १ २ २ १ ३ ५र
२४ःहु। मधुमधूना३भा। ऊम्नायि। यो२धा२३४औ
र २ ५
होवा। वा२३४हु(३) ॥ १२ * ॥ [१] १९

अथ त्रिकद्रुकेष्विति तृचात्मकं तृतीयं सूक्तम्,

तत्र प्रथमा ।

१ २ ३ १र २र ३ २
त्रिकद्रुकेषुमहिषोयवाशिरन्तुविशुष्म
३ १ २र ३ १ २ ३ १ २ ३ १
स्तृम्पत्सोममपिबद्विष्णुनासुतंयथावशम् ।

---

* ऋ० मा० १३प्र० २व० ११सा० ।

Digitized by Google

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र
सईम्ममादमहिकर्म्मकर्त्तवे महामुरुᳩ

२र ३ २ ३ १ ३ १र २र ३ १र २र
सैनᳩसश्चद्देवोदेवᳩसत्यइन्दुःसत्य मिन्द्रम् ॥ १* ॥

"महिषः" महान् पूज्यः "तुविशुष्मः" बहु-बलः "तृम्पत्" [तृप प्रीणने तुदादिः (प०)] तृप्यन् इन्द्रः "त्रिकद्रुकेषु" ज्योतिर्गौरायुरित्येतन्नामकेषु आभिप्लविकेष्वहःसु "सुतम्" अभिषुतं "यवाशिरं" यवमयसक्तुभिर्मिश्रितम् [आङ्पूर्वस्य श्रीणातेः क्विपि "अपस्पृधेथाम् (६,१,३६)"—इत्यादिना "शिरइत्यादेशः" तं "सोमं" "विष्णुना" सह "अपिबत्" "यथावशम्" अवशत् पूर्वं यथा तं सोमं तथा अपिबत् [वश कान्तौ (अदा०प०) "बहुलञ्छन्दसि (२,४,७३)"—इति शपो लुगभावः] पीतः "सः" सोमः "महां" महान्तम् "उरुं" तेजसा विस्तीर्णम् "ईम्" एनम् इन्द्रं "ममाद" अमादयत्। किमर्थम्? "महि" महत् वृत्र-हननादि-लक्षणं कर्म कर्त्तवे कर्त्तुं "सत्यः" "इन्दुः" स्रवन् "देवः" द्योतमानः "सः" सोमः "सत्यं" यथार्थभूतं "देवं" सोमं कामयमानम् "ईम्" एनम् "इन्द्रम्" "सश्चत्" [सश्चतिर्व्याप्ति-कर्म्मा] व्याप्नोतु ॥

"तृम्पन्"-"तृम्पत्"—इति पाठौ, "सत्यइन्दुस्सत्यमिन्द्रम्"—"सत्यमिन्द्रंसत्यइन्दुः"—इति अस्मिन्नृचे प्रत्येकमृगवसाने व्यत्ययेन पाठौ ॥ १ ॥

* छ० आ० ५, २, ३, १ (१भा० ६०९ पृ०) = ऋ० वे० २, ६, २८, १।

अथ द्वितीया ।

१ २ ३ १र १र ३ १र २र
साकञ्जातःक्रतुनासाकमोजसाववक्षिथ

३ २ ३ २ ३क २र ३ १उ १ १ २
साकंवृद्धोवीर्यैःसासहिर्मृधोविचर्षणिः ।

१ ३ २ १ ३ १उ १ २ ३ १ १ ३ १ २
दाताराधस्तुवतेकाम्यंवसुप्रचेतनसैनꣳ

१ २ १ २ ३ १र २र ३ १र २र
सश्चद्देवोदेवꣳसत्यइन्दुःसत्यमिन्द्रम् ॥ * २ ॥

हे इन्द्र! त्वं "क्रतुना" कर्मणा प्रज्ञया वा "साकं" सह "जातः"† "साकम्" "ओजसा" बलेन "ववक्षिथ" विश्वं वोढुमिच्छसि [ वहेः सन्नन्तस्य लिटि मन्त्रत्वादाम् न भवति ]। किञ्च हे "प्रचेतन" प्रकृष्ट-ज्ञानेन्द्र! त्वं "वीर्यैः" शत्रु-हननादि-लक्षणैः पराक्रमैः "साकं" "वृद्धः" प्रवृद्धः "मृधः" हिंसकान् सङ्ग्रामान् वा "सासहिः" ["न लोकाव्ययेति (२,३,६९) षष्ठी-प्रतिषेधः] तेषामभिभविता‡ "विचर्षणिः" पुण्यकृतोऽपुण्यकृतश्च विशेषेण द्रष्टा "स्तुवते" स्तोत्रं कुर्वाणाय यजमानाय "राधः" साकं "काम्यं" प्रार्थनीयं "वसु" धनं "दाता" सन् ववक्षिथेति समन्वयः। सैनमिति परोक्ष-निर्द्देशः सिद्धार्थः॥

"प्रचेतन"—इति छन्दोगानां विशेष-पाठः ॥ २ ॥

---

* ऋ० वे० १, ६, २८, २ ।

† 'साकं जातः सदा जातः सद्यो वा जातः'—इति वि० ।

‡ 'सासहिः—साधनशीलः'—इति वि० ।

अथ तृतीया ।

१ २ १ १　२ १ २ ३ १ १ ३ १
अधत्विषीमाँ अभ्योजसा क्रिविं* युधा
२ ३१र २र　३ २ ३ १ २
भवदा रोदसी अपृणदस्य मज्मना प्र वावृधे ।
१ २ ३ १ ३२३१ १　३ १ २ ३
अधत्तान्यं जठरे प्रेमरिच्यत प्र चेतय
१ २　३ २३ २ ३ १र २र ३ १र २र
सैनं सश्चद्देवो देवं सत्यं इन्दुः सत्यमिन्द्रम् ॥ ३†॥२०

"अध" अथ सोमपानादनन्तरं "त्विषीमान्" इन्द्रः "ओजसा" बलेन "क्रिविं" क्रिवि-नामासुरं‡ "युधा" युद्धेन "अभ्यभवत्" अभिभूतवान् । किञ्च स इन्द्रः "रोदसी" द्यावापृथिव्यौ "आ अपृणत्" स्व-तेजसा समन्तात् पूरयामास । तथा "अस्य" पीतस्य सोमस्य "मज्मना" बलेन "प्र वावृधे" प्रकर्षेण वर्द्धते [यद्वा, 'अस्य' क्रिवेः असुरस्य 'मज्मना' सारेण 'रोदसी' अपूरयत् स इन्द्रः सोमं द्विधा विभज्य "अन्यं" भागं स्वकीये "जठरे" "अधत्त" । "ईम्" एनम् अपरं भागं देवेभ्यः "प्रारिच्यत" प्रारेचयत् [एतेनार्द्धमिन्द्राय अर्द्धमन्येभ्योऽपि देवेभ्य इत्युक्तं भवति ।

---

* "क्रिविं"—इति क० पु० पाठः ।

† ऋ० वे० २, ६, २८, २ ।

‡ 'क्रिविं—कूपस्थानीयम्'—इति वि० ।

तथाच तैत्तिरीयकम्—"यत् सर्व्वेषामर्द्धमिन्द्रं प्रति तस्मादिन्द्रो देवतानां भूयिष्ठभाक्तमः"—इति]। हे इन्द्र! त्वं "प्रचेतय" एवम्भूतं सोमं देवांश्च सम्यक् ज्ञापय प्रापयेत्यर्थः। अन्यत् पूर्व्ववत् ॥

"प्रचेतय"—इति विशेष-पाठः ॥ २ ॥ २०

इति सामवेदार्थप्रकाशे उत्तराग्रन्थस्य त्रयोदशस्याध्यायस्य

षष्ठः खण्डः॥ ६ ॥

---

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन् ।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ १३ ॥

॥ इति षष्ठः प्रपाठकः* ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-

श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-

चार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे

उत्तराग्रन्थे त्रयोदशोऽध्यायः ॥ १३ ॥

---

* 'षष्ठः प्रपाठकः परिसमाप्तः समाप्तश्चैतद्गवा मध्यमग्रामसंघतम्'—इति वि०।

Digitized by Google